आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७८

नारायणभट्टविरचितः

# त्रिस्थलीसेतुः ।

एतत्पुस्तकं

वे० शा० सं० रा० गोखले इत्युपाह्वैर्गणेशशास्त्रिभिः

संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३७

ख्रिस्ताब्दाः १९१५



मूल्यं पादोनरूपकचतुष्टयम् । रु० ( ३।१२ ) ।

## आदर्शपुस्तकोल्लेखपत्रिका ।

अस्य नारायणभट्टविरचितत्रिस्थलीसेतोः पुस्तकं शृङ्गेरीमठस्थ-सर्वाधिकारिरामशास्त्रिभिर्दत्तम् । अस्य लेखनकालः संवत् १८४९.

ॐ तत्सद्ब्रह्मणे नमः ।

नारायणभट्टविरचितः

# त्रिस्थलीसेतुः ।

सुरमुनिदितिजेन्द्रैः सेव्यते योऽस्ततन्द्रै-
र्गुरुतरदुरितानां का कथा मानवानाम् ।
स्वभुवि सुकृतकर्तुर्वाञ्छितावाप्तिहेतु-
र्जयति विजितयागस्तीर्थराजः प्रयागः ॥ १ ॥
वाणी वाणीपतेर्यस्या वर्णनायामणीयसी ।
तीर्थश्रेणिमणिर्वेणी स्वर्निःश्रेणिः प्रवर्ण्यते ॥ २ ॥

## अथ प्रयागप्रकरणम् ।

नन्वनुष्ठानक्रमेणानुष्ठेयं निरूप्यम् । न चात्रास्त्यनुष्ठानक्रमः । स हि द्वेधा । एकप्रयोगविधिपरिगृहीतानामेककर्तृकत्वावगमे सत्यवश्याकाङ्क्षिते क्रमे पाञ्चमिकश्रुत्यादिषट्कान्यतरेण वाऽऽग्नेयादिवद्भवति । भिन्नप्रयोगविधिपरिगृहीतानामपि वचनाद्दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत् । तत्र न तावत्प्रयागकाशीगयायात्राणामेकः प्रयोगविधिरस्ति । न च घटते पृथक्काम्यत्वादेतासाम् । नापि श्रुत्यादिषट्कान्यतरक्रमबोधकमस्ति । अत एव त्रिस्थलीयात्रामहं करिष्य इति सामान्यतो वा प्रयागादियात्राः करिष्य इति विशेषतो वा युगपत्संकल्पो न घटते । अमुककामस्त्रिस्थलीयात्रां कुर्यादिति वा प्रयागकाशीगयायात्राः कुर्यादिति वैकस्य प्रयोगविधेरभावात् । किंचैकप्रयोगविधौ सति राजसूयादिवत्समुदायादेव फलं भवेन्न तु प्रत्येकम् । तथा च प्रत्येकं फलश्रवणव्याघातः । प्रयागस्थस्य च काशीयात्रा गयायात्रा च निष्फला स्यात् । एवं गयादिस्थस्यापि काश्यादियात्रेति । एकैकयात्रया द्वयद्वययात्रया वोपरतस्य मृतस्य वा यात्राधेयर्थ्यं च । न हि फलसाधनसमुदायैकदेशादाग्नेयादेः फलं भवति । किंच यद्येकः प्रयोगविधिः स्यात्तदा कश्चिदेको वैकल्पिको वाऽनियतः क्रमः स्यात् । न च सोऽस्ति । प्राच्याः स्वसौकर्येण गयादिक्रमेण कुर्वन्ति । दाक्षिणात्यादयः प्रयाग-

क्रमेण । अन्ये काश्यादिक्रमद्वयेनेति । अथवेष्टिवत्समुदायान्तर्गत्या पृथक्फलसाधनताभ्युपेत्य सर्वमिदं परिह्रियते । तन्न । तत्र हि क्षत्रियकर्तृकराजसूयाख्यसमुदायमध्यपाते प्रमाणान्तरेण निश्चिते तदन्तर्गतावेष्टेर्यदि ब्राह्मणो यजेतेत्यादिबोधितब्राह्मणकर्तृकत्वासंभवादेतयाऽन्नाद्यकाममिति च पृथक्फलश्रुतेर्द्वैविध्यमाश्रितम् । न त्वत्र तथा किंचिदस्ति समुदायान्तर्गतेरुक्तदूषणत्वात् । एकप्रयोगविधौ च सतीदं कल्प्यं स च नास्तीत्युक्तमेव । न च त्रिस्थलीसमाख्ययैकप्रयोगविधिकल्पनम् । समाख्याया विनियोगमात्रप्रमाणत्वात् । सप्तपुर्यादिसमाख्यायामतिप्रसङ्गात् । प्रचयसिद्धसमुदायेन षट्चितिकोऽग्निः सप्तसंस्थो ज्योतिष्टोम इतिवदुपपन्नत्वाच्च । तस्मान्नैकप्रयोगविधिबलाद्युगपत्संकल्पोपपत्तिः । अथ भिन्नप्रयोगविधिविधेयत्वेऽपि युगपत्कर्तव्यताप्रसक्तावनेकगृहदाहादिनिमित्तक्षामवत्यादिवत्तन्त्रतया युगपत्संकल्प उपपाद्येत । तच्च न । तादृशी हि नित्यानां नैमित्तिकानां नित्यनैमित्तिकयोर्वा नियतकालतया युगपत्प्रसक्तिसंभवाद्भवेत्तन्त्रता । केवलकाम्यानां तु युगपत्प्रसक्तिरेव नास्तीति कथं तन्त्रता । न च संभवति । न्यूनातिरिक्तमार्गगमनरूपतया समानकालताभावात् । किंच । यद्येतादृशेऽपि तन्त्रं भवेत्तर्हि मार्गस्थसर्वतीर्थान्युल्लिख्य तन्त्रेण यात्राः करिष्य इति संकल्पं सर्वः कुर्यात् । को हि फलाधिक्यं नेच्छति । उद्दिश्यतीर्थयात्रैव संकल्प्यत इति चेत् । न । किमुद्देश्यमित्येवानिर्णयात् । तस्मान्न युगपत्संकल्पः संभवति किंत्वन्तिममेव तीर्थमुद्दिश्य संकल्पः कार्यः । आन्तरालिकं तु सर्वं प्रासङ्गिकम् । अतः 'अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति' इतिवचनात्तद्यात्राया अर्धमेव फलं स्नानश्राद्धादेस्तु सर्वमेव । तेन दाक्षिणात्यः पाश्चात्यो वा गयायात्रामेव संकल्पयेत्प्रयागकाश्यादि तु तस्य प्रासङ्गिकम् । प्राच्यस्तु प्रयागयात्रां संकल्पयेद्गयाकाश्यादि तस्य प्रासङ्गिकमिति । यद्वा दाक्षिणात्येनाऽऽदौ प्रयागयात्रैव तन्मात्रसंकल्पपूर्वकं कार्या ततः प्रयागे काशीयात्रां संकल्प्य तां कुर्यात् । ततः काश्यां गयायात्रां संकल्प्य तां कुर्यात् । एवं प्राच्यादिनाऽपि गयादिक्रमेण यात्राः कार्याः । तत्र च तत्तन्मार्गगतारतम्याच्चत्तद्यात्राफलमपि तारतम्यापन्नं दूरस्थसमीपस्थकर्तृकयात्रायामिव संपूर्णमेव भवति । प्रयासतारतम्ये फलतारतम्यस्य 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्' [जै० १।२।१।२२ ]

इत्यत्र सूत्रे जैमिनिमुनिनोक्तत्वादित्यलं प्रसक्तेन। तत्सिद्धमेतत्प्रयागादि-यात्राणामेकप्रयोगविध्यभावान्न श्रुत्याद्यन्यतरेण क्रम इति। नापि भिन्नप्र-योगगृहीतानामपि दर्शपूर्णमाससोमवद्वाचनिकः क्रमः। तादृशवचना-भावात्। यद्यपि च क्वचित्पुराणे कश्चित्पाठक्रमः स्यात्तथाऽपि तेन नानुष्ठानक्रमनियमः संभवति। केवलकाम्येष्वैन्द्राग्न्यादिषु पाठक्रमेणानु-ष्ठानक्रमनियमाभावस्य 'अङ्गवत्क्रतूनामानुपूर्व्यम्' [ जै० सू० ५। ३। १२। ३२ ] इत्यधिकरणे स्थापितत्वात्। तस्मात्प्रयागादिक्रमेणा-नुष्ठाने प्रमाणाभावान्न प्रयागनिरूपणं प्रथमं संगच्छत इति चेत्। सत्यमेतत्सर्वं तथाऽपि प्रयाग आवश्यककर्तव्यबाहुल्याभावाल्लाघवेन प्रथमं प्रयागप्रस्तावो नासंगत इत्यलं भूयसा।

तत्र प्रथमं तावत्सामान्यतः प्रयागमाहात्म्यमुच्यते—'विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते' इति तीर्थमहिमज्ञानरूपाया विद्यायास्ती-र्थफलप्राप्त्यौपयिकत्वोक्तेः। स्वतन्त्रतयाऽपि फलश्रवणाच्च। अत एव कौर्मे प्रयागमाहात्म्यं प्रक्रम्योक्तम्—

इदं सत्यं द्विजातीनां साधूनामात्मजस्य च।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च॥
इदं धन्यमिदं स्वर्ग्यमिदं मेध्यमिदं सुखम्।
इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम्॥
महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम्।
अत्राधीत्य द्विजोऽध्यायं निर्मलत्वमवाप्नुयात्॥
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं तथा शुचिः।
जातिस्मरत्वं लभते नाकपृष्ठे च मोदते॥

तथा—इदं कल्ये समुत्थाय पठतेऽथ शृणोति वा।
मुच्यते सर्वपापेभ्यो मृत्युलोकं न गच्छति॥

मात्स्येऽपि प्रयागमाहात्म्यं शृण्वित्युपक्रम्य—
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः।

इत्युक्तम्। तस्मान्माहात्म्यमवश्यं वक्तव्यमिति तदुच्यते। तत्राऽऽ-श्वलायनानां परिशिष्टश्रुतिः 'सितासिते सरिते यत्र संगते तत्राऽऽप्लु-तासो दिवमुत्पतन्ति। ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृ-

तत्वं भजन्ते । शाखान्तरे तु 'ते वै जनासो अमृतं भजन्ते ' इति पठन्ति। अयमर्थः—सितासिते श्वेतकृष्णे गङ्गायमुने सरिते नद्यौ यत्र संगते संगमं प्राप्ते । सरिच्छब्दादापं चैव हलन्तानामिति भागुर्युक्त आपि कृते सरिते इति द्विवचनं छान्दसं वा । एतेन प्रयाग उपलक्षितः । तत्राऽऽप्लुतासः स्नाता जना दिवं स्वर्गमुत्पतन्ति । आज्जसेरसुगित्यसुकि कृत आप्लुतास इति निष्पद्यते। एवं स्नानफलमुक्त्वा तत्र प्राणत्यागे फलमाह ये वै इति । वै त्वर्थे प्रमाणान्तरप्रसिध्द्यर्थे वा । ये धीरास्तन्वं तनुं शरीरं विसृजन्ति म्रियन्त इत्यर्थः । ते जनासो जनाः प्राणिनोऽमृतत्वं मोक्षं भजन्ते प्राप्नुवन्ति । अमृतत्वमिति कैमुतिकन्यायेन फलान्तरस्याप्युपलक्षणम् । ' अमि पूर्वः ' इत्यत्र वा छन्दसीतिपूर्वसूत्रानुवृत्तेः पूर्वरूपाभावपक्षे यणादेशेन तन्वमिति द्वितीयैकवचनम् । जनास इति पूर्ववदसुक् । धीरा इत्यनेन धैर्यमवलम्ब्य बलादपि प्राणत्यागे न दोष इति सूचयति । एतच्चाग्रे सम्यग्व्यक्ती भविष्यति । एतेन धीरा विघ्नोत्पत्तावपि धैर्यमालम्ब्याऽऽशरीरपातमत्र स्थित्वाऽन्ते स्वभावादेव ये तनुं विसृजन्ति म्रियन्त इति व्याख्या प्रत्युक्ता । वाग्यतास्तिस्रो दोहयित्वेतिवत्साक्षात्संबन्ध आनर्थक्याभावेनाङ्गावतारन्यायासंभवात् । हीषि(मि)ति वृष्टिकामाय निधनमित्यादिषु प्राप्तिवदश्रुतसंबन्धेऽत्र बीजाभावात् । धीरा इत्यस्य वैयर्थ्यापाताच्चेत्यलम् । तथा तत्रैव परिशिष्टान्तरम्—' यत्र गङ्गा च यमुना च यत्र प्राची सरस्वती । यत्र सोमेश्वरो देवस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ' इति । मत्स्यपुराणे—

युधिष्ठिर उवाच—भगवञ्छ्रोतुमिच्छामि पुराकल्पे यथा श्रुतम् ।
ब्रह्मणा देवमुख्येन यथावत्कथितं मुने ॥
कथं प्रयागगमनं नराणां तत्र कीदृशम् ।
मृतानां का गतिस्तत्र स्नातानां तत्र किं फलम् ॥
ये वसन्ति प्रयागे तु ब्रूहि तेषां च किं फलम् ।
एतत्सर्वं समाख्याहि परं कौतूहलं हि मे ॥

मार्कण्डेय उवाच—कथयिष्यामि ते वत्स यच्चेष्टं यच्च तत्फलम् ।
पुरा ऋषीणां विप्राणां कथ्यमानं मया श्रुतम् ॥

तथा—तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति संगताः ।
अन्ये च बहवस्तीर्थाः सर्वपापहराः शुभाः ॥
न शक्याः कथितुं राजन्वर्षपूगशतैरपि ।

संक्षेपेण प्रवक्ष्यामि प्रयागस्य तु कीर्तनम् ॥
षष्टिं धनुःसहस्राणि यानि रक्षन्ति जाह्नवीम् ।
यमुनां रक्षति सदा सविता सप्तवाहनः ॥
प्रयागं तु विशेषेण स्वयं रक्षति वासवः ।
मण्डलं रक्षति हरिर्दैवतैः सह संगतः ॥
तं वटं रक्षति शिवः शूलपाणिर्महेश्वरः ।
अधर्मेणाऽऽवृतो लोको नैव गच्छति तत्पदम् ॥

तथा—तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
समागता महाभागा यमुना यत्र निम्नगा ॥
यत्र संनिहितो देवः साक्षाद्देवो महेश्वरः ।
दुष्प्रापं मानुषैः पुण्यं प्रयागं तु युधिष्ठिर ॥
देवदानवगन्धर्वा ऋषयः सिद्धचारणाः ।
तत्रोपस्पृश्य राजेन्द्र स्वर्गलोकमुपाश्नुते ॥

वाराहपुराणे—पुनरन्यत्प्रवक्ष्यामि गुह्यं सर्वजनप्रियम् ।
सुलभं धर्मकर्माणां दुर्लभं पापकर्मणाम् ॥
वटमूलेति विख्यातं रहस्यं परमं मम ।
ब्रह्मणा यत्र चेष्टं हि क्रतूनां च शतैरपि ॥
तत्प्रयागमिति ख्यातं सर्वपापप्रणाशनम् ।
ब्रह्मणः क्षेत्रमित्युक्तं त्रिषु लोकेषु विश्रुतम् ॥

तथा—तत्र चैकार्णवे सर्वे नष्टे स्थावरजङ्गमे ।
सर्वत्र जलपूर्णे तु न प्राज्ञायत किंचन ॥
एतद्वटं महादेवि विष्णुमूलं महाद्रुमम् ।
मम प्रसादात्सुश्रोणि तदेकं तिष्ठते तदा ॥
एतद्वटस्य माहात्म्यं देवि केचिन्न जानते ।
मुक्त्वा भागवताञ्शुद्धान्मम कर्मपरायणान् ।
एतत्कृतोदका भद्रे दिवं यान्ति न संशयः ॥

मात्स्ये—यत्र ते द्वादशाऽऽदित्यास्तपन्ते रुद्रमाश्रिताः ।
निर्दहन्ति जगत्सर्वं वटमूलं न दह्यते ॥
नष्टचन्द्रार्कपवनं यदा चैकार्णवं जगत् ।
स्वपते तत्र वै विष्णुर्यजमान पुनः पुनः ॥

यजमानेति राजसंबोधनम् ।

देवदानवगन्धर्वा ऋषयः सिद्धचारणाः ।
सर्वे सेवन्ति तत्तीर्थे गङ्गायमुनसंगमम् ॥
तथा—श्रवणात्तीर्थराजस्य नामसंकीर्तनादपि ।
मृत्तिकालम्भनाद्वाऽपि नरः पापात्प्रमुच्यते ॥
तथा—गङ्गा च यमुना चैव उभे तुल्यफले स्मृते ।
केवलं ज्येष्ठभावेन गङ्गा सर्वत्र पूज्यते ॥
तथा—यथा सर्वत्र लोकेषु ब्रह्मा सर्वत्र पूज्यते ।
तथा सर्वेषु भूतेषु प्रयागः पूज्यते बुधैः ॥
प्रयागस्तीर्थराजश्च सत्यमेव युधिष्ठिर ।
ब्रह्माऽपि स्मरते नित्यं प्रयागं तीर्थमुत्तमम् ॥
तीर्थराजमनुप्राप्य न चान्यत्किंचिदर्हति ।
को हि देवत्वमासाद्य मानुषत्वं चिकीर्षति ॥
अनेनैवानुमानेन त्वं ज्ञास्यसि युधिष्ठिर ।
यथा पुण्यमपुण्यं वा तथैव कथितं मया ॥
तथा—शृणु राजन्प्रवक्ष्यामि माहात्म्यं पुनरेव तु ।
नैमिषं पुष्करं चैव गोतीर्थं सिन्धुसागरम् ॥
गया च धेनुकं चैव गङ्गा सागरमेव च ।
एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः ॥
दश तीर्थसहस्राणि त्रिंशत्कोट्यस्तथा पराः ।
प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः ॥
त्रीणि चाप्यग्निकुण्डानि येषां मध्ये तु जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
यमुना गङ्गया सार्धं संगता लोकपावनी ॥
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ।
प्रयागं राजशार्दूल कलां नार्हति षोडशीम् ॥
तथा—प्रयागं समधिष्ठाय कम्बलाश्वतरावुभौ ।
भोगवत्यथ या चैषा वेदिरेषा प्रजापतेः ॥
तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ।
प्रजापतिमुपासन्त ऋषयश्च तपोधनाः ॥
यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ।

यस्मात्पुण्यतमो नास्ति त्रिषु लोकेषु भारत ॥
प्रभावात्सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो ।

तथा—पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ॥
उत्तरेण प्रतिष्ठानाच्छाल्मली ब्रह्म तिष्ठति ।
महेश्वरो वटो भूत्वा तिष्ठते परमेश्वरः ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
रक्षन्ति मण्डलं नित्यं पापकर्मनिवारणाः ॥
तस्मिञ्जुह्वत्स्वयं पापं नरकं स न पश्यति ।

तथा—प्रजापतेरिदं क्षेत्रं प्रयागमिति विश्रुतम् ॥
एतत्पुण्यं पवित्रं च प्रयागं च युधिष्ठिर ।
स्वराष्ट्रं कुरु राजेन्द्र भ्रातृभिः सहितो भव ॥

तथा—पापौघभूरिभारस्य दाहहेतुं प्रजापतिः ।
प्रयागं विदधे भूयः प्रजानां च हिते रतः ॥

पद्मपुराणे—

सूनास्थानमिदं सम्यक्सितासितजलं किल ।
पापरूपपशूनां हि ब्रह्मणा विहितं पुरा ॥
सितासिता तु या धारा सरस्वत्या विगर्भिता ।
तं मार्गं ब्रह्मलोकस्य सृष्टिकर्ता ससर्ज वै ॥

भविष्ये—

कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि च ।
तानि सर्वाणि सेवन्ते गङ्गायमुनसंगमम् ॥

अग्निपुराणे—

'वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदं परम् ।
प्रयागे ये च विष्ण्वाद्या देवा मुनिवराः स्थिताः ॥
सरितः सागराः सिद्धा गन्धर्वाप्सरसस्तथा ।

एतदग्रे मात्स्यसदृशान्येव भूयांसि वचांसि—

तथा—प्रयागं समधिष्ठानं कम्बलाश्वतरावुभौ ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥
तत्र देवाश्च यज्ञाश्च मूर्तिमन्तः प्रयागके । इत्यादि ।

ब्रह्मपुराणे—

न माधवसमो देवो न च गङ्गासमा नदी ।
न तीर्थराजसदृशं क्षेत्रमस्ति जगत्त्रये ॥

पुलस्त्यतीर्थयात्रायाम्—

ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् ।
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥
लोकपालाश्च सिद्धाश्च नियताः पितरस्तथा ।
सनत्कुमारप्रमुखास्तथैव च महर्षयः ॥
अंगिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे ।
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रधरास्तथा ॥
सरितः सागराश्चैव गन्धर्वाप्सरसस्तथा ।
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥

इत्यादीनि बहूनि प्रयागगततीर्थादिप्रतिपादकानि वचनानि मत्स्यपुराणतुल्यान्येवेति न लिख्यन्ते । धौम्यतीर्थयात्रायाम्—

पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर संगमं लोकविश्रुतम् ॥
यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद्भरतसत्तम ॥

ब्रह्मपुराणे—

पश्चिमाभिमुखी गङ्गा कालिन्द्या यत्र संगता ।
देवानां दुर्लभं तत्र चेतरेषां तु किं पुनः ॥

तथा—ओमित्येकाक्षरं ब्रह्म परब्रह्माभिधायकम् ।
तदेव वेणी विज्ञेया सर्वसौख्यप्रदायिनी ॥
अकारः शारदा प्रोक्ता प्रद्युम्नस्तत्र जायते ।
उकारो यमुना प्रोक्ताऽनिरुद्धस्तज्जलात्मकः ॥
मकारो जाह्नवी गङ्गा तत्र संकर्षणो हरिः ।
एवं त्रिवेणी विख्याता वेदबीजं प्रकीर्तिता ॥

तथा—वेदमाता तु सावित्री त्रिपदी या चतुष्पदा ।
स एव तीर्थराजोऽयं त्रिवेण्या यत्र संगमः ॥
अन्यतीर्थसमानेन प्रयागं मनुते नरः ।

रौरवादिषु घोरेषु नरकेषु पतत्यसौ ॥

तथा—दिवि भुव्यन्तरिक्षे च पातले विवरेषु च ।
तीर्थानि व्रतदानानि स्नानयज्ञतपांसि च ॥
सन्ति श्रेयःसाधनानि तानि सर्वाणि भारत ।
प्रयागगुणलेशानां नार्हन्ति कलया तुलाम् ॥

पाद्मे—अविमुक्ते विमुच्यन्ते तारकज्ञानजन्मना ।
विना ज्ञानं प्रयागेऽस्मिन्मुच्यन्ते सर्वजन्तवः ॥
क्षेत्राणामुत्तमं क्षेत्रं तीर्थानां च तथोत्तमम् ।
गङ्गायमुनयोर्योगं प्रवदन्ति महर्षयः ॥
सितासितोदकं तीर्थं ब्रह्माद्याः सर्वदेवताः ।
मुनयो मनवश्चैव सेवन्ते पुण्यकाङ्क्षिणः ॥
गङ्गा पुण्यनदी ज्ञेया यतो विष्णुपदोद्भवा ।
विरजा यमुना ब्रह्मंस्तयोर्योगमनुत्तमम् ॥

तथा—यानि क्षेत्राणि पुण्यानि समुद्रान्ते महीतले ।
तेषां पुण्यतमं ज्ञेयं प्रयागाख्यं महामुने । इत्यादि ॥

कौर्मे—षष्टिं धनुःसहस्राणि यानि रक्षन्ति जाह्नवीम् (?) ।
यमुनां रक्षति सदा सविता सप्तवाहनः ॥
प्रयागे तु विशेषेण स्वयं वसति वासवः ।
मण्डलं रक्षति हरिः सर्वदेवैश्च संमितः ॥
न्यग्रोधं रक्षते नित्यं शूलपाणिर्महेश्वरः ।
स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् ॥

तथा—दश तीर्थसहस्राणि षष्टिः कोटयस्तथा पराः ।
तेषां सांनिध्यमत्रैव तीर्थानां कुरुनन्दन ॥

तथा—यत्र गङ्गा महाभाग बहुतीर्थसमागता ।
सिद्धिक्षेत्रं हि तत्क्षेत्रं नात्र कार्या विचारणा ॥
क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः ।
दिवि तारयते देवांस्तेन सा त्रिपथा स्मृता ॥

तथा—सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ।
गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ॥

इष्ट्वाऽत्रैव महायज्ञैः सृष्टिकामः प्रजापतिः ।
अवाप सृष्टिसामर्थ्यं ततः सृष्टिं चकार सः ॥
अत्र नारायणः सस्नौ सपत्नीकः सितासिते ।
तदैव लब्धवाँल्लक्ष्मीं भार्याममृतमन्थने ॥
उषित्वा तत्र षण्मासान्स्नात्वा वेण्यां यथेच्छया ।
त्रिपुरं पातयामास ह्येकबाणेन शूलधृक् ॥
वासवस्य तु शापेन स्वर्गभ्रष्टा पुरोर्वशी ।
स्वर्गकामाऽत्र सा सस्नौ भेजे स्वर्गं ततोऽचिरात् ॥
पुत्रं वंशधरं लेभे ययातिं नहुषो मुने ।
पुत्रकामः प्रयागे हि स्नात्वा पुण्ये सितासिते ॥
धनकामः पुरा शक्रः स्नातो ह्यत्र द्विजोत्तम ।
धनदस्य निधीन्सर्वांस्तज्जहार स मायया ॥
नारायणो नरश्चैव वर्षाणामयुतं पुरा ।
अनाहारः प्रयागेऽस्मिन्कृतवान्धर्मसंग्रहम् ॥
जैगीषव्योऽत्र संन्यासी दृशधर्मरतो द्विज ।
अणिमादिगुणान्भेजे धर्मसिद्धिं च दुर्लभाम् ॥
कश्यपोऽत्र तपस्तेपे शिवाराधनतत्परः ।
अस्मिंस्तीर्थे भरद्वाजः षष्ठ्यां वै सप्तमोऽभवत् ॥

कश्यपादिऋषिपट्के सप्तमो जात इत्यर्थः ।

अस्मिन्क्षेत्रे पुरा विप्र क्षेत्रज्ञस्यापरोक्षताम् ।
योगस्य फलसिद्धिं च लेभिरे सनकादयः ॥

तथा—अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ।
पुण्यक्षेत्रे कृतं पापं प्रयागे तीर्थनायके ॥

पाद्मे—अन्यक्षेत्रकृतं पापं तत्क्षणादेव भामिनि ।
प्रयागे विलयं याति पापं तीर्थकृतं विना ॥

रामायणेऽयोध्याकाण्डे भरद्वाजवचनम्—

अवकाशो विविक्तोऽयं रमणीयश्च राघव ।
गङ्गायमुनयोश्चैव संगमो लोकविश्रुतः ॥

युद्धकाण्डेऽपि सीतां प्रति रामः—

भरद्वाजाश्रमश्चैष प्रयागमभितः शिवः ।
दृश्यते देवि गङ्गैषा नदी त्रिपथगा शिवा ॥
यमुना च महावेगा सांनिध्यं चोत्तमं तयोः ।

स्कान्दे—तीर्थराजं परित्यज्य योऽन्यस्मात्काममिच्छति ।
भारताख्ये महावर्षे स कामं नाऽऽप्नुयात्स्फुटम् ॥

काशीखण्डे–प्रथमं तीर्थराजं तु प्रयागाख्यं सुविश्रुतम् ।
कामिकं सर्वतीर्थानां धर्मकामार्थमोक्षदम् ॥

तथा प्रयागमधिकृत्य—

सितासिते सरिच्छ्रेष्ठे यत्राऽऽस्तां सुरदुर्लभे ।
यत्राऽऽप्लुतो नरः पापः परं ब्रह्माधिगच्छति ॥
क्षेत्रं प्रजापतेः पुण्यं सर्वेषामेव दुर्लभम् ।
लभ्यते पुण्यसंभारैर्नान्यथाऽर्थस्य राशिभिः ॥

तथा—यज्वनां पुनरावृत्तिर्न प्रयागार्द्रवर्ष्मणाम् ।
यत्र स्थितः स्वयं साक्षाच्छूलटङ्को महेश्वरः ॥
तत्राऽऽप्लुतानां जन्तूनां मोक्षमार्गोपदेशकः ।
तत्राक्षयवटोऽप्यस्ति सप्तपातालमूलवान् ॥
प्रलयेऽपि यमारुह्य मृकुण्डतनयोऽवसत् ।
हिरण्यगर्भो विज्ञेयः स साक्षाद्वटरूपधृत् ॥
तत्समीपे द्विजान्भक्त्या संभोज्याक्षयपुण्यभाक् ।
यत्र लक्ष्मीपतिः साक्षाद्वैकुण्ठादेत्य मानवान् ॥
श्रीमाधवस्वरूपेण नयेद्विष्णोः परं पदम् ।
श्रुतिभिः परिपठ्येते सितासिते सरिद्वरे ॥
तत्राऽऽप्लुताङ्गा ह्यमृतं भवन्तीति विनिश्चितम् ।

शिवलोकादित्याद्युक्त्वा—

स्नातुं माघे समायान्ति प्रयागमरुणोदये ।
दिगङ्गनाः प्रार्थयन्ति यत्प्रयागानिलानपि ॥
तेऽपि नः पावयिष्यन्ति किं कुर्मः पङ्गवो वयम् ।
अश्वमेधादियागाश्च प्रयागस्य रजः पुनः ।
तुलितं ब्रह्मणा पूर्वं न ते तद्रजसा समाः ।
धर्मतीर्थमिदं सम्यगर्थतीर्थमिदं परम् ।
कामिकं तीर्थमेतच्च मोक्षतीर्थमिदं ध्रुवम् ॥
ब्रह्महत्यादिपापानि तावद्गर्जन्ति देहिषु ।
यावन्मज्जन्ति नो माघे प्रयागे पापहारिणि ॥

सरस्वती रजोरूपा तमोरूपा कलिन्दजा ।
सत्त्वरूपा च गङ्गाऽत्र नयन्ति ब्रह्म निर्गुणम् ॥
इयं वेणी हि निःश्रेणी ब्रह्मणो वर्त्म यास्यतः ।
जन्तोर्विशुद्धदेहस्य श्रद्धाश्रद्धाप्लुतस्य च ॥

तथा—पापिनां यानि पापानि प्रसह्य क्षालितान्यहो ।
तच्छुद्ध्यै सेव्यते तीर्थैः प्रयागमधिकं ततः ।

तथा ब्रह्मा—
सर्वेभ्योऽपि हि तीर्थेभ्यस्तीर्थराजो विशिष्यते ।
स्वर्गदो मोक्षदश्चैव सर्वकामफलप्रदः ॥
प्रयागस्तन्मम क्षेत्रं तीर्थराज इति स्मृतः ।

इत्यादिसकलपुराणप्रसिद्धमहिमत्वात्प्रयागस्यालं बहुलेखनेन ।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुभट्टनारायणविरचिते त्रिस्थलीसेतौ प्रयागप्रकरणे प्रयागमहिमा ॥ १ ॥

---

## अथ प्रयागस्मरणमहिमा ।

---

मात्स्ये—प्रयागं संस्मरन्नित्यं सहास्माभिर्युधिष्ठिर ।
स्वयं प्राप्स्यसि राजेन्द्र स्वर्गलोकं न संशयः ॥

स्कान्दे—बहु वाऽल्पतरं वाऽपि पापं यस्य नराधिप ।
प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ॥
प्रयागं स्मरमाणश्च यस्तु प्राणान्परित्यजेत् ।
ब्रह्मलोकमवाप्नोति वदन्ति मुनिपुंगवाः ॥
सर्वकामप्रदा वृक्षा मही यत्र हिरण्मयी ।
ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति ॥ इत्यादि ।

अथ नाममहिमा स्कान्दे—
मज्जागतानि पापानि बहुजन्मार्जितान्यपि ।
प्रयागनामश्रवणात्क्षीयन्तेऽतीवविह्वलम् ॥
नाममात्रस्मृतेर्यस्य प्रयागस्य त्रिकालतः ।
स्मर्तुः शरीरे नो जातु पापं वसति कुत्रचित् ॥

ब्राह्मे—तीर्थराजं तु ये यान्ति ये स्मरन्ति सदा भुवि ।
ते सर्वपापनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ इत्यादि ।

अथ प्रयागशब्दनिर्वचनं स्कान्दे—

प्रकृष्टं सर्व यागेभ्य प्रयागमिति गीयते ।
दृष्ट्वा प्रकृष्टं यागेभ्यः पुष्टेभ्यो दक्षिणादिभिः ॥
प्रयागमिति तन्नाम कृतं हरिहरादिभिः ।

ब्राह्मे—प्रकृष्टत्वात्प्रयागोऽसौ प्राधान्याद्राजशब्दवान् ।

अत्रोभयथा पुराणे प्रयोगादुभयलिङ्गः प्रयागशब्दः । तत्र तीर्थक्षेत्रादिशब्दसामानाधिकरण्ये क्लीबता । तीर्थराजादिशब्दसामानाधिकरण्ये पुंलिङ्गतेति वृद्धाः ।

तथा—एतमाश्रित्य तीर्थानि राजसेवकवन्नृणाम् ।
पापारीन्नाशयेयुर्यत्तीर्थराजस्ततः स्मृतः ॥

एतदाश्रयोऽस्मिन्स्वपापक्षालनम् ।

अथ प्रयागगमनं काशीखण्डे—

जन्मान्तरेष्वसंख्येषु यः कृतः पापसंचयः ।
दुष्प्रणोद्यो हि नितरां व्रतैर्दानैस्तपोजपैः ॥
स तीर्थराजगमनोद्यतस्य शुभजन्मनः ।
अङ्गेषु वेपतेऽत्यर्थं द्रुमो वातहतो यथा ॥
ततः क्रान्तार्धमार्गस्य प्रयागहृढचेतसः ।
पुंसः शरीरान्निर्यातुमपेक्षेत पदान्तरम् ॥

पदान्तरं स्थानान्तरम् ।

कौर्मे—प्रयागगमनं श्रेष्ठं नराणां पापकर्मणाम् ।
तत्र देवो महादेवो रुद्रो विश्वामरेश्वरः ।
सहाऽऽस्ते भगवान्ब्रह्मा स्वयंभूरपि दैवतैः ॥

तथा—न मित्रवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागगमनं प्रति ॥

मात्स्ये—भगवन्केन विधिना गन्तव्यं धर्मनिश्चयैः ।
प्रयागे यो विधिः प्रोक्तस्तं मे ब्रूहि महामुने ॥

मार्कण्डेय उवाच—

कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम् ।
आर्षेणैव विधानेन यथादृष्टं यथाश्रुतम् ॥

प्रयागतीर्थयात्रार्थी यः प्रयाति नरः क्वचित् ।
बलीवर्दसमारूढः शृणु तस्यापि यत्फलम् ॥
नरके वसते घोरे गवां क्रोधो हि दारुणः ।
सलिलं च न गृह्णन्ति पितरस्तस्य देहिनः ॥
ऐश्वर्यलोभान्मोहाद्वा गच्छेद्यानेन यो नरः ।
निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत् ॥

तथा—अज्ञानेनापि यस्येह तीर्थयात्रादिकं भवेत् ।
सर्वकामसमृद्धः स स्वर्गलोके महीयते ॥
स्थानं च लभते नित्यं धनधान्यसमाकुलम् ।

ब्राह्मे—प्रयागाभिमुखो भूत्वा पादमेकमपि प्रभो ।
स्मरन्नागच्छते जन्तुः सर्वपापैः प्रमुच्यते ॥

अत्र यद्यप्यविशेषेण पापक्षयमात्रं श्रुतं क्षये चाभावत्वाद्वैजात्यं न संभवति तथाऽपि दूरदूरतरदूरतमासन्नासन्नतरासन्नतमदेशागमनभेदेन प्रयासन्यूनाधिकतया ‘ सर्वत्वमाधिकारिकम् ’ [ जै० १।२।१।१६ ] इति न्यायात्प्रतियोगिकृतं विशेषमालोच्य सर्वपापक्षयो द्रष्टव्यः । प्रयासाधिक्ये फलसाम्यायोगादिति ।

अथ दर्शनं काशीखण्डेऽसंख्यजन्मार्जितपापं प्रकृत्य—

माघ्यान्नेत्रातिथीभूते तीर्थराजे महात्मनः ।
पलायते द्रुततरं तमः सूर्योदये यथा ॥

पाद्मे प्रयागं प्रकृत्य विष्णुः—

ब्रह्महत्यादिपापानि सप्तजन्मार्जितान्यपि ।
दर्शनादस्य तीर्थस्य विनाशं यान्ति तत्क्षणात् ॥

कौर्मे—दर्शनात्तस्य तीर्थस्य नामसंकीर्तनादपि ।
मृत्तिकालभनाद्वाऽपि नरः पापात्प्रमुच्यते ॥

तथा—एवं दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् ।
मुच्यते सर्वपापेभ्यः शशाङ्क इव राहुणा ॥

ब्राह्मे—गङ्गायमुनयोर्मध्ये गुप्ता यत्र सरस्वती ।
तस्य दर्शनमात्रेण पूतो भवति पातकी ॥

तथा—तीर्थराजप्रयागस्य दर्शनं भुवि दुर्लभम् ।
किं पुनः स्नानपानानां फलं जानाति योऽबुधः ॥

नारदीये—गङ्गायमुनयोर्योगो ज्ञेयस्तत्राप्यनुत्तमः ।
यस्य दर्शनमात्रेण नरा यान्ति परां गतिम् ॥

तत्रापीति । प्रकृतत्वात्तीर्थमध्ये । अत्रापि मानसब्रह्महत्यादिमहापातकस्याध्यवसितादेश्चोपपातकस्य क्रमेण सप्तजन्मासंख्यजन्मार्जितस्य योग्यतया स्थानसामान्याच्च नाशोऽध्यवसेयः । अथ प्रवेशः—

कौर्मे—प्रयागं विशतः पुंसः पापं नश्यति तत्क्षणात् ।
तथा—न ते जीवन्ति लोकेऽस्मिन्यत्र तत्र युधिष्ठिर ।
ये प्रयागं न संप्राप्तास्त्रिषु लोकेषु वञ्चिताः ॥
मात्स्ये—पञ्च कुण्डानि राजेन्द्र येषां मध्ये तु जाह्नवी ।
प्रयागस्य प्रवेशात्तु पापं नश्यति तत्क्षणात् ॥

त्रीणि कुण्डानीति क्वचित्पाठः । कुण्डानि कूपाः । ते च प्रयागप्रतिष्ठानालर्कपुरेषु ज्ञेयाः ।

तथा—पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ।
प्रविष्टमात्रे तद्भूमावश्वमेधः पदे पदे ॥

अत्र प्रतिपदाश्वमेधफलमर्थवादः पापक्षय एव तु फलम् । तत्रापि प्रतियोगिवैलक्षण्यकृतं पूर्ववदेव वैलक्षण्यं कारणवैलक्षण्यानुसाराद्यथाकथंचित्कल्प्यम् ।

अथ प्रयागादिपरिमाणं मात्स्ये—
पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ।

अत्र ब्रह्मयूपं मध्ये शङ्कुं प्रकल्प्य सार्धयोजनद्वयपरिमितया रज्ज्वा वर्तुलक्षेत्रे निष्पादिते पञ्चयोजनं मण्डलं ज्ञेयम् । इदं व्यापकं क्षेत्रम् । एतद्व्याप्यं च प्रयागक्षेत्रम् । तत्प्रमाणं तु मात्स्ये—

आ प्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात् ।
कम्बलाश्वतरौ नागौ नागश्च बहुमूलकः ॥
एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ।

आ प्रतिष्ठानादित्यन्वयः । प्रतिष्ठानशब्देन तत्कूपो लक्ष्यते । ततश्च प्राच्यां कूपोऽवधिः । उत्तरतो वासुकिह्रदः । पश्चिमे कम्बलाश्वतरौ । दक्षिणे बहुमूलकः । एवं दिगवधिषूक्तेषु तेभ्यश्चतुरस्रसाधनप्रकारेण कोणेषु साधितेषु चतुरस्रं यत्संपद्यते तत्प्रयागक्षेत्रमिति संपिण्डितार्थः । एतन्मध्येऽपि वेणीक्षेत्रम् । तच्च विंशतिधनुष्प्रमाणम् ।

माघः सितासिते विप्र राजसूयैः समो भवेत् ।
धनुर्विंशतिविस्तीर्णे सितनीलाम्बुसंगमे ॥

इति पाद्मोक्तेः । वेण्या एव च सितासितमिति संज्ञान्तरम् । इदमेव क्षेत्रमवधिभिरुपलक्ष्योक्तम्—

कालिन्द्या उत्तरे कूले भागीरथ्याश्च पश्चिमे ।
वटस्य पूर्वदिग्भागे स्नातः किमनुशोचसि । इति ।

इदं च क्षेत्रं ती(ति)र एव न तु चतुरस्रम् । अत एवोत्तरावधिर्नोक्तः । एवं मण्डलप्रयागवेण्याख्यानि पूर्वपूर्वव्याप्यानि त्रीणि क्षेत्राणि । ब्रह्मपुराणे तु पञ्चक्रोशाख्यं क्षेत्रान्तरमुक्तम् । तीर्थानीति प्रक्रम्य—

पञ्चक्रोशस्य सर्वत्र यावन्तः परमाणवः ।
एकैकस्मिन्सदा सन्ति ह्यसंख्यानि पृथक्पृथक् । इति ॥

अत्रापि मध्यशङ्कुर्यूप एव वर्तुलं च क्षेत्रम् । यद्वा क्रोशशब्दोऽत्र योजनपरस्तेन मण्डलक्षेत्रमेवानेनोक्तं भवति । योजनधनुषोः प्रमाणं तु—

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् । इति ॥

धनुश्च दण्डसममेव ' चतुर्हस्तो धनुर्दण्डः ' इति मार्कण्डेयपुराणोक्तेः ' षण्णवत्यङ्गुलश्चैव धनुर्दण्डः प्रकीर्तितः ' इत्यादित्यपुराणाच्च ।

इति श्रीत्रिस्थलीसेतौ प्रयागप्रकरणे प्रयागादिपरिमाणम् ।

---

## अथ प्रयागवासः ।

---

मात्स्ये—प्रयागमनुगच्छेद्वा वसते वाऽपि यो नरः ।
सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥
स्कान्दे—तीर्थाभिलाषिभिर्मर्त्यैः सेव्यं तीर्थान्तरं न वै ।
अन्यत्र भूमिवलये तीर्थराजात्प्रयागतः ॥
तथा—ब्रह्महत्यादिपापानां प्रायश्चित्तचिकीर्षुणा ।
प्रयागं विधिवत्सेव्यं द्विजवाक्यान्न संशयः ॥

किं बहूक्तेन विप्रेन्द्र महोदयमभीप्सुना ।
सेव्यं सितासितं तीर्थं प्रकृष्टं जगतीतले ॥

इदमामरणविषयम् । यात्रामात्रार्थगमने तु मासं वसेत् ।

ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम् ॥
ब्रह्मचारी वसेन्मासं पितॄन्देवांश्च तर्पयेत् ।

इति मात्स्योक्तेः । अत्र मासमिति सामान्योक्तेर्यः कश्चिन्मासस्तत्रापि सावनः । माघे तु वक्ष्यमाणवाक्यैर्विशेषः । इति प्रयागप्रकरणे प्रयागवासफलम् ।

अथ वपनविचारः ।

काशीखण्डे—

सप्तधातुमयीभूततनौ पापानि यानि वै ।
केशेषु तानि तिष्ठन्ति वपनाद्यान्ति तान्यपि ॥

अत्र प्रकरणात्प्रयागे । तथाऽन्यत्र—

प्रयागे वपनं कुर्याद्गयायां पिण्डपातनम् ।
दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥
किं गयापिण्डदानेन काश्यां वा मरणेन किम् ।
कुरुक्षेत्रे च दानेन प्रयागे वपनं यदि ॥ इति ।

यदत्र वदन्ति मण्डने फलाकाङ्क्षायामार्थवादिकमेव फलं रात्रिसत्रवदन्वीयत इति तद्विचारासहम् । तत्र हि 'फलमात्रेयो निर्देशात्' [ जै० ४।३।८।११ ] इति सूत्रेणार्थवादे निर्दिश्यमानप्रतिष्ठायाः स्वरूपकल्पनाक्लेशाभावाल्लकारविपरिणामेन फलत्वमात्रधर्मकल्पनेन लाघवात्फलत्वं न तु स्वर्गादेः स्वरूपकल्पनया फलत्वकल्पनया च गौरवापादकत्वादित्युक्तम् । इह तु किं गयापिण्डदानेनेत्यत्र न किंचित्फलं निर्दिश्यते तेन क तन्न्यायावतारः । अथ प्रयागे यदि वपनं तर्हि गयापिण्डदानादिप्रयोजनं नास्तीति तत्तिरस्कारेण वपनविधानाद्गयापिण्डदानादिफलमेव वपनफलमर्थादुक्तं भवतीति यद्युच्येत तर्हि पितृद्वारा सुपुत्रावाप्तिमुक्तिस्वर्गलक्ष्मीप्राप्त्यादेस्तत्तत्प्रयोजनस्यानेकरूपत्वात्तावतः फलत्वकल्पने विपरीतं गौरवम् । तस्मात्प्रशंसामात्रमेवेदं प्रयागवपनस्य । फलं तु यानि कानि च पापानीति वपनमन्त्रनिर्दिष्टः पापाभावः सूक्त-

वाकगतायुराद्याशासनवत् । यत्तु कश्चित्—किं गयेत्यादिवचनं विध्यन्तराशेषत्वादर्थवाद एव न भवति तेन न रात्रिसत्रन्यायः । अर्थवादत्वप्रसिद्धिस्तु स्तुतितात्पर्यकत्वसाम्यात् । यद्यपि चायमर्थवादः स्यात्तथाऽपि पूर्ववचननिर्दिष्टप्रयागवपनादिविधिचतुष्टयेऽव्यवधाननिर्दिष्टवाराणसीतनुत्यागविधिशेष एवेतरनिन्दाद्वारा स्यात् । न चैतदुक्तं काश्यां वा मरणेन किमिति तस्यापि निन्दोक्तेः । तस्मान्नायमर्थवादः । किंच न निन्दा क्वापि फलसमर्पिका दृष्टा विधेयस्तुतावेव तात्पर्यात् । अन्यथा प्रातः प्रातरित्यादेरप्युदितहोमफलसमर्पकत्वापत्तेः । तस्मान्नाऽऽर्थवादिकं फलमिति तत्तु जल्पनमात्रम् । स्वतन्त्रपठितविधिशेषत्वाभावेऽप्युन्नीतविधिशेषत्वेन यदाग्नेयादिवाक्यवदर्थवादत्वोपपत्तेः । कल्पितस्यापि विधेस्तस्माच्छ्रुत्येकदेशः स इति न्यायेन शब्दस्यैव कल्पनादेकवाक्यत्वोपपत्तेश्च । किंच स्मृतिपुराणयोर्वेदमूलकत्वात्तद्वदेव विधिमन्त्रार्थवादवाक्यत्वेन त्रैविध्यमेव । तत्र किं गयेत्यादीनां विधिमन्त्रत्वे न स्त एव । अर्थवादत्वमपि यदि न स्यात्तदा चातूराश्यप्रसङ्गः । अपि च नार्थवादशब्दो जात्यादिनिबन्धनो येन स्तुतितात्पर्यकत्वसाम्यात्सिंहादिशब्दवद्गौणः स्यात्किंतु स्तुतितात्पर्यकत्वनिबन्धन एव । ततश्च प्रवृत्तिनिमित्तसाम्यादत्रापि मुख्य एव । द्वादशाहगवामयनाद्याह्वयोरिव प्रायणीयशब्दः । तेन संभवत्येवार्थवादत्वम् । अन्यथा—

ब्रह्मज्ञानेन किं कार्यं गोग्रहे मरणेन किम् ।
किं कुरुक्षेत्रदानेन यदि पुत्रो गयां व्रजेत् ॥

इत्यादीनामग्निपुराणादिवाक्यानां समानन्यायानां का गतिः । यच्चोक्तमर्थवादत्वे काशीमरणविधिशेषतैव स्यादिति । तदपि न युक्तम् । 'प्रयागे वपनं कुर्यात्' इत्युपक्रमात् 'प्रयागे वपनं यदि' इत्युपसंहाराच्च तस्यैव विधेयत्वात् । इतरनिन्दाद्वारा तत्स्तुत्यर्थमेव गयापिण्डदानादित्रयोपन्यासात् । अत एव किं गयेत्यादिना त्रयनिन्दा । यदपि निन्दा न फलसमर्पिकेति तदपि न । एतावता हैनसा युक्तो भवतीति निन्दाया अपि प्रत्यवायाभावफलसमर्पकत्वादित्यलम् । तस्मात्पूर्वयुक्तिरेव साधुः । तथाऽन्यदपि केचिदाहुः—

केशानां यावती संख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इत्यादिवाक्यवशात्प्रयागावच्छिन्नगङ्गायामपि मुण्डनं काम्यं प्राप्नोति। तत्र काम्ययोः प्रयागगङ्गामुण्डनयोर्नानाफलकामाधिकारिकत्वात्कामनयोश्च युगपदसंभवान्न तन्त्रेण प्रसङ्गेन वा युगपत्सिद्धिः। तथा च क्रमाकाङ्क्षायां गङ्गामुण्डनमादौ प्राप्तमात्राधिकारिकत्वात्। प्रयागमुण्डनं तु कालाश्रवणान्न तथा। यत्तु प्रयागप्राप्तिनिमित्तकं मुण्डनं तस्योपवासवत्प्राप्तिदिन एव कर्तव्यत्वात्काम्येनैव गङ्गामुण्डनेन प्रसङ्गसिद्धावपि काम्यं प्रयागमुण्डनमनियतकालत्वात्प्राप्तिदिनाद्दिनान्तरे प्रयागमण्डलाभ्यन्तरे क्वचिच्छुचिस्थले यूपसमीपे वाऽनुष्ठेयमिति तदिदममीमांसकसंमोहनं गङ्गामुण्डनवचसां प्रयागावच्छिन्नगङ्गापरत्वस्य साधारणविधावेव निराकरणात्। किंचैवं सति प्रयागवपनवचसां सायंप्रातर्वचनस्थानाभिषेकाद्गङ्गावपनवचसां च यावज्जीववचनस्थानापत्तेरेकवाक्यतया निमित्तसंकोचेनैकमेव वपनं विहितं स्यादिति क्व तन्त्रप्रसङ्गविचारावसरः। यदपि काम्ययोर्न प्रसङ्गस्तन्त्रं वेति तन्न। युगपत्प्रसक्तिमात्रस्य तत्र प्रयोजकत्वात्। तत्र च विशेषाग्रहणतद्ग्रहणे अवान्तरभेदके इत्यन्यदेव तत्। प्रस्तुते च युगपत्प्रसक्तिरस्त्येव। अपि च। यमलपुत्रजन्मनि जातेष्ट्योर्युगपदनेकगृहदाहादिनिमित्तेषु च क्षामवत्यादीनां भिन्नाधिकारिकाणामपि श्रौते तन्त्रं दृष्टमेव। स्मार्तेऽपि संक्रान्तिव्यतिपातामावास्यादिश्राद्धानां भिन्नाधिकारिकाणामपि युगपत्प्रसक्तौ हेमाद्र्यादिभिस्तन्त्रमङ्गीकृतमेव। किंच प्राप्तिनिमित्तकस्य प्रयागवपनस्य गङ्गावपनेनैव प्रसङ्गतो निर्वाहः समानकालतया त्वयाऽपि तावदङ्गीकृतः। न च नैमित्तिकप्रयागमुण्डनादत्यन्तातिरिक्तं काम्यं तन्मुण्डनं वक्तुं शक्यते। तस्यैव संयोगपृथक्त्वेनाग्निहोत्रादिवन्नित्यकाम्यतायाः संभवात्। तथा च यदि नैमित्तकस्य गङ्गामुण्डनेन निर्वाहस्तदा तदभिन्नस्य काम्यस्य कथं पृथगनुष्ठानमिति। किंचैवं काम्यं गङ्गामुण्डनमपि नैमित्तिकात्पृथक्प्रसज्येत समानन्यायात्। अपि च। इदं दिनान्तरमुण्डनं किं केवलकाम्यं प्राप्तिनिमित्तिकस्यैव वा फलान्वयः। नान्त्यः। नैमित्तिकस्य गङ्गामुण्डनेन प्रसङ्गसिद्धेस्त्वयाऽप्यङ्गीकारात्प्राप्तिदिनकर्तव्यतया दिनान्तरानुष्ठानविरोधात्। कामनोपनिपाते फलोल्लेखेन संकल्पवाक्यं तु केवलं भिद्येत न तु मुण्डनावृत्तिः। आद्ये तु कामनानां भूयस्त्वे काम्यप्रयागस्नानवत्प्रतिदिनमावर्तेत। न च

> संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि।
> मुण्डनं चोपवासं च ततो यत्नेन कारयेत्॥

इति वचनाद्द्दशमासाभ्यन्तर एकस्मिंस्तीर्थे पुनर्मुण्डननिषेधाद्नावृत्तिः। एतस्य नैमित्तिकोपवाससाहचर्याद्व्रजेदित्युक्तेश्च नैमित्तिकमुण्डनावृत्तिनिषेधपरतया काम्यविषयत्वाभावात्तीर्थाधिकरणकमुण्डनमात्रावृत्तिविषयत्वे पित्रादिमरणेऽपि मुण्डननिषेधप्रसङ्गात्। यत्तूच्यते—

गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत्।
स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत्॥

इत्यकरणे निन्दाश्रवणात्करणे च फलश्रुतेः प्रयागमुण्डनं नित्यकाम्यम्। तच्च सकृत्करणादेव शास्त्रार्थसिद्धेरेकस्यां यात्रायामेकमेवानियतकालं चेति तत्तु भ्रान्तभाषितम्। एतस्य वचनस्य प्रयागपरत्वाभावात्। अथ भास्करक्षेत्रपदेन प्रयाग उच्येत तन्न। प्रजापतिक्षेत्रत्वेन भास्करक्षेत्रत्वाभावात्। कोणादित्यादीनामेव भास्करक्षेत्रत्वस्य सामान्यविधावुक्तत्वात्। अस्तु वा प्रयागपरता तथाऽपि नित्यप्रयागमुण्डनस्य प्राप्तिदिनीयगङ्गामुण्डनेन प्रसङ्गसिद्धिसंभवात्कालान्तरत्वकल्पने प्रमाणाभावः। तस्यैव च कामनोपनिपाते काम्यत्वात्तन्नियतकालमेवेति कुतो नियतकालं कुतश्च कालान्तरेऽनुष्ठेयमिति। तस्मादेवं केचिदाहुः—प्रयागगङ्गयोः प्राप्तिनिमित्तकमेकैकं मुण्डनं काम्यं चैकैकम्। तत्र नैमित्तिकयोः काम्यप्रसङ्गेन काम्ययोश्च तन्त्रेणानुष्ठानात्प्राप्तिदिने सकृन्मुण्डनेनैव चतुर्णामपि निर्वाहः। न च काम्ययोस्तन्त्रानुष्ठानादनेकफलजनकत्वे योगसिद्धिन्यायविरोधः। तस्य केवलकाम्यविषयत्वात्। नैमित्तिकस्य तु निमित्तानुरोधेनानेकस्यापि युगपदुपस्थितौ फलस्याप्यनेकस्य तन्त्रानुष्ठानादेव जननात्। यमलपुत्रोत्पत्तौ जातेष्टिवत्। अपरपक्षश्राद्धफलमघात्रयोदशीश्राद्धफलजनकमघात्रयोदशीकालीनश्राद्धवच्चेति। तदप्ययुक्तम्। प्रकृतयोर्नैमित्तिकयोरेव मुण्डनयोर्वचनान्तरेण फलसंबन्धबोधनात्काम्ययोः पृथगभावेन चतुर्णां प्रसक्त्यभावात्। अन्यथा फलार्थमुण्डनान्तरविधावेतयाऽन्नाद्यकामं याजयेदित्यवेष्ट्यन्तरविधाविव गौरवमुपस्थितपरित्यागश्च। तस्माद्द्वे एव गङ्गाप्रयागप्राप्तिनिमित्तके मुण्डने। तयोश्च तन्त्रम्। ताभ्यां च फलद्वयं जायते। योगसिद्धिन्यायविरोधपरिहारश्च पूर्ववदेवेत्याहुः। अपरे तु काम्ययोः कर्मभेदाभावात्पृथक्त्वाभावेऽपि नित्यकाम्याग्निहोत्रवद्यावज्जीवाधिकरणन्यायेन प्रयोगभेदसद्भावाच्चतुर्णां कर्मप्रयोगाणां युगपत्प्रसक्तिः संभवत्येव। तत्रापि तु जातेष्टेरेकवाक्यतया निमित्तफलसंयोगे-

नैवोत्पत्तेः संवलिताधिकारत्वान्निमित्तद्वयप्रसक्तौ तादृश्या एव तन्त्रभावाद्भवेत्सकृदनुष्ठानात्फलद्वयम् । मघात्रयोदश्यामप्यपरपक्षक्रोडीकृतायामेव फलान्तरार्थश्राद्धान्तरोपदेशाद्वचनबलादेव फलद्वयं गुणफलोपबन्धस्थलवत् । इह त्वग्निहोत्रवन्निमित्तसंयोगेनोत्पन्नस्य वचनान्तरेण फलार्थत्वबोधनात्तद्वदेव संवलिताधिकाराभावाद्दशमासाभ्यन्तरे च कृतगङ्गामुण्डनस्य तदप्रसक्तावपि प्रयागमुण्डनविधानात्प्रयागव्यतितिरेकेण च गङ्गामुण्डनविधानात्परस्परक्रोडीकारासंभवान्न युगपत्प्रयोगेण फलद्वयम् । तेनैकस्यां यात्रायां स्वःफलार्थं कृतेन गङ्गामुण्डनप्रयोगेण प्रयागमुण्डनप्रयोगेण वा द्वयोर्नैमित्तिकमुण्डनयोर्निर्वाहः । एवमपरस्यां यात्रायां फलान्तरोद्देशकृततत्प्रयोगेण द्वयोरिति प्रयोगत्रयस्यैव निर्वाहो न तु चतुष्टयस्य । तथा चैकस्यां यात्रायामेकमेव मुण्डनं तेन चैकमेव फलम् । एवमपरस्यामपीति वदन्ति । यदा तु नान्यतरफलेच्छा तदा द्वयोर्मुण्डनयोरगृह्यमाणविशेषत्वात्तन्त्रम् । यदा तु दशमासाभ्यन्तरे कृतगङ्गामुण्डनस्तदा सत्यां कामनायां काम्येनैव प्रयागमुण्डनेन तन्निमित्तकस्य प्रसङ्गसिद्धिः । कामनाभावे तु केवलनैमित्तिकमेवानुष्ठेयमिति । सर्वथा त्वेकस्यां यात्रायामेकमेव मुण्डनमिति सिद्धम् । स्त्रीणां तु विधवानां भवत्येवेति साधारणविधावेवोक्तम् । सधवानां तु विशेषः । तत्र केचिदाहुः—

केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्वेषु च्छेदयेदङ्गुलद्वयम् ॥

तथा—सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ।
एवमेव तु नारीणां मुण्डमुण्डनमादिशेत् ॥

इति प्रायश्चित्तप्रकरणेऽपि श्रुतस्याऽऽकाङ्क्षातौल्येनात्राप्यन्वयो योग्यत्वाद्विश्वजिति स्वर्गवत् । अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धस्तस्माच्छ्रुत्येकदेशः स इति जैमिनिसूत्रात् ।

यो येन यस्य संबन्धो दूरस्थस्यापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥

इति वार्तिकाच्च । अत एव प्रभासखण्डे—

क्षुरकर्म न शस्तं स्याद्योषितां तु वरानने ।
सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे ॥
सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ।

इति प्रभासे तथैव वपनं विहितम् । दिवोदासीये तु—

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ॥
तीर्थादिषु सभर्तृणां स्यादेवं केशवापनम् ।

इति साक्षादेव वचनं पठितम् । तस्मात्प्रयागे सभर्तृकाणां सर्वकेशसमुच्चयस्य द्व्यङ्गुलं त्र्यङ्गुलं वा छेदयेदित्येव वपनमिति ।

सांप्रदायिकास्तु—

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नानेन तस्मात्तांस्तत्र वापयेत् ॥

इत्यादिवचनैः केशमूलवपनस्यैव तीर्थे विशिष्यविधानादाकाङ्क्षाभावान्न प्रकरणान्तरश्रुतस्यात्रान्वयः सौर्यादौ स्वर्गानन्वयवत् । प्रभासखण्डीयं तु वचस्तन्मात्रविषयं तत्रैवेत्युक्तेः । अन्यथा तीर्थत्वादेव तादृशवपनप्राप्तेर्व्यर्थत्वापातः । किंचैतस्मादेव विशेषविधानात्तीर्थान्तरे मूलत एव मुण्डनं गम्यते । विकृतिविशेषे साप्तदश्यविशेषविधिनेव विकृत्यन्तरे पाञ्चदश्यवत् । दिवोदासोपदर्शितं तु वचो ग्रन्थान्तरादर्शनादनाकरम् । किंच द्वित्र्यङ्गुलच्छेदने कर्तनमात्रं स्यान्न तु वपनं तच्चात्र विहितम् । प्रायश्चित्ते तु प्राकरणिकवचनबलात्तथा क्रियते । अत्र तु न तदस्ति । तस्मात्समूलमेव केशवपनमिह स्त्रीणामिति । अत्रापि नोन्मुक्तकेशवपनं किंतु वेणीं कृत्वा कुङ्कुमादिमङ्गलद्रव्यालंकृता भर्तारं नमस्कृत्य तदनुज्ञाता वापयेत् । तां च वेणीमञ्जलौ निधाय यथाशक्ति कृतां स्वर्णमयीं रूप्यमयीं वा वेणीं मुक्ताप्रवालादि च निधाय

वेण्यां वेणीप्रदानेन सर्वं पापं प्रणश्यतु ।
जन्मान्तरेष्वपि सदा सौभाग्यं मम वर्धताम् ॥

इति पठित्वा वेण्यां क्षिपेत् । इदं च प्रथमयात्रायामेव न प्रतियात्रमिति सर्वशिष्टानामाचारः । ननु स्त्रीणां मुण्डनप्राप्तिरेव कथम् । इत्थम् । मुण्डनं चोपवासश्चेत्यादिवचनं तावत्तीर्थे स्त्रीपुंससाधारण्येन वपनं विधत्ते । यत्रापि च पुंसः श्रवणं स्यात्तत्राप्युद्देश्यविशेषणत्वात्पुंस्त्वमविवक्षितम् । तथा च यदेव पुंसां वपनप्रापकं तदेव स्त्रीणामपि । अत एवं प्रभासे तासां द्व्यङ्गुलवपनविधायकं प्रभासखण्डीयं वचनं पूर्वमुदाहृतम् । ब्रह्मवैवर्ते च कामकलोपाख्याने काश्यामपि मुण्डनान्यार्थदर्शनम्—

आगत्य मणिकर्ण्यां तु स्नात्वा दत्त्वा धनं बहु ।
वपनं कारयित्वा तु स्थित्वा शुद्धा पयोव्रता ॥ इति ।

तर्हि प्रयाग एव कुतस्ता वापयन्ति न तीर्थान्तरेऽपीति चेत् । अत्र शिष्टाचार एव संकटनिःसरणसरणिः ।

यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः ।

तथाऽपि लौकिकाचारं मनसाऽपि न लङ्घयेत् । इतिवचनात् । पठन्ति च—

स्त्रीणां सभर्तृकाणां तु सर्वपापापनुत्तये ।
प्रयागे वपनं कार्यं नान्यक्षेत्रे कदाचन ॥ इति ।

क्वचिन्निबन्धे च नन्दिग्रामे जटां हित्वेत्यादिवचनान्युक्त्वाऽनन्तरम्—

सीता शिरोमुण्डनं च पातिव्रत्यादकारयत् ।
प्रियं रामस्य सीतायाः कुर्वत्योऽन्या अपि स्त्रियः ॥
मुण्डनं प्रति कर्माणि कारयांचक्रिरे तदा ।

इत्यादीन्यपि वचनानि लिखितानि । किंच यत्र स्त्रीणां मुण्डनं नेष्यते तत्र तत्पर्युदास एव क्रियत आचार्यैः । यथाऽऽहाऽऽपस्तम्ब आचारप्रकरणे—एवं पत्नी केशवर्जमिति । बोधायनोऽपि चान्द्रायणादिधर्मान्प्रकृत्याऽऽह—केशश्मश्रुनखरोमवापनं चान्द्रायणादिषु तदेव स्त्रियाः केशवर्जमिति । इह च नास्ति पर्युदासः । तस्मात्स्त्रीणामपि वपनम् । तच्च यद्देशीयानामाचारस्तासामेव नान्यासामिति । यच्च—

*राजयोगी पुरन्ध्री च मातापित्रोस्तु जीवतोः ।
मुण्डनं सर्वतीर्थेषु न कुर्याद्गुर्विणीपतिः ॥

इति वचनं तदनाकरम् । साकरत्वे वा द्वितीयादियात्राविषयम् । जीवत्पितृकगुर्विणीपत्योरप्येवमेव तीर्थान्तरे प्रथमयात्रायां तयोरपि वपनस्य सामान्यविधावुक्तत्वात् । इदं च स्त्रीणां शिखामरक्षित्वैव कार्यं तासां शिखाबन्धनादिविधानाभावात् । अनुपनीतानामपि प्रयागे वपनं कार्यम् ।

यस्तु पुत्रांस्तथा बालान्स्नापयेत्पाययेत्तथा ।
यथात्मना तथा सर्वं दानं विप्रेषु दापयेत् ॥

---

* राजा कुमारी नारी च जीवतश्च पितुः सुतः, इति वा पाठः ।

इति मत्स्यपुराणवचने तृतीयपादस्योत्तरशेषतायां व्यर्थत्वापाताद्भिन्नवाक्यतया मुण्डनादिविधायकत्वात् । वापयेत्तथेति तु पाठे स्पष्ट एव विधिः । इदं चाकृतचूडानां न कार्यं चूडाकरणस्याऽऽद्यमुण्डनतया तावन्मुण्डनान्तरानधिकारादिति केचित् । अपरे तु नैमित्तिकत्वात्पितृनिधननिमित्तकवत्तेषामपीत्याहुः । तीर्थान्तरे तु कृतचूडानामप्या(प्यना)वश्यकं कृतेऽभ्युदयः । इदं च प्रयागमुण्डनं योजनत्रयाधिकदेशाद्यात्रार्थमागतेन कालविलम्बनियममनपेक्ष्यैव कार्यं न न्यूनदेशागतेन नापि लौकिककार्योद्देशागतेन ।

> ऊर्ध्वमब्दाद्द्विमासोनाद्यदा तीर्थं व्रजेन्नरः ।
> तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विज ॥
> प्रयागे प्रतियात्रं तु योजनत्रय इष्यते ।
> क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते ॥

इति वचनात् । केचित्तु 'प्रयागे प्रतियात्रायामेकयोजन इष्यते' इति पठन्ति । अत्र यद्यपि प्रयाग इत्यविशेषत उपादानं तथाऽपि सितासितशब्देन वेण्यामेव क्षौरस्नानयोरुक्तत्वात्तत एव योजनत्रयस्यैकयोजनस्य वा गणना न तु पूर्वोक्तप्रयागावधेः । यत्तु 'नैकसंवत्सरे कुर्यात्प्रयागे वपनद्वयम्' इति वचनं तद्योजनान्तर्वास्यागतविषयम् । प्रायश्चित्तार्थयात्रायां तु तीर्थान्तरे न दशमासावधिनियमः । नापि पूर्वोक्तप्रयागे प्रायश्चित्तमृत इति विशेषोपादानात् । अन्यस्तु विचारः सामान्यप्रघट्टकादेवावगन्तव्यः ।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ प्रयागप्रकरणे तत्रत्यवपनविचारः ।

---

अथ प्रयागमुण्डने काम्यत्वस्यापि सत्त्वात्तत्प्रसङ्गात्प्रयागाधिकरणकनानाकाम्यकर्माण्युच्यन्ते । तत्र स्नानमाघस्नानत्र्यहस्नानैकाहस्नानमरणानां फलं वक्ष्यते । अन्येषां तूच्यते ब्रह्माण्डपुराणे—

> कुरुक्षेत्रे प्रयागे च गङ्गासागरसंगमे ।
> गङ्गायां पुष्करे सेतौ गङ्गाद्वारे च नैमिषे ॥
> यद्दानं दीयते शक्त्या तदानन्त्याय कल्पते ।

कूर्मपुराणे—

स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे ।
मोदते मुनिभिः सार्धं सुकृतेनेह कर्मणा ॥
सिद्धचारणगन्धर्वैः पूज्यते दिवि दैवतैः ।
ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ॥
ततः शुभानि कर्माणि चिन्तयानः पुनः पुनः ।
गुणवान्वित्तसंपन्नो भवतीह न संशयः ॥
कर्मणा मनसा वाचा सत्ये धर्मे प्रतिष्ठितः ।
गङ्गायमुनयोर्मध्ये यस्तु ग्रामं प्रयच्छति ॥
सुवर्णमथ मुक्तां वा तथैवान्यान्परिग्रहान् ।
कपिलां पाटलावर्णां यस्तु धेनुं प्रयच्छति ॥
स्वर्णशृङ्गीं रौप्यखुरीं चैलकण्ठीं पयस्विनीम् ।
यावन्ति तस्य रोमाणि सन्ति गात्रेषु तापस ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।

तथा—यस्तु पुत्रांस्तथा बालान्स्नापयेत्पाययेत्तथा ।
यथाऽऽत्मनस्तथा सर्वं दानं विप्रेषु दापयेत् ॥

तस्यापि पूर्वोक्तं फलमित्यर्थः ।

तथा—गङ्गायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ।
आर्षेण तु विधानेन यथाविभवविस्तरम् ॥
न स पश्यति तं घोरं नरकं तेन कर्मणा ।
उत्तरान्स कुरून्गत्वा मोदते कालमक्षयम् ॥

मात्स्येऽपि कपिलामित्याद्युक्तम् ।

गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् ।
पुत्रान्दारांस्तथा भृत्यान्गौरेका प्रतितारयेत् ॥

तथा—अथ संध्यावटे रम्ये ब्रह्मचारी जितेन्द्रियः ।
उपासीनः शुचिः संध्यां ब्रह्मलोकमवाप्नुयात् ॥

तथा—तत्र दानं प्रदातव्यं यथाविभवसंभवम् ।
तेन तीर्थफलेनैव वर्धते नात्र संशयः ॥
स्वर्गे तिष्ठति राजेन्द्र यावदाभूतसंप्लवम् ।

तथा—शुक्लाम्बरधरो नित्यं नियतः संयतेन्द्रियः ।
एककालं तु भुञ्जानो मासं भूमिपतिर्भवेत् ॥

सुवर्णालंकृतानां तु नारीणां लभते शतम् ।
पृथिव्यामासमुद्रायां महाभोगपतिर्भवेत् ॥
धनधान्यसमायुक्तो दाता भवति नित्यशः ।
स भुक्त्वा विपुलान्भोगांस्तत्तीर्थं स्मरते पुनः ॥

एवमन्यान्यपि दानफलान्यवगन्तव्यानि ।

पाद्मे देवान्प्रति विष्णुः—

ममाप्येतन्मतं देवा यद्भवद्भिरुदाहृतम् ।
तत्तथाऽस्तु लभत्वेतद्ब्रह्मक्षेत्रमिति प्रथाम् ॥
सूर्यवंशोद्भवो राजा गङ्गामत्राऽऽनयिष्यति ।
सा सूर्यकन्यया चात्र कालिन्द्या वै समेष्यति ॥
यूयं च सर्वे ब्रह्माद्या निवसन्तु मया सह ।
तीर्थराजेतिविख्यातं तीर्थमेतद्भविष्यति ॥
दानं व्रतं तपो होमो जपपूजादिकाः क्रियाः ।
अनन्तपुण्यफलदा मत्सांनिध्यकराः सदा ॥
पितॄनुद्दिश्य ये श्राद्धं कुर्वन्त्यत्र ममाग्रतः ।
तेषां पितृगणाः सर्वे यान्ति ते मत्सलोकताम् ॥

पुलस्त्ययात्रायाम्—

एषा यजनभूमिर्हि देवानामपि सत्कृता ।
दत्तं तत्र स्वल्पमपि महद्भवति भारत ॥

ब्राह्मे पितृवचः—

अस्मत्कुलप्रसूतास्तु समा यास्यन्ति शोभनाः ।
श्राद्धं सपिण्डकं येऽत्र करिष्यन्ति ततो वयम् ॥
विष्णुलोकं गमिष्यामो विष्णुपादैकसंश्रयाः ।
पुनः संसारपदवीं नाऽऽयामः पुण्यभाजनाः ॥

तथा—तीर्थराजं प्रयागेऽस्मिन्मन्दभाग्यो ग्रहीष्यति ।
दुष्प्रतिग्रहमप्यत्र नरकाय भविष्यति ॥
प्रयागतीर्थे पापिष्ठो दुरन्नं यस्तु भुञ्जते(?) ।
विफलं तस्य तत्पुण्यं सत्यमेतन्मयोदितम् ॥

दुरन्नं प्रतिग्रहदुष्टं जातिदुष्टं स्वभावदुष्टमित्यादि ।

तथा—यत्किंचिदपि विप्रेन्द्र प्रयागे तीर्थनायके ।
विष्णुमुद्दिश्य दास्यन्ति तदानन्त्याय कल्पते ॥

एतदनन्तरं ग्रामस्वर्णधान्यकन्यागोपुराणादिदानफलवाक्यानि ब्रह्म-पुराणादेवावगन्तव्यानि ।

तथा—वैष्णवानि पुराणानि विष्णुभक्त्या विशारदाः ।
शृण्वन्ति कथयन्तीह ते गच्छन्ति हरेः पुरम् ॥
ये कुर्वन्ति महाभागा वेदपारायणं क्वचित् ।
यावन्त्यक्षरजालानि यावन्तः स्वरबिन्दवः ॥
तावन्ति माधवस्यास्य रूपाणि स्थापितान्यलम् ।

तथा—कन्यागोभूहिरण्यानि दानानि विविधानि च ।
प्रयागे कुर्वतां पुंसामणुरप्यखिलं जगत् (?) ॥

तथा—प्रयागे पुण्यवाँल्लोके अन्नदानं करोति यः ॥
कृतं तेन मुनिश्रेष्ठ कोटिब्राह्मणभोजनम् ।
सितासिते प्रयागे तु तिलहोमं करोति यः ॥
कोटिहोमः कृतस्तेन यावद्वै तिलसंख्यया ।
तिलतर्पणमप्यत्र पुनात्यासप्तमं कुलम् ॥
प्रयागे माधवः साक्षाद्वर्तते जगदीश्वरः ।
तत्र यद्यत्प्रकुर्वन्ति तत्सर्वं चाक्षयं भवेत् ॥

तथा—मौक्तिकानि प्रयच्छन्ति भूषणाय मधुद्विषः ।
तेषां भूषायते विष्णुर्विबुधैः प्रियया सह ॥
यस्तु रत्नानि पुण्यात्मा हरिप्रीत्यै ददाति च ।
वेण्यां रत्नप्रदानेन स्वर्गे रत्नगृहे वसेत् ॥
स्वर्गापवर्गद्वारं हि प्रयागे दानमम्भसाम् ।
धान्यदानं महाभागाः कुर्वन्ति विमलाशयाः ॥
गङ्गातीरनिवासिभ्यस्तस्य वासो हरेः पुरे ।
तिलदानं प्रयागे तु ये कुर्वन्ति विचक्षणाः ॥
तैरेवाच्युतरूपाणि स्थापितानि जगत्त्रये ।
वासांसि ये प्रयच्छन्ति शीतत्राणाय योगिनाम् ॥
कम्बलान्विष्णुभक्तेभ्यो ददाति च हरिप्रियः ।
तस्य पातकशीतार्तिर्न हि कुत्रापि जायते ॥
यस्तु वै तीर्थराजेऽत्र शीतार्तित्राणकारणम् ।
अग्निं प्रज्वालयेत्तेन पापं दग्धं पुरातनम् ॥

इक्षुं गुडं सितां वाऽपि दद्याद्यो विष्णुतत्परः ।
तस्य माधुर्यतां याति प्रयागे माधवोऽव्ययः ॥

इत्याद्युक्त्वोक्तम्—

यानि कानि च दानानि प्रयागे नियतात्मवान् ।
करोति परया भक्त्या सोऽक्षयं फलमश्नुते ॥ इति ।

माघे त्वत्र दाने फलविशेषस्तत्रैव—

प्रयागे माघमासे तु विष्णोः प्रीत्यै ददाति यः ।
विष्णुभक्तिपरेभ्यस्तु तस्य पुण्यमनन्तकम् ॥
प्रयागे माघमासे वै घृतदानं करोति यः ।
स स्वर्गे घृतकुल्यासु मोदते दिव्यभोगवान् ॥ इत्यादि ।

अथ प्रयागे सामान्यतः स्नानं कूर्मपुराणे—

एतत्प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम् ।
अत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

तथा—तत्राभिषेकं यः कुर्यात्संगमे संशितव्रतः ।
तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥

तथा—तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर ।
सर्वपापविनिर्मुक्तः पुनात्यासप्तमं कुलम् ॥

पाद्मे—प्रयागस्नानतो नास्ति क्वाप्यन्यदधिकं परम् ।
प्रायश्चित्तं तपोरूपं दानरूपं क्रियादिकम् ॥

तथा—मलीमसतमोध्वंसे यथा शरदि चन्द्रमाः ।
भाति पापक्षयात्तद्वन्नरो वेणीजलाप्लुतः ॥
ऋचीकेन पुरा शप्तो गन्धर्वो वायसोऽभवत् ।
शापं मुमोच सोऽत्रैव स्नातः सद्यः सितासिते ॥

स्कान्दे—एवं निष्कलुषीभूय ततः स्नायात्सितासिते ।
यं यं काममभिध्यायंस्तं तमाप्नोति नान्यथा ॥
पुण्यराशिं च विपुलं पुण्यान्भोगान्यथेप्सितान् ।
स्वर्गं प्राप्नोति तत्स्नानान्निष्कामो मोक्षमाप्नुयात् ॥
स्नायाद्योऽभिलषन्मोक्षं कामानन्यान्विहाय च ।
सोऽपि मोक्षमवाप्नोति कामदात्तीर्थराजतः ॥

मात्स्ये—सत्यवादी जितक्रोधो ह्यहिंसां परमास्थितः ।
धर्मानुसारी तत्त्वज्ञो गोब्राह्मणहिते रतः ॥

गङ्गायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात् ।
मनसा चिन्तितान्कामांस्तांश्च प्राप्नोति पुष्कलान् ॥

तथा युधिष्ठिर उवाच—

स्नेहाद्वा द्रव्यलोभाद्वा ये तु कामवशं गताः ।
कथं तीर्थफलं तेषां कथं तीर्थमवाप्नुयुः ॥
विक्रयः सर्वभाण्डानां कार्याकार्यमजानतः ।
प्रयागे का गतिस्तस्य चैतद्ब्रूहि महामुने ॥

मार्कण्डेय उवाच—

शृणु राजन्महागुह्यं सर्वपापहरं शुभम् ।
मासमेकं च स्नायीत प्रयागे नियतेन्द्रियः ॥
मुच्यते सर्वपापेभ्यो यथादृष्टं स्वयंभुवा ।
शुचिस्तु प्रयतो भूत्वाऽहिंसकः श्रद्धयाऽन्वितः ॥
मुच्यते सर्वपापेभ्यो गच्छेत्परमकं पदम् ।

अत्राविशेषाद्यं कंचिन्मासम् ।

तथा—विस्रम्भघातकानां तु प्रयागे शृणु यत्फलम् ।

स्नान इति शेषः ।

त्रिकालमेव स्नायीत आहारं भैक्ष्यमाचरन् ।
त्रिभिर्मासैर्विमुच्येत प्रयागे तु न संशयः ॥

तथा प्रयागतीर्थान्युक्त्वोक्तम्—

श्रद्दधानः परो भूत्वा कुरु तीर्थाभिषेचनम् ।
अन्ये च बहवस्तीर्थाः सर्वपापहराः स्मृताः ॥
तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।
एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम् ॥
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।

भविष्ये—गङ्गायमुनयोश्चैव संगमो लोकविश्रुतः ।

स एव कामिकं तीर्थं तत्र स्नानेन भक्तितः ।
यस्य यस्य च यः कामस्तस्य तस्य भवेद्धि सः ॥
भोगकामस्य भोगः स्याद्राज्यं स्याद्राज्यकामिनः ।
स्वर्गः स्यात्स्वर्गकामस्य मोक्षः स्यान्मोक्षकामिणः ॥

भारतेऽङ्गिरस्तीर्थयात्रायाम्—

गङ्गायमुनयोस्तीर्थे तथा कालञ्जरे गिरौ ।
दशाश्वमेधानाप्नोति तत्र मासं कृतोदकः ॥

यं कंचनमासमभिप्रेत्येदं वचनं न तु माघपरमविशेषश्रवणात्कालञ्जरस्याप्युपादानाच्च ।

भारते—चातुर्विद्ये च यत्पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसंगमे ॥

ब्रह्मपुराणे—

गङ्गायमुनसङ्गे तु यः पुमान्पुण्यवर्धनः ।
स्नात्वा नारायणं देवं भक्त्या संस्मरते यदि ॥
स पुमान्यत्र यत्राऽऽस्ते तत्र विष्णुः प्रसीदति ।

तथा—दुर्लभं तीर्थराजस्य स्नानं सर्वत्र सर्वदा ।
देशकालादिनियमः प्रयागे न हि सर्वदा ॥
सर्वे शुभमयाः कालाः सर्वाः शुभमया दिशः ।

एतेषु सर्वेषु वचनेषु यद्यपि प्रयागशब्दस्याविशेषत उपादानं तथाऽपि तदन्तर्गततत्तत्तीर्थस्नानफलस्य वाक्यान्तरैरुक्तत्वात्स्थलमात्रे च जलाभावेन स्नानासंभवाद्वेण्युपलक्षकः प्रयागशब्द इति । अथ प्रयागे माघस्नानफलम् ।

तत्र कूर्मपुराणे—

षष्टिः कोटिसहस्राणि षष्टिः कोटिशतानि च ।
माघमासे गमिष्यन्ति गङ्गायमुनसंगमम् ॥

मात्स्ये—सितासिते तु ये स्नाता माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
दश तीर्थसहस्राणि दश कोट्यस्तथा पराः ।
माघमासे प्रयागे तु गङ्गायमुनसंगमे ॥

पद्मपुराणे—

कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता ।
तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन संगता ॥
तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी ।
काश्याः शतगुणा प्रोक्ता गङ्गायमुनसंगमे ॥
सहस्रगुणिता साऽपि भवेत्पश्चिमवाहिनी ।
पश्चिमाभिमुखी गङ्गा कालिन्द्या सह संगता ॥

हन्ति कल्पकृतं पापं सा माघे नृप दुर्लभा ।
अमृतं कथ्यते राजन्सा वेणी भुवि दुर्लभा ॥
तस्यां माघे मुहूर्तं तु देवानामपि दुर्लभम् ।

तथा—पृथिव्यां यानि तीर्थानि पुर्यः सन्तीह याः पुनः ।
स्नातुमायान्ति ता वेण्यां माघे मासि नराधिप ॥

तथा ब्रह्मविष्ण्वादीननुक्रम्योक्तम्—
अणिमादिगुणोपेता ये चान्ये तत्त्वदर्शिनः ।
स्नातुमायान्ति ते सर्वे माघे वेण्यां नराधिप ॥

तथा—गङ्गां येऽत्रावगाहन्ते माघे मासि नराधिप ।
चतुर्युगसहस्रं ते न पतन्ति सुरालयात् ॥
शतेन गुणितं माघे सहस्रं राजसत्तम ।
निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसंगमे ॥

तथा—माघस्तु प्राप्यते धन्यैः प्रयागे द्विजसत्तम ।
अपुनर्भवदं तत्र सितासितजलं यतः ॥
गायन्ति देवाः सततं दिविष्ठा
माघः प्रयागे किल नो भविष्यति ॥
स्नाता नरा यत्र न गर्भवेदनां
पश्यन्ति तिष्ठन्ति च विष्णुसंनिधौ ॥

तथा—स्नाता हि ये माकरभास्करोदये
तीर्थे प्रयागे सुरसिन्धुसंगमे ।
तेषां गृहद्वारमलंकरोति
भृङ्गावलिः कुञ्जरकर्णताडिता ॥

तथा—सितासिते तु यो मज्जेदपि पापशतावृतः ।
मकरस्थे रवौ माघे न स पापेषु मज्जति ॥
दुर्जया वैष्णवी माया देवैरपि सुदुस्तरा ।
प्रयागे दह्यते सा तु माघे मासि नराधिप ॥
तेषु तेषु च लोकेषु भुक्त्वा भोगाननेकशः ।
पश्चाच्चार्के विलीयन्ते प्रयागे माघमज्जिनः ॥
राजसूयसहस्रस्य राजन्नविकलं फलम् ।
सितासिते च माघे तु स्नातानां भवति ध्रुवम् ॥

तथा—आकल्पजन्मभिः पापं संचितं यन्नरैर्नृप ।
तद्भवेद्भस्मसान्माघे स्नातानां तु सितासिते ॥
इत्यादीनि बहूनि वचांसि पद्मपुराणीयमाघमाहात्म्ये द्रष्टव्यानि।
अङ्गिरस्तीर्थयात्रायाम्——

माघमासे प्रयागे तु नियतः शंसितव्रतः ।
स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ॥

पाद्मे——माघः सितासिते विप्र राजसूयैः समो न वा ।
धनुर्विंशतिविस्तीर्णे सितनीलाम्बुसंगमे ॥
माघादपुनरावृत्ती राजसूयैः पुनः पतेत् ।
माघमासे प्रयागे तु सितासितजलं स्पृशेत् ॥
अधन्यो न स्पृशेन्नूनं महापातकहारिणम् ।

पाठान्तरं तु——

माघमासीयवातोऽपि सितासितजलं स्पृशन् ।
अधन्यं न स्पृशेन्नूनं महापातकहा हि सः(?) ॥ इति ।

ब्रह्मपुराणे माघोपक्रमेण——

तीर्थराजे प्रयागे तु वेण्यां यः स्नाति मानवः ।
तस्य पापभयं नास्ति विष्णुस्तस्य प्रसीदति ॥
प्रयागे माघमासे तु वेदतीर्थोदबिन्दुना ।
स्पृश्येत यस्य गात्रं तु सर्वपापैः प्रमुच्यते ॥
माघे मासि प्रयागस्य दर्शनं दुर्लभं नृणाम् ।
स्पर्शनस्य तु का वार्ता स्नानं तत्र सुदुर्लभम् ॥

इत्यादि षष्ठोऽध्यायो माघस्नानप्रशंसापर एव ।

पाद्मे—सर्वतीर्थानि कृष्णानि पापानां सङ्गदोषतः ।
भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात् ॥

ब्राह्मे—अश्वमेधादिकृत्स्वेको माघकृत्तीर्थनायके ।
माघस्नाय्यनयोर्मध्ये पावनत्वेन लक्ष्यते । इत्यादि ॥

तथा—यत्र कुत्रापि वा माघे प्रयागस्मरणान्वितः ।
करोति मज्जनं तीर्थे स लभेद्गाङ्गमज्जनम् ॥
प्रयागाभिमुखो भूत्वा संस्मरन्माधवं विभुम् ।
माघस्नानं करोत्यत्र स मुक्तः सर्वपातकात् ॥

अत्र नानावाक्यवशात्फलविकल्पेऽपि योगसिद्धिन्यायेन प्रतिप्रयोगमेकैकं फलम् । कामनैव च तत्तदुद्देशे नियामिका विनिगमकान्तराभावात् । एवं वक्ष्यमाणत्र्यहैकाहफलेऽपि । अथ त्र्यहफलवचनानि । मत्स्य पुराणे—

संवत्सरशतं साग्रं निराहारस्य यत्फलम् ।
प्रयागे माघमासे तु त्र्यहस्नातस्य तत्फलम् ।
तथा—योगाभ्यासेन यत्पुण्यं संवत्सरशतत्रये ॥
प्रयागे माघमासे तु त्र्यहस्नातस्य तद्भवेत् ।
तथा—प्रयागे माघमासे तु त्र्यहं स्नाति मानवः ॥
पापं त्यक्त्वा दिवं याति जीर्णां त्वचमिवोरगः ।

पद्मपुराणे—

प्रयागे माघमासे तु त्र्यहस्नातस्य यत्फलम् ।
नाश्वमेधसहस्रेण तत्फलं लभते भुवि ॥
तथा—त्र्यहस्नानफलं माघे पुरा काञ्चनमालिनी ।
राक्षसाय ददौ भूप तेन मुक्तः स पापकृत् ॥
तथा—त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः ।
शेषैर्मे यदभूत्पुण्यं तेन देवत्वमागता ॥
रममाणा तु कैलासे गिरिजायाः प्रिया सखी ।
जातिस्मरा तथा जाता प्रयागस्य प्रसादतः ॥

तथा—पुष्करे च कुरुक्षेत्रे ब्रह्मावर्ते पृथूदके ।
अविमुक्ते प्रभासे च गङ्गासागरसंगमे ॥
यत्फलं दशभिर्वर्षैः प्राप्यते संयतेन्द्रियैः ।
तत्फलं प्राप्यते माघे त्र्यहस्नानान्न संशयः ॥

अत्र त्र्यहो मकरसंक्रमरथसप्तमीमाघीपौर्णमासीरूप इत्येके । माघशुक्लदशम्यादित्रयमिति तत्त्ववादिनः । मकरादिदिनत्रयमित्यन्ये । माघस्याऽऽद्यं त्रयमिदं 'त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः । शेषैः' इति पूर्वोदाहृतवचनादितीतरे । त्रयोदश्यादित्रयमित्यपरे 'महामाघीं पुरस्कृत्य सप्तौ तत्र दिनत्रयम्' इतिवक्ष्यमाणवचनात् । एतस्यार्थवादत्वाद्यत्किंचिद्दिनत्रयमिति वृद्धाः । एवमग्रेऽपि । कूर्मपुराणे—

गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
प्रयागे माघमासे तु त्र्यहस्नातस्य तत्फलम् ॥

पद्मपुराणे—मज्जन्ति येऽपि त्र्यहमत्र मानवा-
स्तीर्थे प्रयागे धुतपापकञ्चुकाः ।
मज्जन्ति ते नो निरयेषु धर्मिव-
त्स्वर्गे च ते चारु चरन्ति देववत् ॥

तथा वसिष्ठ उवाच—

अवन्तीविषये राजा वीरसेनोऽभवत्पुरा ।
नर्मदातीरमाश्रित्य राजसूयं चकार सः ॥
षोडशैरश्वमेधैश्च स्वर्णवाटविराजितैः ।
स्वर्णभूषणयूपाद्यैरीजे सोऽपि यथाविधि ॥
प्रददौ धान्यराशींश्च द्विजेभ्यः पर्वतोपमान् ।
वदान्यो देवताभक्तो गोप्रदः स सुवर्णदः ॥
ब्राह्मणो भद्रकी नाम मूर्खो हीनकुलस्तथा ।
कृषीवलो दुराचारः सर्वधर्मबहिष्कृतः ॥
सीरकर्मसमुद्विग्नो बन्धुभिश्च समुज्झितः ।
इतस्ततः परिभ्रान्तो निर्गतो वृत्तिपीडितः ॥
दैवतः सार्थमाविश्य प्रयागं स समागतः ।
महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ॥
अनघः स्नानमात्रेण स मूर्खेह द्विजोत्तमः ।
प्रयागाच्चलितस्तस्मात्पुनर्यस्मात्समागतः ॥
स राजा सोऽपि विप्रश्च विपन्नावेकदा तदा ।
तयोर्गतिः समा दृष्टा मया शक्रस्य संनिधौ ॥
तेजो रूपं बलं स्त्रैणं देवयानं विभूषणम् ।
माला च पारिजातस्य नृत्यं गीतं समं तयोः ॥
इति दृष्ट्वा हि माहात्म्यं क्षेत्रस्य कथमुच्यते ।

एवमेव सामान्यतः प्रयागातिरिक्तविषयाण्यपि पाद्मस्थानि—

मकरस्थे रवौ माघे प्रातःकाले तथाऽमले ।
गोष्पदेऽपि जले स्नानं स्वर्गदं पापनाशनम् ॥
योगोऽयं दुर्लभो राजंस्त्रैलोक्ये सचराचरे ।
अस्मिन्योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ॥

इत्यादीनि वचनान्युदाहार्याणि । अथैकाहस्नानवचनानि पाद्मे—

स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे ।
यत्फलं लभते माघे वेण्यां चैव दिने दिने ॥

अग्निपुराणे—

गवां कोटिप्रदानाद्यत्प्रत्यहं तस्य तत्फलम् ।
प्रयागे माघमासे तु एवमाहुर्मनीषिणः ॥

एवं प्रयागादन्यत्राप्येकाहमाघस्नानवचनान्युदाहार्याणि । एवं संपूर्णमाघत्र्यहैकाहस्नानफलप्रतिपादकवाक्येषु सत्सु केचिदाहुः—पूर्णमाघस्नानेऽपि क्रियमाणे त्र्यहाणामेव फलजनकता न तु मासस्य । तथा च मासे दशत्र्यहाणां सत्त्वात्प्रतित्र्यहं तत्फलोल्लेखेन संकल्पं कृत्वा दश त्र्यहाः स्नातव्याः । एवं च संपूर्णमाघेन दशविधफललाभात्प्रवृत्तिविशेषकरता भवतीति । तदिदं कुमतिविलसितम् । कल्पितेष्वपि दशसु त्र्यहेषु समुदायद्वयात्मकदर्शपूर्णमासप्रयोगवत्किं तद्घटितो मासप्रयोग एव फलजनकः किं वा दश त्र्यहा एव परस्परनिरपेक्षाः प्रत्येकं फलजनकाः । नाऽऽद्यः । त्र्यहकल्पनस्य नैरर्थक्यात्प्रवृत्तिविशेषकरताभावाच्च । मासप्रयोगादेकस्यैव फलस्यावाप्तेः । दर्शपूर्णमासयोर्हि फलवाक्यगतद्विवचनोपपत्तिः प्रयाजादीनां च दर्शपूर्णमासशब्देनाग्रहणात्फलसंबन्धाभावादङ्गत्वसिद्धिः समुदायद्वयकल्पने प्रयोजनम् । इह तु न तथाऽस्ति माघस्नानफलसमर्पकवाक्येष्वेकवचनान्तेनैव माघशब्देन राजसूयवत्फलसंबन्धबोधनात् । तत्र च विद्वद्वाक्ये समुदायीकरणप्रमाणे इह तु नास्ति प्रमाणमिति वक्ष्यामः । न द्वितीयः । पूर्वोदाहृतानां माघशब्दयुक्तमासस्नानविधायकवचनानामानर्थक्यापातात् । आद्यत्र्यहेणैव तावत्फलसिद्धौ द्वितीयादित्र्यहानर्थक्यप्रसङ्गाच्च । अथाधिकफललिप्सयाऽन्येषां सार्थक्यं तर्हि पूर्वोदाहृतैकाहवाक्यैरपि तावत्फलश्रवणादेकाहेभ्य एव त्रिंशद्गुणं फलमस्तु । त्र्यहेभ्योऽप्यधिकतरफललाभान्न तु त्र्यहदशकाद्दशगुणमेवेति । किंच । मासप्रयोगतिरस्कारेण त्र्यहप्रयोगपुरस्कारे को हेतुः किं मासवाक्येषु फलाश्रवणं त्र्यहवाक्यैस्तदुपसंहारो वा फलश्रवणयुक्तत्र्यहवाक्यसत्त्वमात्रं वा । नाऽऽद्यः । पूर्वोदाहृतनानापुराणीयमासवाक्येष्वपि तच्छ्रवणात् । न द्वितीयः । फलश्रवणवत्त्वादेवास्पष्टत्वाभावेनोपसंहारायोगात् । तदुक्तम्—' स्पष्टस्य

तु विधेर्नान्यैरुपसंहारसंभवः ' इति । नान्त्यः । सामान्यत्र्यहवचनानां माघातिरिक्तकालीनत्र्यहविषयत्वात् । माघान्तर्गतत्र्यहविषयाणां तु संपूर्णमाघाशक्तविषयत्वात् । देशान्तरादागच्छतां बलवत्प्रतिबन्धकेन माससानासंभवविषयत्वाच्च । एकाहवाक्यवत् । ' अस्मिन्योगे त्वशक्तोऽपि स्नायादपि दिनत्रयम् ' इति ' मज्जन्ति येऽपि त्र्यहमत्र मानवाः ' इति च स्फुटैव पद्मपुराणेऽशक्तविषयताऽसंभवविषयता च गम्यते । यदपि—

त्र्यहस्नानफलं माघे पुरा काञ्चनमालिनी ।
राक्षसाय ददौ भूप तेन मुक्तः स पापकृत् ॥

इति पद्मपुराणीयमाघमाहात्म्ये दत्तात्रेयवाक्यम् ।

तथा—त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः ।
शेषैर्मे यदभूत्पुण्यं तेन देवत्वमागता ॥

इति तत्रैव काञ्चनमालिनीवचनं च त्र्यहस्य प्रत्येकं फलजनकत्वे मानमित्युच्यते तदप्यमीमांसितवेदवचनानामेव शोभते । तथा हि पाद्मे माघस्नानमाहात्म्यस्योपक्रमान्मध्ये च—

मया गत्वा कृतं स्नानं माघे मासि सितासिते ।
तस्य स्नानस्य माहात्म्यं शृणु वृद्ध निशाचर ॥

तथा—स्मृत्वा प्रयागमाहात्म्यं माघे माघे व्रजाम्यहम् ।

तथा—बहवो हि कृता माघा वर्षे वर्षे यथाविधि ।
श्रद्धापूतं मया मद्र ब्रह्मक्षेत्रे सितासिते ॥

तथा—ददामि माघपुण्यं तु कृतमेकं सितासिते ॥

इति मध्ये परामर्शात् ।

निष्पीड्याऽऽशु ततो वस्त्रं जलं कृत्वा कराम्बुजे ।
ददौ सा माघजं पुण्यं तस्मै वृद्धाय रक्षसे ॥

इत्यन्त उपसंहाराच्च मासप्रयोग एव फलजनक इत्यवगम्यते । तेन दत्तात्रेयकाञ्चनमालिनीवाक्ये मध्यपठिते मासस्नानस्यैवावयवद्वारा स्तुत्यर्थत्वेन व्याख्येये अष्टाकपालादिवाक्यानीव द्वादशकपालस्तुत्यर्थतया । किंचात्र त्र्यहात्पापक्षयो जातः शेषैः सप्तविंशतिभिर्दिनैर्यत्पुण्यमभूदित्युक्तिबलादेकत्र्यह एकश्च सप्तविंशत्यह इत्येवंसमुदाय एव कल्प्येत न तु भवदभिप्रेता दश त्र्यहा इति यत्किंचिदव्यवस्थितमापद्ये-

तेत्येतस्यार्थवादतैव । तस्मान्माघप्रयोग एव फलजनको न तु दश त्र्यहा इति सिद्धम् ।

अथात्र स्नाने दिनविशेषे फलविशेषः—

यमः—कार्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते ।
माघ्यां स्नातः प्रयागे तु मुच्यते सर्वपातकैः ॥

भारतेऽङ्गिरस्तीर्थयात्रायाम्—

दश तीर्थसहस्राणि त्रिंशत्कोट्यस्तथा पराः ।
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ ॥

तथाऽन्यत्र—अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा ॥

तथा—रवेर्मकरसंक्रान्तौ प्रयागे स्नानदानयोः ।
फलमानं न शक्नोति कर्तुं ब्रह्माऽपि तत्त्वतः ॥

एवं प्रयागातिरिक्तेऽपि सप्तम्यादिवचनानि—

विष्णुः—सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥ इत्यादि ।

तथा—माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः ॥

अत्र विधिर्भविष्ये वसिष्ठः—

कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् ।
रात्र्यन्ते चालयेथास्त्वं दत्त्वा शिरसि दीपकम् ॥

तथा जलमिति प्रक्रम्य—

न केन चाल्यते यावत्तावत्स्नानं समाचरेत् ।
सौवर्णे राजते पात्रे भक्त्याऽलाबुमयेऽथ वा ॥
तैलेन वर्तिर्दातव्या महारजनरञ्जिता ।
समाहितमना भूत्वा दत्त्वा शिरसि दीपकम् ॥
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् ।
नमस्ते रुद्ररूपाय रसानां पतये नमः ॥
वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते ।
जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः ॥ इति ।

अर्घ्यदानमन्त्रश्च—

यद्यज्जन्मकृतं पापं मया जन्मसु सप्तसु ।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥

अथ माघामायां विशेषो विष्णुपुराणे—

माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां नह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥

वारुणमृक्षं शतभिषा ।

तथा—तत्रैव चेद्भाद्रपदास्तु पूर्वाः काले तदा यत्क्रियते पितृभ्यः ।
श्राद्धे परां तृप्तिमवाप्नुवन्ति युगान्सहस्रं पितरश्च तेन ॥

भारते माघामां प्रकृत्य—

काले धनिष्ठा यदि नाम तस्मिन् भवन्ति भूपाल तदा पितृभ्यः ।
दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥

तत्रैव—अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥

पौषमाघयोः संधौ याम इत्यर्थः । पातो व्यतीपातः ।

दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ।

स्कान्दे—अर्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम् ।
शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसंमिताः ॥
यत्किंचित्क्रियते तत्र तद्दानं मेरुसंनिभम् ।

अत्र व्रतविशेषस्तु हेमाद्रिव्रतकाण्डादेरवगन्तव्यः । तथा मकरसंक्रमपौर्णमास्यमावास्यादिकर्तव्यमपि तत एवावगन्तव्यम् । अत्र सप्तम्यादौ सकृत्स्नानेनैव तन्त्रेण माघस्नानं सप्तम्यादिस्नानं च निर्वहति समानदेशकालकर्तृकत्वात् । न च योगसिद्धिन्यायविरोधः । माघक्रोडीकृत एव सप्तम्यादौ स्नानविधानात् । काम्ये कर्मणि गुणफलाधिकार इव तद्विरोधाभावात् । परस्पराक्रोडीकारविहितानेकफलसाधनकर्मविषयत्वात्तस्य । यथा चैतत्तथा मुण्डन एव प्रपञ्चितम् । तथा चामुकामुककामोऽहममुकामुकस्नानं तन्त्रेण करिष्य इति संकल्प्य स्नानं कुर्यात् । अन्ये तु प्रातःस्नान एव तत्तत्काललक्षणगुणादेव तत्तत्फलं भवतीति स्नानानेकत्वप्रसङ्ग एव नास्ति । अतो न तन्त्रम् । तेनामुकामुककामोऽमुककाले स्नानमहं करिष्य इति संकल्प्यः ( ल्पः ) । एतेन सप्तम्यादावसाधारणसंकल्पेन पुनस्तदेव प्रातःस्नानाचरणमिति

प्रत्युक्तम् । तत्स्नाने प्रातःकालनियमेनोक्तप्रकारेणैव गतेः । अन्यथा तद्वैधेत्ययुक्तत्वादित्यलम् ।

अथ प्रसङ्गान्माघस्नानविधिः । तत्र माघस्नानं नित्यकाम्यमिति केचित् । सांप्रदायिकास्तु नित्यत्वबोधकवीप्साद्यभावात्केवलकाम्यतामेव प्रतिपेदिरे । अत्र च वर्णाश्रमनियमनैरपेक्ष्येण सर्वेषामधिकारः । तदुक्तं पाद्मे—

सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृप ।
सर्वेषां सर्वदो माघः सर्वेषां पापनाशनः ॥ इति
मकरस्थे रवौ माघे प्रातःकाले तथाऽमले ।
नृणां स्त्रीणां तथा स्नानं स्वर्गदं पापिनामपि ॥ इति च ।

भविष्ये—ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
बालवृद्धयुवानश्च नरनारीनपुंसकाः ॥
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ।

तत्रापि विशेषः—

ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव तु शूद्राणां तथैव कुरुनन्दन ॥
नमस्कारोऽथ वा कार्यः सर्वपापौघहानिदः । इति ।

शूद्राणामिति स्त्रीणां संकरजानां चोपलक्षणम् । 'स्त्रियः शूद्रसधर्माणः' इति 'शूद्राणां च सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' इति च स्मरणात् ।

अथ संक्षेपेण सामान्यतो माघस्नानप्रशंसा ब्रह्मपुराणे—

माघो गर्जति यज्ञेभ्यो माघो योगाच्च गर्जति ।
तीव्राच्च तपसो माघो वेदशास्त्रेषु गर्जति ॥

तथा—सर्वतीर्थेषु स स्नातो माघस्नानं करोति यः ।
संसारसागरोत्तीर्णः सर्वलोकेषु भोगवान् ॥

इत्यादिपद्मपुराणीयमाघमाहात्म्यं चातिविस्तरमत्रानुसंधेयम् ।

नारदीये—संप्राप्ते माघमासे तु तपस्विजनवल्लभे ।
क्रोशन्ति सर्ववारीणि समुद्गच्छति भास्करे ॥
पुनीमः सर्वपापानि त्रिविधानि न संशयः ।

तत्रैव जले विशेषः—

तडागेषु तु वा स्नायात्कूपे माण्डाश्रितेऽथ वा ।
माघमासे वरारोहे शस्तं वै निम्नगाजलम् ॥

माण्डाश्रिते तु विशेषः—

सरित्तोयं महावेगं नवकुम्भस्थितं तथा ।
वायुना ताडितं रात्रौ गङ्गास्नानसमं स्मृतम् ॥

अधिकवेगायाः सरित आनीतं तोयमित्यर्थः ।

पाद्मे—तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ।
षडब्दफलदं तद्धि मकरस्थे दिवाकरे ॥

इदं चाऽऽतुरविषयम् ।

उष्णोदकेन वा स्नानमशक्ये सति कुर्वते ।
दृढेषु सर्वगात्रेषु उष्णोदं न विशिष्यते ॥

इति ब्राह्मवचनात् ।

बहिः स्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतम् ।
तडागे द्विगुणं राजन्नद्यां चैव चतुर्गुणम् ॥
दशधा देवखातेषु शतधा च महानदीम् ।
शतं चतुर्गुणं राजन्महानद्योश्च संगमे ॥
सहस्रगुणितं सर्वं तत्फलं मकरे रवौ ।
गङ्गायां स्नानमात्रेण लभते मानुषो नृप ॥
शतेन गुणितं माघे सहस्रं राजसत्तम ।
निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसंगमे ॥

शतेन गुणितं सहस्रं लक्षमित्यर्थः ।

भविष्ये—

प्रयागं पुष्करं प्राप्य कुरुक्षेत्रमथापि वा ।
यत्र वा तत्र वा स्नायान्माघे नित्यमिति स्थितिः ॥
त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितांपतिः ॥

पाद्मे—हिमवत्पृष्ठतीर्थेषु सर्वपापप्रणाशनः ।

इत्यादिना तत्तत्क्षेत्रविशेषेण तत्तत्फलमुक्तं तत्तत एवावगन्तव्यम् । एवमुष्णोदकघटकूपवापीसरःप्रवाहनदीसागरमहानद्गोदावरीभागीर-

थीकाशीनारायणाश्रमप्रयागेषु माघस्नान उत्तरोत्तरद्वैगुण्यं ब्राह्म उक्तं तत्ततो ज्ञेयम्।

अथ माघस्नानकालः। तत्र पाद्मे—

मकरस्थे रवौ यो हि न स्नातोऽभ्युदिते रवौ।
कथं पापैः प्रमुच्येत कथं स त्रिदिवं व्रजेत्॥

'न स्नात्यनुदिते रवौ' इति क्वचित्पाठः।

माघमासे रटन्त्यापः किंचिदभ्युदिते रवौ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे॥ इति च।

कं पतन्तं जलं पतन्तं पुमांसं स्नातमित्यर्थः।

तथा—ये माघमासे वरतीर्थमज्जनं
कुर्वन्ति चार्धोदितसूर्यमण्डले।
स्नात्वा च माघे हरिमर्चयन्ति ये
स्वर्गच्युता भूपतयो भवन्ति ते॥

भविष्ये—यो माघमास्युपसि सूर्यकराभितप्ते
स्नानं समाचरति चारु नदीप्रवाहे।
उद्धृत्य सप्त पुरुषान्पितृमातृतश्च
स्वर्गं प्रयात्यमलदेहधरो नरोऽसौ॥
माघमास्युपसि स्नात्वा विष्णुलोके महीयते। इति च।

अत्र सूर्यकराभितप्तविशेषणात्प्रातःकाल एवोपःशब्देन गृह्यते। ब्रह्मपुराणे तु—

अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः।
माधवाङ्घ्रियुगं ध्यायन्यः स्नाति सुरपूजिते॥
प्रयागवारिणि शुभे तस्य पुण्यस्य का मितिः।

तथा—अरुणोदयमारभ्य प्रातःकालावधि प्रभो।
माघस्नानवतां पुण्यं क्रमात्तत्र च धारणा॥
उत्तमं तु सनक्षत्रं लुप्ततारं तु मध्यमम्॥
सवितर्युदिते भूप ततो हीनं प्रकीर्तितम्।

स्कान्दे शिवलोकादित्याद्युक्त्वा—

स्नातुं माघे समायान्ति प्रयागमरुणोदये।

अत्र सूर्योदयपराणि वचनानि फलपरत्वात्कालपरत्वेऽपि सति वाक्यभेदापत्तेरुदयसामीप्यलक्षणयैकवाक्यतयाऽरुणोदयपराण्येवेति केश्चित्। तन्न। दध्नेन्द्रियकामस्येतिवद्गुणफलाधिकारेण विधेयाभेदाद्वाक्यभेदाल्लक्षणापत्तेरुदयस्नानस्य निष्फलतापत्तेश्च कालवैकल्यात्। एतेन किंचिदभ्युदिते रवावित्यत्र रविशब्देन रविप्रभोच्यत इति स्मृतिदर्पणोक्तिरपि परास्ता। तस्मात्कालविकल्प एवात्रेति शिष्टाः। तथा च प्रातःस्नाय्यरुणकरग्रस्तां प्राचीमवलोक्य स्नायादिति विष्णूक्तः प्रातःस्नानमाघस्नानयोः समानकालत्वात्तन्त्रं भवति। स्मृतिदर्पणे तु माघस्नानेनैव नित्यस्नानसिद्धिर्गोदोहनेन नित्यप्रणयनवदिति प्रसङ्ग उक्तः। सर्वथा त्वेकमेव स्नानम्। केचित्तु माघवाक्यैः प्रातःस्नान एव माघाख्यगुणात्फलं बोध्यते न तु माघविशिष्टस्नानान्तरं फलाय विधीयते गौरवान्मत्वर्थलक्षणाप्रसङ्गाच्च। तथा च स्नानद्वयप्रसक्त्यभावान्न तन्त्रं न वा प्रसङ्ग इत्याहुः। तन्न। प्रातःस्नानप्रकरणे माघस्नानबोधकानां पाठाभावात्प्रकरणेनाऽऽश्रयाग्रहणादाश्रयसंबन्धस्यापि विधेरेवत्यधिकरणन्यायेन वाक्यभेदापत्तेः कर्मान्तरविधानस्यैवोचितत्वात्। किंच। माघाख्यकालस्यानुपादेयत्वात्प्रातःस्नानप्रकरणाभावाच्च काले कर्मण एव विधेयत्वान्मासाग्निहोत्रवत्प्रकरणान्तरन्यायादपि कर्मान्तरता। एवं च समानकर्मद्वयस्य युगपत्प्रसक्तावुक्तमार्ग एव शरणम्। अन्यथा समानन्यायतया नित्यश्राद्ध एवामावास्याव्यतीपातादिगुणात्फलं स्यादिति पृथक्त्वनिवेशिनी षण्णवतिश्राद्धानीतिसंख्या न युज्येतेति दिक्।

अथ माघस्नानारम्भकालः। तत्र विष्णुः सौरमासमभिप्रेत्याऽऽह—

तुलामकरमेषेषु प्रातःस्नायी सदा भवेत्।
हविष्यं ब्रह्मचर्यं च माघस्नाने महाफलम्॥ इति।

ब्राह्मे तु सावनमानम्—

एकादश्यां शुक्लपक्षे पौषमासे सदा भवेत्।
द्वादश्यां पूर्णिमायां वा शुक्लपक्षे समापनम्॥

पाद्मेऽपि—पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः।
मासमात्रं निराहारस्त्रिवारं स्नानमाचरेत्॥
त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः।
माघस्यैकादशीं शुक्लां यावद्विद्याधरोत्तम॥ इति।

अत्र त्रिवारस्नानं मासोपवासे 'मासमात्रं निराहारः' इत्युक्तेः।

विष्णुः—दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत्।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे॥

त्रिंशद्दिनानि स्नानमाचरेदित्यन्वयः। अत्र दर्शमिति मुख्यचान्द्राभिप्रायेण। अयं तु पक्षो नेदानीं प्रचरति। एतेषां पक्षाणां देशतो व्यवस्था। तत्रापि सावने चान्द्रद्वये वा यदि मकरव्याप्तिस्तदा फलातिशयः। पितृपक्षे कन्यावत्। केचित्तु प्रतिपदमारभ्य स्नानमाहुस्तत्र मूलं मृग्यम्। अत्रैकादश्यां पौर्णमास्यां वाऽऽरम्भे यदा माघस्याधिकमासता भवति तदा काम्यानां तत्र समाप्तिप्रतिषेधादर्धमासानन्तरमधिकपाताच्च मासद्वयं स्नानं तन्नियमाश्चानुवर्तन्ते। मासोपवासचान्द्रायणादीनि तु त्रिंशद्दिनकत्वनियमाच्छुद्धे समारभ्याधिकमध्य एव समापनीयानि। तदुक्तम्—'नियतं त्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेत मलिने मासोपवासव्रतम्' इति। अत्र नियतं त्रिंशद्दिनत्वादितिहेतूक्तिबलान्मासोपवासव्रतमिति चान्द्रायणादेरुपलक्षणम्। सौरपक्षे तु न काचिदनुपपत्तिरधिकापातेऽपीत्यादि। आरम्भे संकल्पमन्त्रश्च विष्णुनोक्तः—

तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकम्।
माघमासमिमं पूर्णं स्नास्येऽहं देव माधव॥
तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि।

अस्य तीर्थस्य जले पूर्णं माघं नित्यं स्नास्य इति मन्त्रलिङ्गाद्यत्र तीर्थादौ स्नानारम्भस्तत्रैव समापनपर्यन्तं स्नानमिति गम्यते, एकप्रयोगाणां चैकदेशत्वस्यैकादशे साधनात्। प्रत्यहसंकल्पमन्त्रश्च पाद्मे—

मकरस्थे रवौ माघे गोविन्दाच्युत माधव।
स्नानेनानेन मे देव यथोक्तफलदो भव॥
इति मन्त्रं समुच्चार्य स्नायान्मौनसमन्वितः।
वासुदेवं हरिं कृष्णं माधवं वा स्मरेत्पुनः॥

अथ माघस्नाने नियमाः। तत्र पाद्मे दत्तात्रेयः—

अथ ते संप्रवक्ष्यामि माघस्नानविधिं परम्।
कर्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः॥
फलातिशयहेतोर्वै किंचिद्भोज्यं त्यजेद्बुधः।
भूमौ शयीत होतव्यमाज्यं तिलसमन्वितम्॥

त्रिकालं चार्चयेन्नित्यं वासुदेवं सनातनम् ।
दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम् ॥
इन्धनं कम्बलं वस्त्रमुपानदाजिनं घृतम् ।
तैलं कार्पासकोष्ठं च उष्णां तूलवतीं पटीम् ॥
अन्नं चैव यथाशक्ति देयं माघे नराधिप ।
सुवर्णं रक्तिकामात्रं दद्याद्वेदविदे तथा ॥
परस्याग्निं न सेवेत त्यजेद्विप्रः प्रतिग्रहम् ।

तथा—माघेऽन्नदाताऽमृतपः सुरालये
हेम्नश्च दाता बलभित्समीपगः ।
दीपाग्निवासांसि ददन्नरः सदा
सूर्यस्य लोके वसति प्रभामयः ॥

नारदीये—

न वह्निं सेवयेत्स्नातो ह्यस्नातोऽपि वरानने ।
होमार्थं सेवयेद्वह्निं शीतार्थं न कदाचन ॥

तथा—अहन्यहनि दातव्यास्तिलाः शर्करयाऽन्विताः ।
त्रिभागस्तु तिलानां हि चतुर्थः शर्करान्वितः ॥
अनभ्यङ्गी वरारोहे सर्वं मासं नयेद्व्रती ।
अप्रावृतशरीरस्तु यः साक्षात्स्नानमाचरेत् ॥
पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः ।
ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदम् ॥
वेदोक्तविधिना राजन्सूर्यायार्घ्यं निवेदयेत् ।
पितॄन्संतर्प्य तत्रस्थोऽवतीर्य च ततो जलात् ॥
इष्टदेवं नमस्कृत्य पूजयेत्पुरुषोत्तमम् ।
शङ्खचक्रधरं देवं माधवं नाम पूजयेत् ॥
वह्निं हुत्वा विधानेन ततस्त्वेकाशनो भवेत् ।
भूशय्याब्रह्मचर्येण शक्तः स्नानं समाचरेत् ॥
अशक्तस्याधनाढ्यस्य स्वेच्छा सर्वत्र कथ्यते ।
अवश्यमिति कर्तव्यं माघस्नानमिति स्मृतिः ॥
ईश्वरेण यथाकामं बलं धर्मोऽनुवर्तते ।
तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ॥

तिलभुक्तिलदाता च पट्तिलाः पापनाशनाः ।
तैलमामलकाश्चैव तीर्थे देयानि नित्यशः ॥
तथा प्रज्वालयेद्वह्निं निवातां कारयेत्कुटीम् ।

पद्मपुराणे सूर्यव्रतमुक्तम्—

माघे मास्युपसि स्नानं कृत्वा दांपत्यमर्चयेत् ।
भोजयित्वा यथाशक्ति माल्यवस्त्रविभूपणैः ॥
सौभाग्यं पदमाप्नोति शरीरारोग्यमुत्तमम् ।
सूर्यलोकप्रदं पुण्यं सूर्यव्रतमिदं स्मृतम् ॥ इति ।

भविष्ये—

माघमासे समुद्युक्तस्त्रिसंध्यं योऽर्चयेद्रविम् ।
लभेत्षाण्मासिकं पुण्यं मासेनैव न संशयः ॥

भारते—

माघं तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
श्रीमान्कुले ज्ञातिमांस्तु स महत्त्वं प्रपद्यते ॥

विष्णुधर्मे—

माघमासे द्विजश्रेष्ठ एकभक्तेन यः क्षिपेत् ।
विष्णुशुश्रूपणपरः स कुले जायते सताम् ॥
अहिंस्रः सर्वभूतेपु वासुदेवपरायणः ।
नमोऽस्तु वासुदेवायेत्यहश्चाष्टशतं जपेत् ॥
अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात् ।

विष्णुधर्मोत्तरे वज्र उवाच—

भगवन्कर्मणा केन विद्यावाञ्जायते नरः ।

मार्कण्डेय उवाच—

पौष्यां तु समतीतायां प्रतिपत्प्रभृतिक्रमात् ।
प्राग्वत्तु पूजयेद्देवं तुरङ्गशिरसं हरिम् ॥

प्राग्वद्रूपावाप्तिव्रतोक्तविधिना । तुरङ्गशिरसं हयग्रीवम् ।

तिलांश्च जुहुयाद्वह्नौ तिलैर्देवं तथाऽर्चयेत् ।
त्रिरात्रोपोपितो माघ्यां तिलान्कनकमेव च ॥

दद्याद्ब्राह्मणमुख्याय सम्यक्प्रयतमानसः ।
मुख्यान्यज्ञोपवीतांश्च(?) सुधूपमपि चन्दनम् ॥
कृत्वा व्रतं मासमिदं यथाव-
द्विद्यान्वितः स्यात्पुरुषः सदैव ।
स्वर्लोकमासाद्य सुखानि भुक्त्वा
कामानभीष्टान्पुरुषोऽश्नुते च ॥

एतानि सूर्यव्रतादीनि पञ्चापि केवलकाम्यानि न तु माघस्नानाङ्गभूतानि । एवमन्यान्यपि ज्ञेयानि । इति माघमासनियमाः ।

एवं कृते माघस्नाने तस्योद्यापनं कार्यम् । तदुक्तं पाद्मे—

माघान्ते भोजयेद्विप्रान्यथाशक्ति नराधिप ।
देया च दक्षिणा तेभ्य आत्मनः श्रेय इच्छता ॥
एकादशीविधानेन व्रतस्योद्यापनं तथा ।
कर्तव्यं श्रद्धधानेन अक्षयं स्वर्गमिच्छता ॥

भविष्ये—

एवं माघावसाने तु देयं भोज्यमवारितम् ।
भोजयेद्द्विजदांपत्यं भूषयेद्वस्त्रभूषणैः ॥
कम्बलाजिनरत्नानि वासांसि विविधानि च ।
चोलकानि च देयानि प्रच्छादनपटास्तथा ॥
उपानहौ तथा गुल्फमोचकौ पापमोचकौ ।
तथाऽन्यद्दयितं किंचिन्माघस्नाने प्रदीयते ॥
तन्माघस्नायिनां देव विप्राणां भूतिमिच्छता ।
स्वल्पे दानेऽपि दातव्यं माधवः प्रीयतामिति ॥

विष्णुस्मृतौ नारदीये च मन्त्रपूर्वकं समापनप्रकार उक्तः—

सवित्रे प्रसवित्रे च परं धाम जले मम ।
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥
दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं करिष्येऽहं माघस्नानं तवाऽऽज्ञया ॥
अहन्यहनि दातव्यास्तिलाः शर्करयाऽन्विताः ।
माघावसाने सुभगे षड्रसं भोजनं तथा ॥
सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः ।
दंपत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते ॥

त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः ।
भागत्रयं तिलानां तु चतुर्थः शर्करान्वितः ॥
मरीचैर्मिश्रिताः शुक्ला नारङ्गाणि च दापयेत् ।
सवितः प्रसवस्त्वं हि परं धाम जले मम ॥
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ।
दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ॥
परिपूर्णं कुरुष्वेह माघस्नानमुपःपते । इति ।

एवं माघस्नाने फलमुक्तं नारदीये—

एवं माघप्लुवी याति भित्त्वा देवं दिवाकरम् ।
परिव्राड्योगयुक्तश्च रणे वाऽभिमुखो हतः ॥
तृतीयोऽत्र वरारोहे माघस्नायी प्रकीर्तितः । इति ।

भविष्ये—

अगम्यागमनात्स्तेयात्पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात्पापान्मुच्यते स्नानमाचरन् ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ प्रयागप्रकरणे माघस्नानविधिः ।

---

अथ प्रयागीयकाम्यकर्मप्रसङ्गात्प्रयागमरणविधयो निरूप्यन्ते । तत्र

समाः सहस्राणि तु सप्त वै जले
दशैकमग्नौ पतने च षोडश ।
महाहवे षष्टिरशीति गोग्रहे
अनाशके भारत चाक्षया गतिः ॥

इति भविष्योत्तरे यत्र कुत्रचिद्देहत्यागे फलमुक्तं तदिह प्रयागरूपक्षेत्रातिशयादतिशयवद्भवति । तत्रापि माघादिकालातिशये सातिशयतरतमादिभावस्तत्तत्पुराणेभ्यो विवेचनीयः । सामान्यतस्तूच्यते । तत्र स्कान्दे—

यथाकथंचित्तीर्थेऽस्मिन्प्राणत्यागं करोति यः ।
तस्याऽऽत्मघातदोषो न प्राप्नुयादीप्सितानपि ॥
यस्य भाग्यवतश्चात्र तिष्ठन्त्यस्थीन्यपि द्विज ।
न तस्य दुःखलेशोऽपि क्वापि जन्मनि जायते ॥

पाद्मे विष्णुः—

देहत्यागं तथा धीराः कुर्वन्ति मम संनिधौ ।
मत्तनुं प्रविशन्त्येव न पुनर्जन्मने नराः ॥

कौर्मे—व्याधितो यदि वा दीनः क्रुद्धो वाऽपि भवेन्नरः ।
गङ्गायमुनमासाद्य यस्तु प्राणान्परित्यजेत् ।
दीप्तकाञ्चनवर्णाभैर्विमानैर्भानुवर्णिभिः ॥
गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ।
ईप्सिताँल्लभते कामान्वदन्ति मुनिपुंगवाः ॥
सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ।
वराङ्गनासमाकीर्णैर्मोदते शुभलक्षणः ॥
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ।
यावन्न लभते जन्म तावत्स्वर्गे महीयते ॥
तस्मात्स्वर्गात्परिभ्रष्टः क्षीणकर्माऽत्यनुत्तमः ।
हिरण्यरत्नसंपूर्णः समृद्धो जायते कुले ॥

तथा—वटमूलं समाश्रित्य यस्तु प्राणान्परित्यजेत् ।
सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥

तथा—या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः ।
सा गतिस्त्यजतः प्राणान्गङ्गायमुनसंगमे ॥

तथा—गङ्गायमुनयोर्मध्ये कर्षाग्निं यस्तु साधयेत् ।
अहीनाङ्गोऽप्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥
यावन्ति रोमकूपाणि तस्य गात्रेषु मानद ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ।
स भुक्त्वा विपुलान्भोगान्सतीर्थं लभते पुनः ।
जलप्रवेशं यः कुर्यात्संगमे लोकविश्रुते ॥
राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः ।
सोमलोकमवाप्नोति सोमेन सह मोदते ॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
स्वर्गतः सर्वलोकेषु मुनिगन्धर्वसेवितः ॥
ततो भ्रष्टस्तु राजेन्द्र समृद्धो जायते कुले ।
अधःशिरास्तु यो ज्वालामूर्ध्वपादः पिबेन्नरः ॥

शतवर्षसहस्राणि स्वर्गलोके महीयते।
तस्माद्भ्रष्टस्तु राजेन्द्र अग्निहोत्री भवेन्नरः॥
भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः।
यः स्वदेहं विकर्तित्वा शकुनिभ्यः प्रयच्छति॥
विहगैरुपयुक्तस्य शृणु तस्यापि यत्फलम्।
शतवर्षसहस्राणि स्वर्गलोके महीयते॥
ततस्तस्मात्परिभ्रष्टो राजा भवति धार्मिकः।
गुणवान्रूपसंपन्नो विद्वान्स प्रियवाक्यवान्॥
भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः।

वराहपुराणे—

तत्र यो मुञ्चति प्राणान्वटमूलेषु सुन्दरि।
सर्वलोकानतिक्रम्य मम लोकं प्रपद्यते॥
ये मृता वटमूले तु मम चित्ते व्यवस्थिताः।
भित्त्वा सर्वाणि लोकानि ते मां पश्यन्ति नित्यशः॥

तथा—अकामो वा सकामो वा वटमूलेषु सुन्दरि।
शीघ्रं प्राणान्प्रमुञ्चेत यदीच्छेत्परमां गतिम्॥

मात्स्यभारतकौर्मादिषु—

न लोकवचनात्तात न वेदवचनादपि।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति॥

मात्स्ये—उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे।
परित्यजति यः प्राणाञ्शृणु तस्यापि यत्फलम्॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च।
सेवते पितृभिः सार्धं स्वर्गलोकं नराधिप॥
उर्वशीं तु सदा पश्येद्देवलोके नरोत्तम।
पूज्यते सततं तत्र ऋषिगन्धर्वकिंनरैः॥
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः।
उर्वशीसदृशीनां तु कन्यानां लभते शतम्॥
मध्ये नारीसहस्राणां बहूनां च पतिर्भवेत्।
दश ग्रामसहस्राणां भोक्ता भवति भूमिपः॥
काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते।

भुक्त्वा तु विपुलान्भोगांस्तत्तीर्थं लभते पुनः ॥
तथा—कोटितीर्थं समासाद्य यस्तु प्राणान्परित्यजेत् ।
कोटिं वर्षसहस्राणि स्वर्गलोके महीयते ॥
ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ।
सुवर्णमणिमुक्ताढ्ये कुले जायेत रूपवान् ॥
तथा—अनाशकफलं ब्रूहि भगवंस्तत्र कीदृशम् ।
कं च लोकमवाप्नोति विशुद्धः सर्वकिल्बिषैः ॥

मार्कण्डेय उवाच—

शृणु राजन्प्रयागे तु अनाशकफलं महत्।
प्राप्नोति पुरुषो धीमाञ्श्रद्दधानो जितेन्द्रियः ॥
अहीनाङ्गोऽप्यरोगश्च पञ्चेन्द्रियसमन्वितः ।
अश्वमेधफलं तस्य गच्छतस्तु पदे पदे ॥
कुलानि(नां) तारयेद्राजन्दश पूर्वान्दशापरान्।
मुच्यन्ते सर्वपापेभ्यो गच्छेच्च परमं पदम् ॥
तथा—पञ्चयोजनविस्तीर्णे प्रयागस्य तु मण्डले ।
व्यतीतान्पुरुषान्सप्त भविष्यांश्च चतुर्दश ॥
नरस्तारयते सर्वान्यस्तु प्राणान्परित्यजेत् ।
माघमासे प्रयागे प्राणत्यागे मुक्तिफलम् ॥
तदुक्तं ब्रह्मपुराणे—
ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः ।
तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः ॥
तथा—दुष्कृतोऽपि दुराचारो ब्रह्महत्यादिपातकी ।
हरिं ध्यात्वा त्यजन्देहं प्रायशो मुक्तिमान्भवेत् ॥

एवं नानापुराणवचनैः प्रयागे मरणं जलप्रवेशानशनादिभिः प्रकारैर्नानाफलार्थत्वेन मोक्षार्थतया च विधीयते । मोक्षार्थत्वे श्रुतिरपि 'सितासिते सरिते' इत्यादिका पूर्वमुक्ता व्याख्याता च । एष चात्र निष्कर्षः—प्रारब्धाप्रारब्धतया द्विविधे कर्मणी किंचित्प्रारब्धं मुक्त्वाऽन्तरा प्रयागमरणेन प्रारब्धशेषभोगप्रतिबन्धादेतत्फलभोगानन्तरं प्रारब्धशेषभोगो भोगादेव प्रारब्धक्षयात् । अप्रारब्धं च फलदानोन्मुखानुन्मुखतया द्विविधम् । तत्र यदुन्मुखं तत्प्रयागमरणेनापनोद्यते प्रायश्चित्तेनेव

अन्यथा स्वर्गादिफलानुपपत्तेः । तावतैव पापक्षयप्रतिपादकशास्त्रोपपत्तेः फलदानु ( नो )न्मुखनाशकल्पने प्रमाणाभावात्प्रयागमरणसाध्यस्वर्गादिभोगानन्तरं तदुपभुज्यत इति । केचित्तु ' विमुक्तः सर्वपातकैः ' इति पूर्वोक्तकूर्मपुराणवचनस्थसर्वशब्दस्वरसाद्द्विविधस्याप्यप्रारब्धस्य क्षयमाहुः । मोक्षार्थं प्रयागमरणे तु सर्वपापक्षये नास्ति विवादः ।

ननु ' असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः ' [ ईशावा० ३ ] इतीशावास्यश्रुत्या तथा 'तस्मादु ह न पुराऽऽयुषः स्वःकामी प्रेयात्' इति च श्रुत्याऽऽत्महननिषेधात्स्वर्गादिनानाफलविषयातिप्रवृद्धाभिलाषात्प्रत्युपदिश्यमानमिदं मरणं फलमपि साधयेत्प्रत्यवायं च जनयेच्छ्येनवत् । यथा वैरिणि तीव्रक्रोधाक्रान्तस्वान्तस्य न हिंस्यात्सर्वा भूतानीतिप्रतिषेधशास्त्रमतिक्रामतः श्येनयाग इति । अत एव चोदनासूत्र एतादृशानां कर्मणां धर्मत्वनिराकरणार्थमर्थग्रहणमिति चेत् । उच्यते । ये तावच्छ्येनकरणिकाया भावनाया भाव्यभूताभिचारशब्दवाच्यवैरिहिंसायां फलांशे भावनायास्तु प्रत्ययो न विधायक इति भट्टोक्त्या तस्य लिप्सार्थलक्षणेति च जैमिन्युक्त्या विधिसंस्पर्शाभावेन प्रतिषेधविषयत्वात्फलद्वारेण श्येनस्यानर्थत्वं वदन्ति तेषां मते प्रस्तुते स्वर्गार्थस्येनाऽऽत्महननस्यैव ' ये वै तन्वं विसृजन्ति धीराः ' इति श्रुत्या पूर्वोदाहृतनानापुराणवाक्यैश्च विधानाद्विधिस्पृष्टे च निषेधाप्रवृत्तेरग्नीषोमीयपशुहिंसावत्सर्वस्वारगतयजमानाग्निप्रवेशवच्च स्पष्टमेव श्येनवैषम्यम् । ये तु हिंसा नाम मरणानुकूलो व्यापारः श्येनश्च वैरिमरणानुकूलव्यापारत्वाद्धिंसा सा च प्रतिषिद्धेतिभाष्यस्वरसाच्च हिंसैव काम्येषु च फलांश इव करणांशेऽपि रागत एव प्रवृत्तिसंभवेन विधेरप्रवर्तकत्वाद्रागप्रयुक्तहिंसारूपत्वात्प्रतिषिद्ध एवातः स्वरूपेणैवानर्थ इति मन्यन्ते तन्मतेऽपि प्रयागमरणविधायकवचनैः फलार्थतया तद्बोधनान्मरणे यद्यपि रागतः प्रवृत्तिस्तथाऽपि मरणानुकूले जलप्रवेशादिव्यापार इतिकर्तव्यतारूपेऽग्नीषोमीयवद्विहित एव प्रवृत्तिरिति विधिस्पृष्टत्वान्निषेधानवकाशः । तदुक्तं वार्तिके—' तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ' इति । एतदधर्मत्वम् । तस्मात्साधनत्वादङ्गत्वाद्वा निषेधाप्रवृत्तिः । तदप्युक्तम्—

हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ।
प्रत्यवायार्थताज्ञानं विधिनाऽन्यत्र वार्यते । इति ॥

या तु तस्मादु ह नेत्यादिश्रुतिः सा विहितमार्गेण स्वेच्छयाऽऽत्महननिषेधार्था । यद्वा यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितान्तःकरणकलङ्कः श्रवणमननाद्युपायसंपत्त्याऽऽत्मज्ञानेन निरतिशयानन्दब्रह्मप्राप्तिलक्षणमोक्षमपि साधयितुं शक्नोति तस्मादनित्याल्पस्वर्गादिसुखार्थमायुषः प्राङ्न प्रेयादायुर्व्ययं न कुर्यान्मोक्षार्थीत्यर्थः । अतश्च मोक्षमनिच्छतोऽनित्याल्पसुखेऽपीच्छावतः प्रयागमरणं न दोषाय पुरुषबुद्धिवैचित्र्येण तदिच्छाया अनियम्यत्वात् । अत एव स्त्रीणां सहगमने यजमानस्य च सर्वस्वारे न दोषः । यदा तु मोक्षार्थमेव पूर्वोदाहृतवाक्यवशात्प्रयागमरणे प्रवर्तते तदा तस्मादु हेतिश्रुतिविरोध एव नास्ति मोक्षार्थमेव मरणे प्रवृत्तेः । असुर्या इति श्रुतिस्तु प्रकरणादात्महशब्देनानात्मज्ञोक्तेरविद्वन्निन्दार्थेतीशावास्यभाष्ये व्याख्यातं शंकराचार्यैरिति तथाऽप्यविरोधः । ये तु बाह्याः सांख्या वाऽग्नीषोयादिविधेः क्रत्वर्थत्वान्न हिंस्यादितिनिषेधस्य च पुरुषार्थत्वाद्भिन्नविषयत्वेन विरोधाभावान्नाग्नीषोमीयालम्भविधिना न हिंस्यादिति शास्त्रं बाध्यते ततश्च पशुहिंसा क्रत्वर्थविधिबलात्क्रतोश्चोपकरिष्यति निषेधबलाच्च पुरुषे दोषमावक्ष्यतीति वदन्ति तन्मतेऽपीह प्रयागमरणस्य फलसाधनतया पुरुषार्थत्वात्काम्यत्वेन पुरुषार्थनिषेधबाधकता संभवत्येव समानविषयत्वात् । वस्तुतस्तु सकलवेदविप्लवापत्तेरिदं मतमयुक्तमेवेति वार्तिकादेरवगन्तव्यम् । विस्तरभयात्प्रस्तुतार्थसिद्धेरन्यथाऽप्युपपत्तेश्च नेह दूष्यते । तत्सिद्धं फलान्तरार्थं मोक्षार्थं वा प्रयागमरणे न कश्चिद्दोष इति । केचित्तु प्रयागमरणं न सर्ववर्णसाधारणम् ।

शूद्राश्च क्षत्रिया वैश्या अन्त्यजाश्च तथाऽधमाः ।
एते त्यजेयुः प्राणान्वै वर्जयित्वा द्विजं नृप ॥
पठि(ति)त्वा ब्राह्मणस्तत्र ब्रह्महा वाऽऽत्म[हा] भवेत् ।

इति ब्राह्मणस्य निषिद्धत्वादित्याहुः । तन्न । एतद्वाक्यस्याऽऽकराज्ञानात् । तैरप्याकरानुक्तेः । क्षत्रियादीनां प्राणत्यागं विधाय वर्जयित्वा द्विजमिति परस्परविरोधश्च । क्षत्रियवैश्ययोरपि द्विजत्वात् । तदाह याज्ञवल्क्यः—

मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः । इति ॥

किंचाग्निपुराणे—

न लोकवचनाद्विप्र न वेदवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥

इति विप्रशब्देन वसिष्ठं संबोध्यते त्वया नोत्क्रमणीयेतिवचनाद्ब्राह्मणस्याप्यधिकारः । यत्त्वत्रोच्यते स्मृत्या श्रुतिसंकोचासंभवात्तस्मादु ह न पुराऽऽयुषः स्वःकामी प्रेयादिति श्रुत्या पुराणसंकोच इति तद्भ्रान्तजल्पितमेव । पुराणवचनैरेव सामान्यप्रवृत्तश्रुतेः क्षत्रियादिविषयेऽप्रवृत्तिरूपसंकोचस्य तेनाप्यङ्गीकारात् । अनन्यगतिकपुराणवचनवशाच्छ्रुतिसंकोचस्य सर्वसिद्धत्वादानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात् । किंच यदि श्रुतिर्ब्राह्मणमात्रविषया भवेत्तदा भवेदपि पुराणवचसां सामान्यप्रवृत्तानां श्रुतिवशाद्ब्राह्मणातिरिक्तविषयतया संकोचः । न तु तदस्ति । अविशेषप्रवृत्तत्वाच्छ्रुतेः । यद्यपि वा स्याद्ब्राह्मणविषयता तथाऽपि तीर्थविशेषानधिकारात्तीर्थविशेषप्रयागादिविषयैः पुराणवाक्यैरेव श्रुतिसंकोचो युक्तः । तथा च हेमाद्र्यादिष्वादि[त्य]पुराणवाक्यानि ब्राह्मणस्यापि मरणविधायकानि । 'वृद्धः शौचस्मृतेर्लुप्तः' इत्याद्युपक्रम्य—

गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ।
प्रयागवटशाखायां देहत्यागं करोति वा ॥
स्वयं देहविनाशस्य काले प्राप्ते महामतिः ।
उत्तमान्प्राप्नुयाल्लोकान्नाऽऽत्मघाती भवेत्क्वचित् ॥
एतेषामधिकारस्तु सर्वेषां सर्वजन्तुषु ।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥
आशौचं स्यात्त्र्यहं तेषां वज्रानलहतेषु च ।

विवस्वान्—

सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च ॥
प्रायश्चित्तमनुज्ञातमग्निपातो महापथः ।
धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य च ॥
ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम् ।

धर्मार्जनासमर्थस्य द्वादशवार्षिकादिरूपप्रायश्चित्तासमर्थस्य । तादि
द्धं ब्राह्मणस्यापि प्रयागे शरीरोत्सर्गेऽधिकार इति । अत्र केचित्
नित्यनैमित्तिककर्मानुष्ठानासमर्थस्याचिकित्स्यरोगाद्युपहतिवतोऽतिवृद्ध
स्य वा विशेषोपदिष्टप्रायश्चित्ताचरणासमर्थस्य पातकिनो वाऽत्राधि
कारो न तु समर्थशरीरादेः पूर्वोक्तादित्यपुराणविवस्वद्वाक्येषु तथैवोक्तेः
विष्णुधर्मोत्तरेऽपि—

नरो यो व्याधिरहितो न त्यजेदात्मनस्तनुम् ।
अरिष्टैरात्मनो ज्ञात्वा मृत्युकालमुपस्थितम् ॥
व्याधितो भिषजा त्यक्तः पूर्णे वाऽऽयुषि चाऽऽत्मनः ।
यथायुगानुसारेण संत्यजेदात्मनस्तनुम् ॥
तस्मिन्काले तनुत्यागाद्यथोक्तफलभाग्भवेत् ।
आयुषस्तु पुरा हृष्टं मरणं ब्राह्मणस्य च ॥
क्षत्रियस्य तु सङ्ग्रामे मृते भर्तरि योषितः ।
ब्राह्मणार्थे गवार्थे वा संत्यजेदात्मनस्तनुम् ॥
सर्वो ह्यप्राप्तकालोऽपि गतिमिष्टामवाप्नुयात् ।

आदित्यपुराणे—

समायुक्तो भवेद्यस्तु पातकैर्महदादिभिः ।
दुश्चिकित्स्यैर्महारोगैः पीडितो वा भवेत्तु यः ॥
स्वयं देहविनाशस्य प्राप्ते काले महामतिः ।
अब्राह्मणो वा स्वर्गादिमहाफलजिगीषया ॥
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ।
अगाधं तोयराशिं वा भृगोः पतनमेव च ॥

ततो गच्छेन्महापथमित्यादि सर्वदेत्यन्तं पूर्ववत् ।

स्कान्दे—स्वसारं मातरं चैव भगिनीं ब्राह्मणीं सतीम् ॥
मासोपवासिनीं गत्वा गुरुपत्नीं तथैव च ।
कारीषाग्निं विशेद्विप्रो गच्छेच्चैव महापथम् ॥

मात्स्ये—आर्तानां च दरिद्राणां निश्चित्य व्यवसायिनाम् ।
स्थानं मुक्त्वा प्रयागं तु नाऽऽख्येयं तु कदाचन ॥

एतदनन्तरं 'व्याधितो यदि वा दीनः' इत्यादि पूर्वोक्तकौर्मवदेव
तस्माद्ब्राह्मणादेः सर्वस्याऽऽतुरादेरेवाधिकार इति । अन्ये तु ब्राह्म

स्याऽऽतुरादेरेवाधिकारः क्षत्रियादेस्त्वनातुरादेरपि स्वर्गादिकामनया । अब्राह्मणो वा स्वर्गादिमहाफलजिगीषयेति पूर्वोक्तादित्यपुराणवचनादिति । इदं मतद्वयमप्ययुक्तमादित्यपुराणादीनां प्रयागविषयत्वाभावात् । यस्त्वार्तानामित्यादि मात्स्यं व्याधित इत्यादि च कौर्मं वचस्तत्तेषामपि प्रापयति न त्वन्यस्य निषेधति त्रिदोषपरिसंख्यापत्तेः । अथाऽऽग्नेयादिवचनवदुपसंहारपरतोच्येत तथा सति फलान्तरश्रवणानर्थक्यम् । तस्मादातुरादेरनातुरादेश्च सर्वस्याधिकारः । किंतु वृद्धौ पितरौ तरुणीं भार्यां पोष्यमपत्यं च विहाय नाधिकारः । एवं स्त्रिया अपि गर्भिण्या बालापत्याया भर्त्राऽननुज्ञातया वा नाधिकार इत्यादि ज्ञेयम् । अत्र च यथाशक्ति प्रायश्चित्तं कृत्वा स्वीयश्राद्धाधिकार्यभावे जीवच्छ्राद्धं च सपिण्डनान्तं निर्वर्त्य सर्वस्वं ब्राह्मणदीनानाथेभ्यो दत्त्वा कृतोपवासः पारणाहे फलोल्लेखपूर्वकं संकल्प्य विष्णुं ध्यायञ्जलप्रवेशादि कुर्यात् । इति संक्षेपतो विधिः । विशेषस्तु हेमाद्रीयशरीरोत्सर्गविधेरवगन्तव्यः । एवं च मृतानां त्रिरात्रमेवाऽऽशौचं सर्ववर्णसाधारणं न तु दशरात्रादि । तदुक्तम्—

> वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
> आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
> तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ।
> तृतीये तूदकं दत्त्वा चतुर्थे श्राद्धमाचरेत् । इति ॥
> आशौचं स्यात्त्र्यहं तेषां वज्रानलहतेषु च । इति ।

श्राद्धमेकादशाहिकम् । पुत्रस्यापि त्र्यहमेवाविशेषात् । दिवोदासीयेऽप्येवम् । इदानीं तु दशाहाद्येवाऽऽचरन्ति सपिण्डाद्याः ।

इति त्रिस्थलीसेतौ प्रयागप्रकरणे तत्रत्यमरणविचारः ।

अथ प्रयागीयनानातीर्थानि ।

कौर्मे मात्स्ये च—

> कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे ।
> तत्र स्नात्वा च पीत्वा च मुच्यते सर्वपातकैः ॥
> तत्र गत्वा नरः स्थानं महादेवस्य धीमतः ।
> स्वात्मानं तारयेत्पूर्वं दशातीतान्दशावरान् ॥
> कृत्वाऽभिषेकं तु नरः सोऽश्वमेधफलं लभेत् ।
> स्वर्गलोकमवाप्नोति यावदाभूतसंप्लवम् ॥

पूर्वपार्श्वे तु गङ्गायास्त्रैलोक्ये ख्यातिमान्नृप ।
अवटः सर्वसामुद्रः प्रतिष्ठानं च विश्रुतम् ॥
ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति ।
सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥
उत्तरेण प्रतिष्ठानाद्भागीरथ्यास्तु पूर्वतः ।
हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥
अश्वमेधफलं तत्र स्नातमात्रस्य जायते ।
यावच्चन्द्रश्च सूर्यश्च तावत्स्वर्गे महीयते ॥

तथा—यामुने चोत्तरे तीरे प्रयागस्य तु दक्षिणे ।
ऋणप्रमोचनं नाम तीर्थं तु परमं स्मृतम् ॥
एकरात्रोषितः स्नात्वा ऋणात्तत्र प्रमुच्यते ।
सूर्यलोकमवाप्नोति अनृणी च सदा भवेत् ॥

तथा—अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे ।
पश्चिमे धर्मराजस्य तीर्थं त्वनरकं स्मृतम् ॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।
कृष्णपक्षे चतुर्दश्यां स्नात्वा संतर्प्य वै शुचिः ॥
धर्मराजं महापापैर्मुच्यते नात्र संशयः ।
दश तीर्थसहस्राणि त्रिंशत्कोट्यस्तथाऽपराः ॥
प्रयागे संस्थितानि स्युरेवमाहुर्मनीषिणः ।
तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ।
दिवि भुव्यन्तरिक्षे च तत्सर्वं जाह्नवी स्मृता ॥
यत्र गङ्गा महाभागा स देशस्तत्तपोवनम् ।
सिद्धिक्षेत्रं तु तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥
यत्र देवो महादेवो देव्या सह महेश्वरः ।
आस्ते देवेश्वरो नित्यं तत्तीर्थं तत्तपोवनम् ॥

मत्स्यपुराणे—अथ संध्यावटे रम्ये ब्रह्मचारी जितेन्द्रियः ।
उपासीनः शुचिः संध्यां ब्रह्मलोकमवाप्नुयात् ॥

तथा—ततो भोगवतीं गत्वा वासुकेरुत्तरेण तु ।
दशाश्वमेधिकं चैव तीर्थं तत्र परं भवेत् ॥
कृताभिषेकस्तु नरः सोऽश्वमेधफलं लभेत् ।

धनाढ्यो रूपवान्दाता दक्षो भवति धार्मिकः ॥
चतुर्वेदेषु यत्पुण्यं सत्यवादिषु यत्फलम् ।
अहिंसायास्तु यो धर्मो गमनादेव तत्फलम् ॥

तथा—मानसं नाम तीर्थं तु गङ्गायामुत्तरे तटे ।
त्रिरात्रोपोषितः स्नात्वा सर्वकामानवाप्नुयात् ॥
गोभूहिरण्यदानेन यत्फलं प्राप्नुयान्नरः ।
स तत्फलमवाप्नोति तत्तीर्थं स्मरते तु यः ॥

तथा—तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
समागता महाभागा यमुना यत्र निम्नगा ॥
येनैव निःसृता गङ्गा तेनैव यमुना गता ।
योजनानां सहस्रेषु कीर्तनात्पापनाशिनी ॥
तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर ।
कीर्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति ॥
अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ।
प्राणांस्त्यजति यस्तत्र स याति परमां गतिम् ॥

इदं सर्वं प्रयागावच्छिन्नयमुनाविषयम् ।

तथा—एवं तीर्थसहस्राणि यमुनादक्षिणे तटे ।
उत्तरेण प्रवक्ष्यामि आदित्यस्य महात्मनः ॥
तीर्थं निरुजकं नाम यत्र देवाः सवासवाः ।
उपासन्ते तथा संध्यां नित्यकालं युधिष्ठिर ॥
देवाः सेवन्ति तत्तीर्थं ये चान्ये विबुधा जनाः ।

अग्निपुराणे—

वासुकेर्भोगवत्यत्र हंसस्याऽऽयतनं परम् ।
उर्वशीपुलिनं रम्यं तीर्थं संध्यावटस्तथा ॥
कोटितीर्थं चाऽऽश्वमेधं गङ्गायमुनमुत्तमम् ।
मानसं च तमोहीनं तीर्थं च ऋणमोचनम् ॥

इत्यादितीर्थान्युक्तानि ।

ब्रह्मपुराणे—

यमस्य भगिनी साक्षाद्भानोः कन्याऽतिपावनी ।
तत्र स्नात्वा नरा यान्ति सूर्यमण्डलभेदिनः ॥

८

तथा—यमस्वसारमाश्रित्य तर्पयन्ति स्वकान्पितॄन् ।
ते सर्वे याम्यनिर्मुक्ता यान्ति विष्णोः परं पदम् ॥
तथा—सर्वत्र सुलभा देवी कालिन्दी पुण्यवर्धिनी ।
सा यत्र संगता देव्या गङ्गया तत्र दुर्लभा ॥
अथ विकिरं ब्रह्मपुराणे—

कालिन्द्यां स्वर्धुनी या तु पञ्चक्रोशावधिर्नृप ।
पुण्यपूर्णाऽपि सा देवी विकीर्णा लीलया हरेः ॥
तस्मात्तु विकिरं प्रोक्तं तीर्थं त्रैलोक्यविश्रुतम् ।
विकिरं ये समासाद्य कुर्वन्ति ब्रह्मवित्तमाः ॥
विकिरं विष्णवे तत्र पूजां मन्त्रविधानतः ।
नमः परपुरुषाय नमस्ते शार्ङ्गपाणये ॥
इमां विकिरपूजां तु गृहाण मधुसूदन ।
इमं मन्त्रं समुच्चार्य वासुदेवाय वै नमः ॥
पुष्पाञ्जलिविधानं तु कुर्याद्भक्तिसमन्वितः ।
विकिरे पुण्यतीर्थे तु ये कुर्वन्ति सकृन्नराः ॥
पितॄनुद्दिश्य श्राद्धं ते पुनन्त्याकोटि पूर्वजान् ।
तथा—कानि कानि च तीर्थानि तत्र तत्र च देवताः ।
इति नारदेन पृष्टो ब्रह्मोवाच—

वत्सेदं संप्रवक्ष्यामि प्रयागस्य महात्मनः ।
असंख्यातानि तीर्थानि दैवतानि शुभानि च ॥
पञ्चक्रोशस्य सर्वत्र यावन्तः परमाणवः ।
एकैकस्मिन्सदा सन्ति ह्यसंख्यानि पृथक्पृथक् ॥
इत्याद्युक्त्वाऽनन्तरम्—

तथाऽपि कथयिष्यामि तीर्थप्राचुर्यतो भृशम् ।
यद्कूले तु हरिः साक्षाद्वर्तते विश्वरूपधृत् ॥
गङ्गायाः पश्चिमे तीरे ब्रह्मकुण्डोऽस्ति शोभनः ।
तत्राहमयजं देवमश्वमेधैर्दशोन्मितैः ॥
दशाश्वमेधिकं नाम तीर्थं त्रैलोक्यपावनम् ।
तस्य संदर्शनादेव महापातककोटयः ॥
भस्मी भवन्ति सर्वेषामग्निना तूलराशिवत् ।
तस्माद्विंशतिहस्तेषु शङ्खतीर्थं तु पावनम् ॥

शङ्खेन स्नापितो देवो मया तत्र जनार्दनः ।
तत्राऽऽस्ते भगवान्विष्णुः शङ्खपाणिश्चतुर्भुजः ॥
स्नात्वा तत्र समर्चन्ति शङ्खेन मधुसूदनम् ।
ते सर्वे पापनिर्मुक्ता यास्यन्ति हरिमन्दिरे ॥
तस्य दक्षिणतो विप्र तार्क्ष्यकेतुर्विराजते ।
मम प्रीत्या समायातस्त्रैलोक्ये भगवान्प्रभुः ॥
तत्तीर्थमहिमानं न कोऽपि वर्णयितुं क्षमः ।
तत्र स्नात्वा हरिं पूज्य मुच्यते भवबन्धनात् ॥
तस्मादाग्नेये मुनिश्रेष्ठ चक्रतीर्थं सुशोभनम् ।
तत्र साक्षाच्छ्रियः कान्त क्षेत्ररक्षाविधायकः ॥
सुदर्शनेन चक्रेण भक्तविघ्नविनाशनः ।
तत्र स्नात्वा हरिं पूज्य विष्णुलोकं तु गच्छति ॥

तथा—गङ्गायमुनयोर्यत्र संगमः पुण्यसंगमः ।
तत्र माधवदेवेशो वर्तते जगदीश्वरः ॥
यस्तु प्रयागतीर्थेषु स्नानं कृत्वा विधानतः ।
पूजयेन्माधवं देवं स वैकुण्ठे वसेत्सदा ॥

तथा दशाश्वमेधमुक्त्वा—

तस्माद्दक्षिणतो विप्र लक्ष्मीतीर्थं सुशोभनम् ।
लक्ष्म्या सह जगन्नाथः क्रीडते यत्र माधवः ॥
तत्र यः स्नाति पुण्यात्मा विष्णुलोकं स गच्छति ।
तस्माद्दक्षिणतो विप्र काश्यपं तीर्थमुत्तमम् ॥
काश्यपाय हरिस्तुष्टो वामनाख्यो विराजते ।
तत्र स्नात्वा हरेः पूजां करोति विमलाशयः ॥
तस्य जन्मभयं नास्ति मुक्तिभागी भवेद्ध्रुवम् ।
तदग्रे पापमोचं तु तीर्थं त्रैलोक्यविश्रुतम् ॥
यस्य संदर्शनादेव सर्वस्माद्धि ऋणाच्छुचिः ।
तदग्रे कापिलं तीर्थं यत्राऽऽस्ते इन्दिरेश्वरः ॥

तथा—गङ्गायाः पूर्वभागे तु देवगोष्ठेति विश्रुता ।
तत्राहं सततं वत्स वसे देवैः समन्वितः ॥

तथा—गङ्गाया दक्षिणे तीरे माधवोऽनन्तमाधवः ।
वर्तते विबुधैः सार्धमनन्तोऽनन्तशक्तिभिः ॥

पश्चिमे(श्राद्)विकिरमारभ्य पूर्वे सोमायनावधि ।
यत्र संमिलिता पुण्या गङ्गा द्वाभ्यां सुशोभना ॥
तावत्सुधारसं नाम तीर्थं त्रैलोक्यपावनम् ।

तथा—सोमतीर्थेषु यः स्नात्वा पूजयेत्पुरुषोत्तमम् ।
तस्य वै जननीगर्भे वासो नास्ति सुनिश्चयात् ॥

अथ वटमहिमा ब्राह्मे—

तत्र चाऽऽस्ते वटो दिव्यः सर्वदेवमयो महान् ।
तस्य संस्मरणादेव सर्वपापैः प्रमुच्यते ॥
मूलं विष्णुः स्वयं साक्षात्स्कन्धा लक्ष्मीः स्वयं शुभा ।
पत्राणि भारती देवी पुष्पाणि विबुधेश्वरः ॥
ब्रह्मा फलानि सर्वाणि सर्वाधारो हरिः प्रभुः ।
वेदशास्त्रपुराणानि दानतीर्थव्रतानि च ॥
तानि सर्वाणि वर्तन्ते प्रयागवटके शुभे ।
प्रयागस्य वटं पुण्यं यः समाश्रित्य पुण्यकृत् ॥
यानि श्रेयांसि कुरुते तदानन्त्याय कल्पते ।
यः पुमान्वटमाश्रित्य सर्वदेवेश्वरं हरिम् ॥
पूजयेत्परया भक्त्या तस्य वासो हरेः पुरे ।
पूर्वजन्मार्जितैः पुण्यैर्लब्ध्वा क्षेत्रमनुत्तमम् ॥
प्रयागवटमासाद्य मुक्तो भवति पातकी ।
वेण्यां स्नात्वा महात्मानो वटमासाद्य भक्तितः ॥
हृषीकेशं समभ्यर्च्य यान्ति विष्णोः परं पदम् ।
सितासिते यत्र तरङ्गचामरे
नद्यौ विभाते मुनिभानुकन्यके ॥
नीलातपत्रं वट एव साक्षा-
त्स तीर्थराजो जयति प्रयागः ॥ इति ।

पाद्मे—अक्षयोऽयं सुरैः सेव्य आपातालजटो वटः ।
मृकण्डसूनुना यत्र प्रविश्य मन्मुखे स्थितम् ॥
लोके जलाकुले सोऽयं योगशायी मुरान्तकः ।
सेयं भगवती शंभोर्वल्लभा ललिता भृशम् ॥
सिद्ध्यर्थं सेव्यते सिद्धैर्मुक्तिमुक्तिफलप्रदा । इत्यादि ।

अथ प्रयागतीर्थप्रसङ्गाच्चतुराननेनापि विशिष्याशक्यकथनगुणगणायाः श्रीमद्गङ्गाया यथा शक्नुयात्तथा कुर्यादित्युपबन्धमाश्रित्य महिमोच्यते । तत्र महाभारते शिलवृत्तिरुवाच—

के देशाः के जनपदाः के श्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥

सिद्ध उवाच—

ते देशास्ते जनपदास्ते श्रमास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्ये याति सरिद्वरा ॥
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं यां लभते जन्तुर्गङ्गां संसेव्य तां लभेत् ॥
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति ते जनाः ॥
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते ते प्रयान्त्युत्तमां गतिम् ॥
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥

व्युष्टिः पुण्योपचयः ।

यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
अपहृत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहृत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥

तथा—त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥
यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां निर्हारनिर्मुक्ताद्यावकात्तद्विशिष्यते ॥
इन्दुव्रतसहस्रं तु यश्चरेत्कायशोधनम् ।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वा समौ ॥

इन्दुव्रतं चान्द्रायणम् ।

तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
लम्बेतावाक्शिरा यश्च युगानामयुतं पुमान् ॥
तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ।

तथा—भूतानामपि सर्वेषां दुःखोपहतचेतसाम् ॥
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ।
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ॥
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ।

तथा—सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे ॥
पुमांस्तारयते गङ्गा वीक्ष्य स्पृष्ट्वाऽवगाह्य च ।
श्रुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ॥
गङ्गा तारयते पुंसामुभौ वंशौ विशेषतः ।
य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ॥
स पितॄंस्तर्पयेद्गङ्गामभिगम्य गुरूंस्तथा ।
न सुतैर्न च वित्तेन कर्मणा न च तत्फलम् ॥
प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाश्रयात् ।

ब्रह्मपुराणे—

वर्णानां ब्राह्मणो यद्वत्तथा तीर्थेषु जाह्नवी ।
स्वर्गस्थैर्गगनस्थैश्च तथा पातालवासिभिः ॥
अवगाह्या सदा गङ्गा पूज्या वन्द्या च सर्वदा ।
षष्ठ्यादौ कृष्णपक्षे तु भूमौ संनिहिता भवेत् ॥
यावत्पुण्याममावास्यां दिनानि दश नित्यशः ।
शुक्लप्रतिपदारभ्य दिनानि दशसंख्यया ॥
पाताले संनिधानं तु करोति स्वयमेव हि ।
शुक्लैकादशीमारभ्य दिनानि दश यानि तु ।
पञ्चम्यन्तानि सा स्वर्गे भवेत्संनिहिता सदा ॥

तथा—अवगाहनमात्रेण मानवानां सदैव हि ।
पापौघं निर्दहेद्गङ्गा तूलराशिमिवानलः ॥

तथा—विनयाचारहीनाश्च ये भवन्त्यशुभा नराः ।
गङ्गामाश्रित्य ते सर्वे भवन्ति निर्मलाः शुभाः ॥
न पुत्रैर्न महादानैर्न चान्यैश्च स्वकर्मभिः ।
भवेत्पुण्यफलं पुंसां यथा लब्ध्वा तु जाह्नवीम् ॥

तथा—सकृत्तीर्थं निषेवेत गङ्गां चैव पुनः पुनः ।
सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः ॥

विष्णुपुराणे—

ततः प्रभवति ब्रह्मन्सर्वपापहरा सरित्।
देवदानवनागानामनुलेपनपिञ्जरा॥

इत्याद्युपक्रम्योक्तम्—

जगतः पावनार्थाय प्रयाति च चतुर्दिशम्।
सीता चालकनन्दा च चक्षुर्भद्रा च संस्थिता॥
एकैव या चतुर्भेदा दिग्भेदगतिलक्षणा।
भेदं चालकनन्दाख्यं यस्याः सर्वोऽपि दक्षिणम्॥
दधार शिरसा प्रीत्या वर्षाणामधिकं शतम्।
शंभोर्जटाकलापाच्च विनिष्क्रान्ताऽस्थिशर्करा॥
पावयित्वोज्जहाराऽऽशु सा पापान्सगरात्मजान्।
स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति॥
अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते।
दत्ताः पितृभ्यो यत्राऽऽपो मानवैः श्रद्धयाऽन्वितैः॥
समात्रयं प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम्।
यस्यामिष्ट्वा महायज्ञैर्यज्ञेशं पुरुषोत्तमम्॥
द्विजरूपाः परां सिद्धिमवापुर्दिवि चेह च।
श्रुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता॥
या पावयति भूतानि कीर्तितैव दिने दिने।
गङ्गा गङ्गेति यन्नाम योजनानां शतेष्वपि॥
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयार्जितम्।
यतः सा पावनायालं त्रयाणां जगतामपि॥
समुद्भूता परं तत्तु तृतीयं भगवत्पदम्।

तथा—शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्दने॥

आग्नेये गङ्गां प्रति विष्णुवचः—

ये मुञ्चन्ति नराः प्राणांस्तिष्ठन्तः संनिधौ तव।
ते मे लोकं गमिष्यन्ति पूज्यमाना दिवौकसाम्॥

ब्रह्माण्डपुराणे—

अनाशकं गृहीत्वा यो गङ्गातीरे मृतो नरः।
सद्य एव परं मोक्षमाप्नोति पितृभिः सह॥

ब्राह्मे—ज्ञानतोऽज्ञानतो वाऽपि कामतोऽकामतोऽपि वा ।
गङ्गायां तु मृतो मर्त्यः स्वर्गं मोक्षं च विन्दति ॥
भविष्ये—प्राणेषूत्सृज्यमानेषु गङ्गां यः संस्मरेन्नरः ।
स्पृशेद्वा पापशीलोऽपि स याति परमां गतिम् ॥
ब्रह्मवैवर्ते—
ब्रह्मविष्णुशिवदेवरूपिणी सर्वयज्ञफलदा शिवप्रदा ।
सर्वदानजपयज्ञभोगदा गङ्गया न हि समं जगत्त्रये ॥
तथा—मनुष्यदेहं संश्रित्य यदि गङ्गा न संश्रिता ।
गर्भवासादिशमनं न तेषां जायते क्वचित् ॥
मात्स्ये—योजनानां सहस्रेषु यो गङ्गां संस्मरेन्नरः ।
अतिदुष्कृतकर्माऽसौ लभते परमां गतिम् ॥
कीर्तनान्मुच्यते पापाद्दृष्ट्वा भद्राणि पश्यति ।
अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ॥
काशीखण्डे—
पितॄनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम् ।
गुडसर्पिस्तिलैः सार्धं गङ्गाम्भसि विनिक्षिपेत् ॥
तृप्ता भवन्ति पितरस्तस्य वर्षशतं हरे ।
यच्छन्ति विविधान्कामान्परितुष्टाः पितामहाः ॥
तत्रैव सप्तविंशोऽध्यायः । गङ्गास्नानप्रतिनिधिभूतं गङ्गासहस्रनाम-स्तोत्रं चैकोनविंशेऽध्याये ज्ञेयं विस्तरभयात्तु न लिख्यते ।
तथा तत्रैव—
श्रुताऽभिलषिता स्पृष्टा दृष्टा पीताऽवगाहिता ।
पुंसां वंशद्वयं गङ्गा तारयेन्नात्र संशयः ॥
कौर्मे—योजनानां सहस्रेषु गङ्गां यः स्मरते नरः ।
अपि दुष्कृतकर्माऽसौ लभते परमां गतिम् ॥
कीर्तनान्मुच्यते पापाद्दृष्ट्वा भद्राणि पश्यति ।
तथोपस्पृश्य राजेन्द्र स्वर्गलोके महीयते ॥
वायवीये श्राद्धं प्रकृत्य—
भागीरथ्यां प्रयागे च दत्तमक्षयमुच्यते ।
कौर्मे—यावदस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य तु ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

तीर्थानां परमं तीर्थं नदीनां परमा नदी ॥
मोक्षदा सर्वभूतानां महापातकिनामपि ।
सर्वेषामेव भूतानां पापोपहतचेतसाम् ॥
गतिमन्वेषमाणानां नास्ति गङ्गासमा गतिः ।
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ॥
महेश्वरात्परिभ्रष्टा सर्वपापहरा शुभा ।
कृते युगे तु तीर्थानां पुष्करं परमं मतम् ॥
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते ।
गङ्गामेव निषेवेत प्रयागे तु विशेषतः ॥
नान्यत्कलियुगोद्भूतं मलं हन्तुं सुदुष्करम् ।
अकामो वा सकामो वा गङ्गायां यो विपद्यते ॥
स मृतो जायते स्वर्गे नरकं न च पश्यति ।

इति कौर्मे चतुस्त्रिंशोऽध्यायः ।

भारते—

उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसंमतः ।
चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥

तथा—भूस्थैः खस्थैर्दिविस्थैश्च भूतैरुच्चावचैरपि ।
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ॥

तथा—अन्धाञ्जडान्द्रव्यहीनांश्च गङ्गा
यशस्विनी विश्वरूपा सदैव ॥
देवैः सेन्द्रैर्मुनिभिर्मानुषैश्च
निषेविताऽभिमतं संप्रयच्छेत् ॥

जडान्धप्रभृतयः कर्मान्तरानधिकारिणोऽपि गङ्गासेवयाऽभिमतफलभागिनो भवन्तीत्यर्थः ।

तथा—मेरोः समुद्रस्य च सर्वरत्नैः
संख्योपलानामुदकस्य चापि ।
शक्या वक्तुं नेह गङ्गाजलानां
गुणाः स्थानं परिमाणं तथैव ।

तथा—ऋग्वेदमूर्तिर्गङ्गा स्याद्यमुना च यजुर्भुवा ।
नर्मदा साममूर्तिस्तु स्यादथर्वा सरस्वती ॥
गङ्गा सर्वसरिद्योनिः समुद्रस्यापि पूरणी ।
गङ्गाया न लभेत्साम्यं काचिदत्र सरिद्वरा ॥

नरसिंहपुराणे गङ्गायमुनागोदावरीतुङ्गभद्राकावेरीत्येता महानद्यः पापहरा इति पुण्यनदीगणनायां गङ्गैव प्रथमं गणिता । ब्रह्मपुराणे—
योजनानां सहस्रेषु तिष्ठन्तोऽपि महीपते ।
गङ्गा गङ्गेति जल्पन्ति ते वै पुण्यगतिं गताः ॥
अन्यतीर्थेषु गङ्गायाः स्मरणं कार्यते नृभिः ।
तस्माद्गङ्गासमं तीर्थं न हि ब्रह्माण्डगोलके ॥ इत्यादि ।

स्कान्दे रेवाखण्डे—
गङ्गा किं वर्ण्यते देवी हरेण शिरसा धृता ।
गौरी चार्धशरीरस्था हरस्य परमेशितुः ॥

वाराहे—
गङ्गाम्भःकणदिग्धस्य वायोः संस्पर्शनादपि ।
पापशीला अपि नराः शुभां गतिमवाप्नुयुः ॥
लैङ्गे—वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम् ।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥

ब्रह्माण्डपुराणे—
गण्डूषमात्रपानेन सकृद्गङ्गाम्भसो नरः ।
कामधेनुस्तनोद्भूतान्भुङ्क्ते दिव्यरसान्दिवि ॥
ब्राह्मे—समातृपितृदाराणां कुले कोटिमनन्तकाम् ।
गङ्गाभक्तिस्तारयते संसारार्णवतो ध्रुवम् ॥
स्कान्दे—त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्मदं दशभिर्मासैर्गाङ्गं वर्षेण जीर्यति ॥

भाविष्ये—
कदा द्रक्ष्यामि तां गङ्गां कदा स्नानं लभेमहि ।
इति पुंसाऽभिलषिता कुलानां तारयेच्छतम् ।
तथा—अन्यस्थानकृतं पापं गङ्गातीरे विनश्यति ॥
गङ्गातीरकृतं पापं गङ्गास्नानेन शुध्यति ।

षण्मासं स्नाति गङ्गायां नैरन्तर्येण यो नरः॥
समस्तपापनिर्मुक्तः समस्तकुलसंयुतः।
समस्तभोगसंयुक्तो विष्णुलोके महीयते॥

ब्रह्माण्डे—संक्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः।
गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं व्रजेत्॥

तथा—वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी।
गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा॥

शङ्खः—ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदसौ जाह्नवी मर्त्यलोकम्॥
पापान्यस्यां हरति हि तिथौ सा दशेत्याहुरार्याः
पुण्यं दद्यादपि दशगुणं वाजिमेधायुतस्य॥

तथा—अरुणोदयवेलायां शुक्ला माघस्य सप्तमी।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा।

इयं च रथसप्तमी।

यमः—वैशाखशुक्लपक्षे तु तृतीयायां विशेषतः।
गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः॥

इयमक्षय्यतृतीया। एवमन्यान्यपि कालविशेषात्फलविशेषबोधकानि वचनानि ज्ञेयानि विस्तरभयान्न लिख्यन्ते।

मात्स्ये—सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा।
गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे॥
तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः।

एवं गङ्गासागरान्तानि बहून्युभयतीरतीर्थानि नानापुराणेभ्योऽवगन्तव्यानि।

तथा—गङ्गायां तु नरः स्नात्वा यो नित्यं लिङ्गमर्चयेत्।
एकेन जन्मना मोक्षं परमाप्नोति स ध्रुवम्।

तथा—शिवस्य विष्णोः सूर्यस्य दुर्गाया ब्रह्मणस्तथा॥
गङ्गातीरे प्रतिष्ठां तु यः करोति नरोत्तमः।

तथैवाऽऽयतनान्येषां कारयत्यपि शक्तितः ॥
अन्यतीर्थेषु करणात्कोटिकोटिगुणं भवेत् ।
गङ्गातीरे समुद्भूतमृदा लिङ्गानि शक्तितः ॥
सलक्षणानि कृत्वा तु प्रतिष्ठाप्य दिने दिने ।
मन्त्रैश्च पत्रपुष्पाद्यैः पूजयित्वा स्वशक्तितः ।
गङ्गायां निक्षिपेन्नित्यं तस्य पुण्यं ततोऽधिकम् ॥

भविष्ये—

सर्वानन्दप्रदायिन्यां गङ्गायां यो नरोत्तमः ।
अष्टाक्षरं जपेद्भक्त्या मुक्तिस्तस्य करे स्थिता ॥
नमो नारायणायेति प्रणवाद्योऽष्टवर्णकः ।

तथा—पूजितायां च गङ्गायां पूजिताः सर्वदेवताः ।
तस्मात्सर्वप्रयत्नेन पूजयेदमरापगाम् ॥

ब्राह्मे—वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा ।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ।

तथा—सर्वदानानि नियमा यमाश्चैव तपांसि च ।
यज्ञो दानं तथा जप्यं श्राद्धं चेश्वरपूजनम् ॥
गङ्गायां च कृतं सर्वं कोटिकोटिगुणं भवेत् ।

एवमेव तत्तत्कालविशेषात्तत्तद्देयद्रव्यविशेषाच्च फलविशेषो भविष्यपुराणादवगन्तव्यो विस्तरापत्तेस्तु न लिख्यते । तथा गङ्गाव्रतान्यपि तत एवावगन्तव्यानि । दशहराविधिश्च काशीप्रकरणे वक्ष्यते । एवं जलसेवनभक्तितोयपानदर्शनस्मरणकीर्तनस्पर्शनाभिलापस्नानकालविशेषस्नानदेशविशेषस्नानावगाहनसंध्यातर्पणशिवाद्यर्चनजपपूजादानश्राद्धान्तर्जलमरणास्थिप्रक्षेपादिफलबोधकवचनानि सर्वपुराणेषु ज्ञेयानि । इति त्रिस्थलीसेतौ गङ्गामहिमा ।

अथ प्रसङ्गाद्यमुनामहिमा—तत्र पाद्मे यमुनोत्पत्तिः—सूर्यपत्नी संज्ञा नाम पुत्रार्थं बहुकालमतप्यत् । सा प्रसन्नाद्ब्रह्मणः पुत्रं वव्रे । तां ब्रह्मोवाच—

साक्षाद्दण्डधरो धर्मः सूर्यात्त्वयि भविष्यति ।
परित्रास्यति यो धर्ममधर्मं निहनिष्यति ॥

ततः सा सूर्याद्गर्भं लब्ध्वा तपस्तेपे । ततः कदाचिदस्ताचले सूर्येण

करैः स्पृष्टा सा गर्भमसृजत। स गर्भः सूर्यकरस्पृष्टत्वाच्छ्यामीभूय द्विधाऽपतत्। तत्र कठिनो भागो यमो द्रवरूपा यमुनेति। ततो ब्रह्मा यमं लोकपालं चकार। यमुनाऽपि विष्णुना पावनत्वं नीता सा चास्ताचलादवतीर्य सप्त द्वीपानि सप्त सागरान्भित्त्वा जम्बूद्वीपं प्राप्य पुनः सप्त द्वीपानि भित्त्वोदयाचलं गत्वा सूर्येण सहास्ताचलमेतीत्येवं घटीयन्त्रवन्निरन्तरं भ्रमतीति।

तथा—कालिन्द्यामन्यतीर्थेभ्यः फलं स्नातुः शताधिकम्।
गण्डूषमात्राम्बुपानान्नरो भवति सोमपः॥
यत्किंचिद्दीयते यस्यां वसिष्ठ स्वल्पमप्युत।
सुमेरुसदृशं भूत्वा तद्दातुरुपतिष्ठति॥
दूरस्थेनापि यमुना ध्याता हन्ति मनःकृतम्॥
वाचिकं कीर्तिता हन्ति स्नाता कायकृतं ह्यघम्।

तथा—जप्त्वाऽस्यामेव गायत्रीमासहस्रमथो द्विजः॥
ब्रह्महत्याविमुक्तः स्यादश्वमेधफलं लभेत्।
सायं प्रातर्द्विजः संध्यामुपास्ते सकृदेव यः॥
कालिन्द्यां न स दोषेण संध्यालोपस्य लुप्यते।
तर्पयित्वा नरो देवान्मनुष्यांश्च पितॄनपि॥
श्रद्धया यमुनावार्भिः पुनात्येव कुलत्रयम्।
जुहोति यस्तिलान्साज्यान्सावित्र्या शतसंख्यया॥
तेनेष्टं क्रतुभिर्मुख्यैः सहस्रशतदक्षिणैः।
यः स्नात्वा यमुनावार्भिः केशवं शिवमेव वा॥
रविं वा पूजयेद्भक्त्या न स शोच्यो भवेन्मृतः।
एकमप्युपवासं यः करोति यमुनान्तिके॥
नित्योपवासी स भवत्यभक्ष्यभक्षादपि शुध्यति।
यक्ष्यत्यस्यां तु पशुना सोमेनाप्यधिकारवान्॥
यः प्राप्स्यति फलं सोऽत्र राजसूयाश्वमेधयोः।
यद्यत्कृतं च कालिन्द्यां शुभं वा यदि वाऽशुभम्॥
तत्तदेवायुतगुणं भूत्वा तस्योपतिष्ठति।
स्नानादि कर्म कालिन्द्यां येन केनापि यत्कृतम्॥
यथावदयथावद्वा तत्साधुफलभाग्भवेत्।
संक्रान्तौ रविवारे च सप्तम्यां वैधृतौ तथा।

व्यतीपाते च हस्तर्क्षे ह्यपि पौष्णे पुनर्वसौ ॥
एकादश्यां चतुर्दश्यामष्टम्यां च दिनक्षये ।
पूर्णिमायां च पूर्वोक्तं फलं शतगुणं भवेत् ॥
तदेव स्याल्लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
द्वादश्यामर्चयेद्विष्णुमेकादश्यामुपोषितः ॥
कालिन्द्यां तस्य सुलभं तद्विष्णोः परमं पदम् ।
यदस्या दक्षिणे कूले फलमुक्तं तवाधुना ॥
तदेव तूत्तरे कूले फलं शतगुणाधिकम् ।

एवं तत्तत्तीर्थमथुरादिसंबन्धात्फलाधिक्यं पाद्मादेवावगन्तव्यम्।

तथा—यामुनेनोदरस्थेन पयःपङ्केन रेणुना ।
म्रियते यो नरः पुत्र स नरो न भवेत्पुनः ॥ इत्यादि ।

ध्यानं तु—

शंभोरम्भोमयी मूर्तिः खट्वाङ्गास्थिकपालिनी ।
महामणिफणाकोपभैरवी प्रेतसंस्थिता ॥
अविमुक्तश्मशानेत्थं हैमवत्यां श्रिता दिशम् ।
निजाश्रितचतुर्वर्गसिद्धिसाधनतत्परा ॥
जगत्पापविनाशाय पयोरूपा महानदी । इति ।

एतन्नामानि च—

त्रयीमयी नदी सौरी ब्रह्मविद्या सुधावहा ।
नारायणीश्वरी ब्राह्मी धर्ममूर्तिः कृपावती ॥
पावनी पुण्यतोयाढ्या सप्तसागरवेगगा ।
तापनी यमुना यामी स्वर्गसोपानपद्धतिः ॥
कालिन्दी कालसलिला सर्वतीर्थमयी नदी ।
नीलोत्पलदलश्यामा महापातकभेषजम् ॥
कुमारी विष्णुदयिता अवारितगतिः सरित् ।
एतैर्नामपदैर्यस्तु यमुनां कीर्तयेन्नरः ॥
दूरस्थोऽपि स पापेभ्यो महद्भ्योऽपि प्रमुच्यते ।

कलिन्दाख्यपर्वतसंबन्धात्कालिन्दीयमित्यपि कथा ततो ज्ञेया । यमुनासागरान्तानि यमुनोभयतीरतीर्थान्यपि तत एव ज्ञेयानि । प्रयागे गङ्गायमुनयोः संगमस्ततः परस्परसंविद्धा शतयोजनपर्यन्तं सहैव गम-

नम् । तावच्च गङ्गेत्येव नाम गङ्गोद्भेदाख्ये तीर्थे च तयोः पृथग्भाव इत्यादि च । यमुनास्नाने च विशेषः—

स्नानं करिष्यन्नभ्येत्य प्रणम्य यमुनां बुधः ।
प्रार्थयीत शुचिः शान्तो मन्त्रेणानेन तद्गतः ॥
आदित्यदुहितर्देवि यमज्येष्ठे यशस्विनि ।
त्रैलोक्यवन्दिते पुण्ये पापं मे यमुने हर ॥
इत्युक्त्वा च निमज्ज्याऽऽदावुन्मज्ज्याऽऽचम्य भक्तितः ।
तर्पयेत यमं वार्भिर्नाभिमात्रे जले स्थितः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
देवतर्पणवद्दद्याच्चतुर्दश जलाञ्जलीन् ।

वृद्धमनुः—

एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्कुर्याज्जलाञ्जलीन् ।

स्कान्दे परोऽपि विशेषः—

दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः ।
देवतीर्थेन दद्यात्तिलैः प्रेताधिपो यतः ॥
यज्ञोपवीतिना कार्यं प्राचीनावीतिनाऽथ वा ।
देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता ॥

एतस्य फलमाह यमुना यमं प्रति पाद्मे—

एवमस्तु मदम्भोभिः स्नात्वा त्वामादरान्नरः ।
दशभिश्च चतुर्भिश्च तर्पयिष्यति नामभिः ॥
तेन हिंसापरोऽपि त्वमिष्टकल्पो भविष्यसि ।
निरातङ्का भविष्यन्ति भवतो येऽपि पापिनः । इति ॥

एवं महिमानमुक्त्वा—

एष तूद्देशतः प्रोक्तो मयाऽस्या गुणसंग्रहः ।
स्वरूपविस्तरं वक्तुं न शक्तः कोऽपि तत्त्वतः ॥

कार्तिके शुक्लपक्षे तु द्वितीयायां विशेषतः ।
माहात्म्यं यमुनायास्तु यः शृणोति हरेस्तनुः ॥

इत्युक्तम् । इति यमुनामहिमा ।

इति श्रीभट्टरामेश्वरसूनुभट्टनारायणविरचिते त्रिस्थलीसेतौ प्रयागप्रकरणं समाप्तम् ।

---

भवानीशंकरं नत्वा भट्टरामेश्वरात्मजः ।
भट्टनारायणः काशीं विविनक्ति सदुक्तिभिः ॥

## अथ काशीप्रकरणम् ।

---

तत्र माहात्म्यज्ञानस्य प्रवृत्त्यौपयिकत्वेन तस्यावश्यं वक्तव्यत्वात्तदेव प्रथमं निरूप्यते । अत एव पद्मपुराणे पातालखण्डे भृगुं प्रति ऋषिकृतेषु पञ्चप्रश्नेषु प्रथमं माहात्म्यप्रश्न एव कृतः—

किं माहात्म्यं कथं वेद्यं सेव्या कैश्च द्विजोत्तम ।
परिमाणं च तस्याः किं केनोपायेन लभ्यते । इति ॥

तत्र स्कान्दे—

वाराणसी महापुण्या त्रिषु लोकेषु विश्रुता ।
अन्तरिक्षे पुरी सा तु मर्त्यलोकस्य बाह्यतः ॥
पञ्चक्रोशान्तरे राजन्ब्रह्महत्या न सर्पति ।
अष्टाविंशतिकोट्यस्तु लिङ्गानां तत्र भारत ॥

मात्स्ये—वाराणसीति भुवनत्रयसारभूता
धन्या सदा मम पुरी गिरिराजपुत्रि ।
अत्राऽऽगता विविधदुष्कृतकारिणोऽपि
पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ॥
एवं स्मृतं प्रियतमं मम देवि नित्यं
क्षेत्रं विचित्रतरुगुल्मलतासुपुष्पम् ।
अस्मिन्मृतास्तनुभृतः पदमाप्नुवन्ति
मूर्खागमेन रहितास्तु न संशयोऽत्र ॥

लैङ्गे—भूर्लोके चान्तरिक्षे च दिवि तीर्थानि यानि च ।
अतीत्य वर्तते सर्वाण्यविमुक्तं स्वमायतः ॥

क्षेत्रं तीर्थोपनिषदमविमुक्तं न संशयः ।

तीर्थरहस्यमित्यर्थः ।

माघे सर्वाणि तीर्थानि प्रयागमभियान्ति हि ।
काशीस्थितानि तीर्थानि मुने यान्ति न कुत्रचित् ॥

तथा—इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम ।
सर्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्वदा ॥

पाद्मे भटान्प्रति यमः—

प्राणप्रयाणावसरे ये काश्यां संगता जनाः ।
ये वा काशीति भाषन्ते ये वा विष्णुपरायणाः ॥
ये वा महादेवरता ये वा सत्तीर्थमृत्यवः ।
तेषां नाहं प्रभुः क्वापि त्याज्या युष्माभिरेव ते ॥

ब्रह्मवैवर्ते—

कालाद्भयं नास्ति यत्र यत्र पापभयं न हि ।
जन्मान्तरसहस्रेषु कृतं नश्यति दर्शनात् ॥
तत्क्षेत्रमहिमानं कः सम्यग्वर्णयितुं क्षमः ।
अन्यत्रैव मृतानां तु जीवानां कीकसं यदि ॥
वाराणस्यां प्रपतति नरके न पतन्ति ते ।
स्वर्गं दुष्कृतिनः पापा अपि गच्छन्ति नान्यथा ॥

कीकसमस्थि ।

अस्थि केशा नखा मांसं येषां काश्यां पतेदिह ।
महापापास्तदा स्वर्गं यान्ति साहस्रवत्सरान् ।
पुनः काशीं समासाद्य मुक्ताः स्युः सर्वजन्तवः ॥

पाद्मे—मारुतेरितकाशीस्थरेणुयोगेन किल्बिषम् ।
दूरी भवति ब्रह्मर्षे नात्र कार्या विचारणा ॥

तथा—काशीवासी क्षुत्कृशः पुल्कसोऽपि
श्रेष्ठो राजन्मुक्तिकन्यावृतो यत् ॥
अन्यत्रस्थः सार्वभौमः स्वधर्मी
न स्याच्छ्रेष्ठो गर्भमावेकयोग्यः ॥

तथा—अन्यत्रापि प्रमीतानां श्राद्धं श्रद्धासमेधितम् ।
अत्र दीयेत तेन स्यात्तेषां कैलाससंगमः ॥

अत्र सङ्ग्राममध्ये ये प्राणांस्त्यक्ष्यन्ति शस्त्रिणः ।
एतासां ते विषयगा न भविष्यन्ति वासव ॥

एतासामप्सरसाम् ॥

तथा—जन्मान्तरसहस्रेषु विहितैर्धर्मकर्मभिः ।
महादेवार्पितैः सा हि प्राप्या वैश्वेश्वरी पुरी ॥
शंभोरनुग्रहादेव शंकराराधनोत्थितात् ।
तत्क्षेत्रं प्राप्यते विप्रा नान्यैः साधनकोटिभिः ॥
नैतत्क्षेत्रसमं किंचित्त्रिषु लोकेषु विद्यते ।
अधिकं वा मुनिश्रेष्ठाः सत्यमेतद्ब्रवीमि वः ॥

ब्रह्मवैवर्ते—

वाराणस्यां स्वल्पमपि प्रायश्चित्तं महाघहृत् ।

तथा—न काशिकायां पतितोऽपि धर्मकृ-
द्दुःखं समाप्नोति मम प्रसादात् ।
इति प्रतिज्ञा जगदीश्वरस्य
महानुभावस्य शिवस्य नित्या ॥
काश्यां प्रदीपः प्रभया प्रकाशितः
पापान्धकारः खलु नाशमेति ।
विश्वेशदेहोद्भवया सुविद्यया
महात्मनां पुण्यकृतां कृतात्मनाम् ॥

तथा—अन्यत्र यः कृतो धर्मः साङ्गः श्रद्धादयायुतः ।
अनेककालसंपाद्यः स सिद्धोऽत्र क्षणाद्भवेत् ॥

तथा—अस्मिन्कलियुगे घोरे लोकाः पापानुवर्तिनः ।
भविष्यन्ति महाबुद्धे वर्णाश्रमविवर्जिताः ॥
नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् ।
सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ॥
कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी ।
कलौ भागीरथी गङ्गा दानं कलियुगे महत् ॥
अष्टाङ्गादिभिरन्यैश्च तपोयज्ञादिभिः सदा ।
साधितैः पाक्षिकी सिद्धिरविमुक्ते निरर्गला ॥

तथा—मात्रा पित्रा वाऽपि देवैर्मुनीशैः
कर्तुं शक्यं काशिका यत्करोति ॥
नो शक्यं तन्मन्त्रतीर्थादिभिर्वा
ह्यन्यैर्भूपैः किं वराकैश्च लोकैः।

प्रवेशमात्रेण नरः कृतार्थः स्थित्वा पुनः पापरतो य [illegible]स्यात् [illegible]
तदा न तस्यास्ति शरीरमात्रे मृते विमुक्तिर्ननु यात[illegible]न्ते ॥

श्रुता स्मृता गदिता बन्धमोक्षं
करोति यत्काशिका काशरूपा ॥
न काशिकाशंकरचिन्तकानां
भवन्ति पापानि मुनीश्वराणाम् ॥

तथा—तीर्थार्थी न बहिर्गच्छेन्न देवार्थी कदाचन।
सर्वतीर्थानि देवाश्च वसन्त्यत्राविमुक्तके ॥

तथा यमः—
केचिन्नाम्ना केऽपि संदर्शनेन
केचिद्गत्वा स्नानमात्रेण केचित् ॥
केचिद्देवं दक्षिणीकृत्य केचित्
पूजां कृत्वा केऽपि मुक्ता बभूवुः ॥

ब्रह्मा—वदन्ति काशीं प्रणमन्ति काशीं
गच्छन्ति काशीं तव राजधानीम् ॥
पूजाजपस्नानपरिक्रमस्तुति-
क्रमैर्नरा यान्ति परं सदाशिवम् ॥

तथा—यथा लोहं स्पर्शमणौ पतितं कनकं भवेत्।
तथा काश्यां ब्रह्मरूपं प्राप्नुयाच्छिवरूपताम् ॥
तीर्थयात्रार्थिनो ये हि काश्यामागत्य धार्मिकाः।
अकृत्वा पापनिचयं पुनर्यान्ति बहिर्नराः ॥
ते पुनः काशिकां प्राप्य जितेन्द्रियमनोगुणाः।
भवन्ति शुद्धाः शुद्धात्मञ्शुद्धब्रह्मस्वरूपिणः ॥
स्मरणं कीर्तनं काश्या दर्शनं मोक्षबीजकृत्।

काश्यां मृतानां हि शिवं गतानां मुक्ता न वेति प्रविचारिणो ये।
ते गृध्रकाकाजगरा ह्युलूका महामलादाः प्रभवन्ति पापाः ॥

ब्रह्मात्मरूपा काशीयं दहेत्पापानि सर्वशः ।
दृष्टा स्पृष्टा स्मृता वाऽपि किं पुनर्धर्मवासिनाम् ॥

तथा—संसारदावदहने पतितानां स्वकर्मभिः ।
काश्येव शरणं नान्यन्मुक्तानामपि पार्वति ॥

तथा—चतुर्विधाश्च ये जीवा ये च देवादयः परे ।
ते सर्वे मुक्तिमायान्ति काश्यां स्थावरजङ्गमाः ॥

तथा—पूर्वजन्मकृतैः पापैर्महापातकसंयुतैः ।
मुच्यते काशीमरणाज्जनो बहिरुपार्जितैः ॥
बहिष्कृतानां पापानामिदमेव महत्तरम् ।
प्रायश्चित्तं काशिकायां मरणं वास एव वा ॥

तथा—काश्यां देवः शंकरः केशवश्च
काश्यां देवी ह्यन्नपूर्णा रमा च ॥
काश्यां ढुण्ढिर्विघ्नहर्ता गणेशः
काश्यां शास्ता कालराजो महेशः ॥
काश्यां गङ्गोदग्वहा विष्णुरूपा
काश्यां ब्रह्मा वेदघोषैरुपेतः ॥
काश्यां दुर्गा दुःखदारिद्र्यहन्त्री
काश्यां सूर्यो व्याधिबाधानिहन्ता ।

तथा—जीवतां यत्सुखं काश्यामविक्षिप्तेन्द्रियात्मनाम् ।
न तत्सत्येन कैलासे न वैकुण्ठे कथंचन ॥

तथा—या दृष्टा पापसंघौघान्स्मृता जन्मशतस्य च ।
स्पृष्टा शतसहस्रस्य नाशयत्येव काशिका ॥
मात्रा सह समानत्वं न काश्यर्हति कुत्रचित् ।
गर्भवासप्रदा माता काशी गर्भविनाशिनी ॥

तथा—यैर्दृष्टा यैः श्रुता काशी यैः स्मृता कीर्तिता तथा ।
त एव वन्द्याः पूज्याश्च कृतार्था मुक्तिभागिनः ॥

महाप्रलयेऽपि काशी न नश्यतीति सनत्कुमारसंहितायामुक्तं शिवेन भवानीं प्रति—

गते परार्धद्वितये विलीने जगत्यशेषे मयि देवि सर्वे ।
रक्षन्ति सम्यग्विविधायुधौघैर्वाराणसीं काशितसूक्ष्मसिद्धिम् ॥

सर्वे प्रक्रमादृगणाः।

ननु—

दैनंदिनेऽथ प्रलये त्रिशूल-
कोटौ समुत्क्षिप्य पुरीं हरः स्वाम् ॥
बिभर्ति संवर्तमहास्थिभूषण-
स्ततो हि काशी कलिकालवर्जिता ॥

इत्यादिवचनैः 'कामारिशूलाग्रधृता लयेऽपि' इत्यादिवचनैश्च दैनंदिनप्रलये शूलाग्रे स्थिता काशी न नश्यतु महाप्रलये तु सर्वस्य प्रकृतिकार्यस्य नाशात्कथं काशी तिष्ठतीति वक्तव्यम्। उच्यते। प्राकृतस्य कार्यस्य ब्रह्माण्डान्तर्गतस्य च सर्वस्य भवतु नाम लयः काश्यास्तु 'शुद्धसत्त्वात्मकं ज्ञात्वा स्तुतं स्तुतिशतैः पृथक्' इत्यादिब्रह्मवैवर्तादिवचनाच्छुद्धचैतन्यात्मिकायाः

अविमुक्तमिदं क्षेत्रमपि ब्रह्माण्डमध्यगम्।
ब्रह्माण्डमध्ये न भवेत्पञ्चक्रोशप्रमाणतः ॥

इत्यादिकाशीखण्डादिवचनाच्च ब्रह्माण्डबहिर्भूतायाः कथं लयः स्यात्। इदं च स्वरूपनिरूपणे स्फुटं भविष्यति। काशीखण्डे—

काशीस्थैः पतितैस्तुल्या न वयं स्वर्गिणः क्वचित्।
काश्यां पाताद्भयं नास्ति स्वर्गे पाताद्भयं महत् ॥
वरं काशीपुरीवासो मासोपवसनादिभिः।
विचित्रच्छत्रसंछायं राज्यं नान्यत्र नीरिपु ॥
शशकैर्मशकैः काश्यां यत्पदं हेलयाऽऽप्यते।
तत्पदं नाऽऽप्यतेऽन्यत्र योगयुक्त्याऽपि योगिभिः ॥
वरं वाराणसीरङ्को निःशङ्को यो यमादपि।
न वयं त्रिदशा येषां गिरितोऽपीदृशी दशा ॥

तथा—धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयम्।
अखण्डं हि यथा काश्यां न तथाऽन्यत्र कुत्रचित् ॥

तथा—प्रयागादपि तीर्थाग्र्यादविमुक्तं विशिष्यते।
यथाऽविमुक्ते निर्वाणं न तथा क्वाप्यसंशयम् ॥
अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि हि।
काशीं प्राप्य विमुच्येत नान्यथा तीर्थकोटिभिः ॥

तथा—पुरा यमस्तपस्तप्त्वा बहुकालं सुदुष्करम् ।
त्रैलोक्याधिकृतिं प्राप्तस्त्यक्त्वा वाराणसीं पुरीम् ॥

इत्यादि । काश्यां यात्रायां धर्मानुष्ठाने वा कालदोषो नास्तीत्युक्तं तत्रैव—

सदा कृतयुगं चास्तु सदाचास्तूत्तरायणम् ।
सदा महोदयश्चास्तु काश्यां निवसतां सताम् ॥

तथा—सदा कृतयुगं चात्र महापर्व सदाऽत्र वै ।
न ग्रहास्तोदयकृतो दोषो विश्वेश्वराश्रमे ॥
सदा सौम्यायनं तत्र सदा तत्र महोदयः ।
सदैव मङ्गलं तत्र यत्र विश्वेश्वरस्थितिः ॥
यथा भूमितले विप्र पुर्यः सन्ति सहस्रशः ।
तथा काशी न मन्तव्या काऽपि लोकोत्तरा त्वियम् ॥
मया सृष्टानि विप्रेन्द्र भुवनानि चतुर्दश ।
अस्याः पुर्या विनिर्माता स्वयं विश्वेश्वरः प्रभुः ॥

तथा—विना तपोजपाद्यैश्च विना योगेन सुव्रत ।
निःश्रेयो लभ्यते काश्यामिहैकेनैव जन्मना ॥

कौर्मे—उत्तमं सर्वतीर्थानां स्थानानामुत्तमं महत् ।
ज्ञानानामुत्तमं ज्ञानमविमुक्तं पुरं मम ॥

तथा—भूर्लोके नैव संलग्नमन्तरिक्षे ममाऽऽलयम् ।
अयुक्तास्तं न पश्यन्ति युक्ताः पश्यन्ति चेतसा ॥

तथा—नानावर्णा विवर्णाश्च चण्डालाद्या जुगुप्सिताः ।
किल्बिषैः पूर्णदेहा ये विशिष्टैः पातकैस्तथा ॥
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ।

तथा शतशस्तीर्थान्यनुक्रम्य—

सर्वेषामपि तीर्थानामेतेषां परमा पुरी ।
नाम्ना वाराणसी दिव्या कोटिकोट्ययुताधिका ॥

लैङ्गे—पिङ्गला नाम या नाडी आग्नेयी सा प्रकीर्तिता ।
शुष्का सरिच्च सा ज्ञेया लोलार्को यत्र तिष्ठति ॥
इडानाम्नी च या नाडी सा सौम्या संप्रकीर्तिता ।
वरणा नाम सा ज्ञेया केशवो यत्र संस्थितः ॥

आभ्यां मध्ये तु या नाडी सुषुम्ना च प्रकीर्तिता ।
मत्स्योदरी च सा ज्ञेया विषुवत्तत्प्रकीर्तिता ॥

काशीखण्डे—

दक्षिणोत्तरदिग्भागे कृत्वाऽसिं वरणां सुराः ।
क्षेत्रस्य मोक्षनिःक्षेपरक्षां निर्वृतिमाययुः ॥
क्षेत्रस्य पश्चाद्दिग्भागे तं देहलिविनायकम् ।
स्वयं व्यापारयामास रक्षार्थं शशिशेखरः ॥
अनुज्ञातप्रवेशानां विश्वेशेन कृपावता ।
ते प्रवेशं प्रयच्छन्ति नान्येषां हि कदाचन ॥

तीर्थान्तरसमताबुद्धिश्च काश्यां न कार्या तदुक्तं काशीखण्डे—

रागादिदोषपरिपू*रमनोह्वपीकाः
काशीपुरीमतुलदिव्यमहाप्रभावाम् ॥
ये कल्पयन्त्यपरतीर्थसमां समन्ता-
त्ते पापिनो न सह तैः परिभाषणीयम् ॥

काशीखण्डे—

गृह्णीयुः पापकर्माणि काशीमृतविनिन्दकाः ।
सुकृतानि स्तुतिकृतो मुच्यन्तेऽत्रेति जन्तवः ॥

तथा—बहुजन्मशताभ्यासाद्योगी मुच्येत वा न वा ।
मृतमात्रोऽपि मुच्येत काश्यामेकेन जन्मना ॥

तथा—

पुण्यवानितरो वाऽपि मम क्षेत्रस्य सेवया ।
मुक्तो भवति देवेशि नात्र कार्या विचारणा ॥

तथा—गङ्गा विश्वेश्वरः काशी जागर्ति त्रितयं यतः ।
तत्र नैःश्रेयसी लक्ष्मीर्लभ्यते चित्रमत्र किम् । इत्यादि ॥

तथा—विश्वेशसंशीलनमेव योगस्तपश्च विश्वेशपुरीनिवासः ।
व्रतानि दानं नियमा यमाश्च स्नानं द्युनद्यां यदुदग्वहायाम् ॥

तथा—चरणौ चरितुं वित्तस्तावेव कृतिनामिह ।
चरणौ विचरेतां यौ विश्वभर्तुः पुरीं भुवि ॥

---

* 'भूत' इति पाठान्तरम् ।

तावेव श्रवणौ श्रोतुं संविदाते बहुश्रुतौ ।
इह श्रुतिमतां पुंसां याभ्यां काशी श्रुता सकृत् ॥
तदेव मनुते सर्वं मनस्त्विह मनस्विनाम् ।
येनानुमन्यते चैषा काशी सर्वप्रमाणभूः ॥
तथा—मरणं मङ्गलं यत्र विभूतिर्यत्र भूषणम् ।
कौपीनं यत्र कौशेयं सा काशी क्वोपमीयते ॥
तथा—काशीरजोऽपि यन्मूर्ध्नि पतेदध्यनिलाहृतम् ।
चन्द्रशेखर तन्मूर्धा भवेच्चन्द्रकलाङ्कितः ॥
तथा—ब्रह्महत्यां नरः कृत्वा पश्चात्संयतमानसः ।
प्राणांस्त्यजति यः काश्यां स मुक्तो नात्र संशयः ॥
स्त्रियः पतिव्रता याश्च मम भक्तिसमाहिताः ।
अविमुक्ते मृता विप्रा यान्ति ताः परमां गतिम् ॥
विप्रा इति संबोधनम् । मात्स्ये—
मत्समः पुरुषो नास्ति योषिन्नास्ति च त्वत्समा ।
अविमुक्तसमं क्षेत्रं न भूतं न भविष्यति ॥
अविमुक्ते परो योगो ह्यविमुक्ते परा गतिः ।
अविमुक्ते परो मोक्षः क्षेत्रं नैवास्ति तादृशम् ॥
तथा—पृथिव्यामीदृशं क्षेत्रं न भूतं न भविष्यति ।
चतुर्मूर्तिः सदा धर्मस्तस्मिन्संनिहितः प्रिये ॥
चतुर्णामपि वर्णानां गतिस्तु परमा स्मृता ।
तथा—मद्भक्तास्तत्र तिष्ठन्ति विष्णुभक्तास्तथैव च ॥
ये भक्ता भास्करे देवे लोकनाथे दिवाकरे ।
तथा—ज्ञेये विहितनिष्ठानां परमानन्दमिच्छताम् ॥
या गतिर्विहिता सद्भिः साऽविमुक्ते मृतस्य तु ।
तथा—अविमुक्तगुणा वक्तुं देवदानवमानवैः ॥
न शक्यन्तेऽप्रमेयत्वात्स्वयं यत्र भवः स्थितः ।
तथा—कृत्वा पापसहस्राणि पश्चात्संतापमेत्य वै ॥
योऽविमुक्ते वियुज्येत स याति परमां गतिम् ।
उत्तरं दक्षिणं वाऽपि अयनं न विकल्पयेत् ॥
सर्वस्तस्य शुभः कालो ह्यविमुक्ते म्रियेत यः ।
न तत्र कालो मीमांस्यः शुभो वा यदि वाऽशुभः ॥
तथा—जपध्यानविहीनानां ज्ञानवर्जितचेतसाम् ।

तथा दुःखहतानां च गतिर्वाराणसी नृणाम् ॥

इत्यादि। अग्निपुराणे—

वाराणसीं परं तीर्थं गौर्यै प्राह महेश्वरः।
भुक्तिमुक्तिप्रदं पुण्यं वसतां भजतां हरिम् ॥
गौरिक्षेत्रं न वै मुक्तमविमुक्तं ततः स्मृतम्।
जप्तं दत्तं हुतं तप्तमविमुक्ते किलाक्षयम् ॥
अश्मना चरणौ हत्वा वसेत्काशीं न हि त्यजेत्।

तथा—वरणा च नदी चासी तयोर्मध्ये वाराणसी।
अत्र स्नानं जपो होमो मरणं देवपूजनम् ॥
श्राद्धं दानं निवासश्च यद्यः स्याद्भुक्तिमुक्तिदम्।

अत्र भुक्तिमुक्तिप्रदमित्युपक्रमोपसंहाराभ्यां ते निराकृता य आहुः काश्या मुक्तिक्षेत्रत्वात्काम्यकरणेऽत्रातिशयः कश्चिन्नास्तीति। पाद्मे सृष्टिखण्डे—

वरणा चाप्यसिश्चैव द्वे नद्यौ सुरनिर्मिते।
अन्तराले तयोः क्षेत्रं वध्या न विशते क्वचित् ॥

वध्या हत्या।

तत्तीर्थं सर्वतीर्थानामुत्तमं परिकीर्तितम्।
त्यजन्ति तत्र ये प्राणान्प्राणिनो नियतात्मनः ॥
रुद्रत्वं ते समासाद्य भवेन सह मोदते (?)।

स्कान्दे—ब्रह्मघ्नगोघ्नगुरुतल्पगभिन्नवृत्त-
न्यासापहारिकुहकादिनिषिद्धवृत्तिः ॥
संसारभूतदृढपाशविमुक्तदेहो
वाराणसीं मम पुरीं समुपैति लोकः ॥

नारदीये—तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम्।
वाराणसीति विख्यातं सर्वदेवनिषेवितम् ॥

अथैतेषां पुराणवाक्यानां मूलभूताः श्रुतयोऽप्युच्यन्ते। तत्र जाबालोपनिषदि—'अथैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽव्यक्तोऽनन्त आत्मा तं कथमहं विजानीयामिति स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नाश्यां च मध्ये प्रतिष्ठित इति का

वै वरणा का च नासीसि सर्वानिन्द्रियकृतान्दोषान्वारयति तेन वरणी सर्वानिन्द्रियकृतान्पापान्नाशयति तेन नासीति ' [ जाबालो० ख० १ ] तथा तत्रैव—' अविमुक्तं वै देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति तस्मादविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेदेवमेवैतद्याज्ञवल्क्यः ' [ जाबालो० ख० १ ] इति । रामतापनीयोपनिषद्यपि—' श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः ।

मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः ॥
ततः प्रसन्नो भगवाञ्छ्रीरामः प्राह शंकरम् ।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर ॥ इति ।

स होवाच—

मणिकर्ण्यां वा मत्क्षेत्रे गङ्गायां वा तटे पुनः ।
म्रियते देहि तज्जन्तोर्मुक्तिं नातो वरान्तरम् ॥ इति ।

अथ स होवाच श्रीरामः—

क्षेत्रेऽत्र तव देवेश यत्र कुत्रापि वा मृतः ।
कृमिकीटादयोऽप्यत्र मुक्ताः सन्तु च नान्यथा ॥
अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं संनिहितस्तत्र पाषाणप्रतिमादिषु ॥
क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ।
ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
त्वत्तो वा ब्रह्मणो वाऽपि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव ॥ इति ।

इत्थमनेकपुराणश्रुतिप्रथितपृथुमहिम्नो वाराणस्याः कियान्मादृशैर्महिमा लेखनीय इत्युपरम्यते ।

इति त्रिस्थलीसेतौ सामान्यतः काशीमहिमा संक्षेपेण ।

अथ काशीमाहात्म्यश्रवणादिमहिमा काशीखण्डे—

श्रुताश्च सर्वधर्मास्तैर्महापुण्यैकराशिभिः ।
श्रुतं यैः स्थिरचेतोभिः काशीमाहात्म्यमुत्तमम् ॥

कौर्मे—

यः पठेदविमुक्तस्य माहात्म्यं शृणुयादपि ।
श्रावयेद्वा द्विजाञ्शान्तान्सोऽपि याति परां गतिम् ॥
श्राद्धे वा देवकार्ये वा रात्रावहनि वा द्विजः ।
नदीनां चैव तीरेषु देवतायतनेषु च ।
जपेदीशं नमस्कृत्य स याति परमां गतिम् ॥

[illegible]—एतद्वः कथितं सर्वं कथासर्वस्वमादरात् ।
यः पठेच्छृणुयाद्वाऽपि क्षेत्रमाहात्म्यमुत्तमम् ॥
सर्वक्षेत्रेषु यत्पुण्यं तत्पुण्यं सकलं भवेत् ।
श्रावयेद्वा द्विजाञ्शान्तान्कृतशौचाञ्जितेन्द्रियान् ॥
स एवं सर्वयज्ञानां फलं प्राप्नोति मानवः ।

[illegible] भृगुः—
इत्थं तपोधनाः काश्या माहात्म्यं प्रोक्तवानहम् ।
यच्छ्रुत्वाऽपि विलीयन्ते पापानि सुमहान्त्यपि ॥

अथ काशीस्वरूपं पद्मपुराणे—
ब्रह्मैवैतन्निर्गुणं निर्विकारं
निरन्तरं क्षेत्ररूपेण नित्यम् ॥
तिष्ठत्येव त्र्यम्बकोऽप्यत्र नित्यं
तद्रूपत्वात्संनिहित एव चाऽऽस्ते ॥
विभूतिं स्वां दर्शयिष्यन्गिरीशः
क्षेत्राकारं प्राप तीर्थाकृतिं च ॥

सनत्कुमारसंहितायाम्—
यत्तच्छिवानन्दमनन्तमाद्यं
यदावयोर्नित्यमभिन्नरूपम् ॥
दृश्यं समस्तोपनिषत्सु भक्ते-
र्जानीहि तेजस्तददोऽविमुक्तम् ॥
ज्योतिर्लिङ्गं त्वमेवाऽऽर्ये लिङ्गी चाहं महेश्वरः ।
तदेतदविमुक्ताख्यं ज्योतिरालोक्यतां प्रिये ॥

काशीखण्डे—
परं ब्रह्म यदाम्नातं निष्प्रपञ्चं निरात्मकम् ।
निर्विकल्पं निराकारमव्यक्तं स्थूलसूक्ष्मवत् ॥

तदेतत्क्षेत्रमापूर्य स्थितं सर्वगमप्यहो ।
शंभोः शक्तिरियं काशी काचित्सर्वैकगोचरा ॥
शंभुरेव हि जानीयादेतस्याः परमं सुखम् ।

ब्रह्मवैवर्त ऋषय ऊचुः—

छत्राकारं तु किं ज्योतिर्जलादूर्ध्वं प्रकाशते ।
निमग्नायां धरण्यां तु न निमज्जति तत्कथम् ॥

विष्णुरुवाच—

छत्राकारं परं ज्योतिर्दृश्यते गगनेचरम् ।
तत्परं परमं ज्योतिः काशीति प्रथितं श्रुतौ ॥
रत्नं सुवर्णे खचितं यथा भवे-
त्तथा पृथिव्यां खचिता हि काशिका ॥
न काशिका भूमिमयी कदाचि-
त्ततो न मज्जेन्मम सत्कृतिर्यत् ।
जडेषु सर्वेष्वपि मज्जमाने-
ष्वियं चिदानन्दमयी न मज्जति ॥
स्वयं निमग्ना कथमुद्धरेत्परान्
लोके च वेदे च विचार्यमेतत् ।

ऋषय ऊचुः—

वासुदेव महादेव ब्रह्मरूप नमोऽस्तु ते ।
तत्स्वरूपा कथं काशी कथं वा खचिता त्वया ॥
भूमौ भुवननाथेश किमर्थं वा पृथक्कृता ।

विष्णुरुवाच—

सदाशिवो महादेवो लिङ्गरूपधरः प्रभुः ।
मया स्मृतो लोकमुक्त्यै प्रादेशपरिमाणतः ॥

मुमुक्षवो मोक्षसाधनानुष्ठानेऽपीन्द्रियवैषम्यान्मोक्षविघ्नैर्मोक्षाप्राप्तौ मां प्रार्थितवन्तस्ततो मया लोकानुकम्पया प्रादेशपरिमाणः सदाशिवः स्मृत इति प्रघट्टकार्थः ।

लिङ्गरूपधरः शंभुर्हृदयाद्बहिरागतः ।
वृद्धिमासाद्य महतीं पञ्चक्रोशात्मकोऽभवत् ॥
आ पातालादा वैकुण्ठं व्याप्य चोर्ध्वमवस्थितः ।
ममेष्टदेवो दयितः परमात्मा पिनाकधृक् ॥

कैलासादभ्यगाद्देव्या भवान्या सहितः प्रभुः ।
दृष्ट्वा लिङ्गं परानन्दं ज्योतीरूपं सनिर्मलम् ॥
दृष्ट्वा मामुक्तवान्रुद्रस्त्वया सम्यगिदं कृतम् ।
ज्योतिर्लिङ्गं प्रकटितं सर्वप्राणिविमुक्तिदम् ॥
रुद्रस्य वचनं श्रुत्वा मया तत्स्थाणुरूपधृक् ।
शुद्धसत्त्वात्मकं ज्ञात्वा स्तुतं स्तुतिशतैः पृथक् ॥
लिङ्गाकारं क्वचिद्भाति दण्डाकारं क्वचित्पुनः ।
छत्राकारं क्वचिद्भाति पिण्डाकारं त्रिकोणकम् ॥
दृश्यते मुनिसंघैस्तद्यथामति तथैव तत् ।
जडत्वात्पृथिवी मग्ना सप्राणिनगकानना ॥
अजडत्वादिदं लिङ्गं छत्राकारमवस्थितम् ।
चैतन्यजडयोरैक्यं कथमेकस्थयोरपि ॥
भवेदिति महाभागा जानन्ति कथयन्ति च ।
तस्मात्काशी ब्रह्मरूपाऽजडा पृथ्व्या न संगता ॥

अन्यच्च—

दृष्टं तत्काशिकारूपं निर्मितं न मया परम् ।
वदन्ति लोकाः सततं काशी केशवनिर्मिता ॥
निर्माणं तु जडस्यात्र क्रियते नो परात्मनः ।
उद्धरिष्यामि च महीं वाराहं रूपमास्थितः ॥
तदा पुनः पृथिव्यां हि काशी स्थास्यति मत्प्रिया ।

स्कान्दे—पञ्चक्रोश्या परिमिता तनुरेषा पुरी मम ।
अविच्छिन्नप्रमाणाधिर्भक्तनिर्वाणकारणम् ॥

ब्रह्मवैवर्ते—

शिवशक्त्यात्मकं लिङ्गं श्रुतिभिः परिपठ्यते ।
योनिः शक्तिः शिवो लिङ्गं प्रकृतेः पुरुषस्य च ॥
स्वरूपं प्रथितं वेदे पुराणादिषु पार्वति ।
सदाशिवस्य या काचिच्छक्तिश्चैतन्यरूपिणी ॥
सैव काशीति संप्रोक्ता लिङ्गरूपाऽनपायिनी ।
केचित्काशीं वदन्त्येतामविमुक्तं तथाऽपरे ॥
पञ्चक्रोशात्मकं लिङ्गं रुद्रावासमथापरे ।
ब्रह्मवासं विष्णुवासं वाराणसीमथापरे ॥

इत्यादिनामभिरुक्तमेकमेव सनातनम् ।
लिङ्गं सादाशिवं शुद्धं ब्रह्माख्यं पूर्णचिद्घनम् ॥

तथा—यल्लिङ्गं दृष्टवन्तौ तु नारायणपितामहौ ।
तदेव लोके वेदे च काशीति परिगीयते ॥

काशीखण्डे—

क्षेत्रमेतत्त्रिशूलाग्रे शूलिनस्तिष्ठति द्विज ।
अन्तरिक्षे न भूमिष्ठं नेक्षन्ते मूढबुद्धयः ॥

तथा—अविमुक्तं महाक्षेत्रं पञ्चक्रोशीपरीमितम् ।
ज्योतिर्लिङ्गं तदेकं हि ज्ञेयं विश्वेश्वराभिधम् ॥

ब्रह्मवैवर्ते—

कदाचिल्लिङ्गरूपेण शिवेन परमात्मना ।
शक्तिः पृथक्कृता शान्ता काशीति प्रथितिं गता ॥
अधिष्ठात्री देवता त्वमिति क्षेत्रस्वरूपिणी ।
भव त्वं सर्वभक्तानां महामोक्षप्रदायिनी ॥
आरभ्य तद्दिनं देवी गङ्गा केशवसंनिधौ ।
अविमुक्तेश्वरं ध्यायन्पश्चिमाभिमुखी स्थिता ॥
पूजिता सा प्रयत्नेन काशीवासफलप्रदा ।

तथा देव्युवाच—

मूर्तिमत्याः काशिकायाः कोऽधिकारो महेश्वर ।
क्षेत्रमूर्तिप्रभेदेन स्थितायाः किं प्रयोजनम् ॥

श्रीभगवानुवाच—

क्षेत्ररूपा तु या काशी मोचयेत्सर्वदेहिनः ।
आधारभूता जीवानामाद्या प्रकृतिरव्यया ॥
मूर्तिरूपा चित्स्वरूपाऽविमुक्तेश्वरसेवया ।
पूर्णरूपा स्वमाहात्म्यं स्वयमेव विचारयेत् ॥

लिङ्गपुराणे तु विश्वेश्वरात्पश्चिमभागेऽस्याः स्थलमुक्तम्—

तत्र वाराणसी देवी स्थिता विग्रहरूपिणी ।
मानवानां हितार्थाय स्थिता देवस्य पश्चिमे ॥
वाराणसीं च यो दृष्ट्वा भक्त्या चैव नमस्यति ।
तस्य तुष्टा च सा देवी वसतिं च प्रयच्छति ॥ इति ।

अथ ध्यानम्—

श्यामा षोडशवार्षिकी सुकरुणां मूर्तिं दधाना वरं
हस्ताभ्याममयं च विश्वजननी विद्येति या गीयते॥
याऽदृष्टा स्मरणं गताऽपि सततं या कीर्तिता संस्तुता
या दृष्टा नृभिरात्मतत्त्वममलं दद्याद्ध्रुवं काशिका॥

अथ प्रार्थना—

जय काशि महाविद्ये पतितानां च पावनि।
त्वामृते गतिरन्या न संसारे मज्जतामिह॥

अथ काशीकथामहिमा ब्रह्मवैवर्ते—

सहस्रकार्याणि विहाय काश्यां काशीगुणान्संशृणुयाद्यथावत्।
क्षेत्रस्वरूपं प्रतिबुध्यते यैः श्रद्धा रतिः पापनिवृत्तिरुद्भवेत्॥
काशीकथासंश्रवणेन सम्यगन्तःशुद्धिर्जायते वै नराणाम्।

तथा—काशीकथाश्रवणमङ्गलपूर्णमूर्ति-
र्मूर्तः स एव भगवाञ्शिवशान्तमूर्तिः॥

तथा—काश्यामागत्य सततं श्रोतव्या काशिसत्कथा।
न विना श्रवणं पुण्यं पापं वा वेत्ति कश्चन॥
विदित्वा यतते भूयो निस्ताराय पराय च।

तथा—स्वधर्मदानव्रतधर्मसाधनै-
रन्यैश्च योगादिभिराप्यते यत्।
पुण्यं दृढं तेन भवेन्मतिः सतां
काशीकथाश्रवणेन मानवानाम्॥
श्लोकार्धं श्लोकपादं वा नित्यं काशिकथामृतम्।
पिबन्ति ये महाभागास्तेषां प्रीतिर्न भैरवी॥
काशीकथाश्रवणतः काशीकीर्तनतः स्मृतेः।
यत्फलं जायते नृणां न तद्योगादिभिः क्वचित्॥

अथ काशीनाममहिमा नारदीये—

बहुनाऽत्र किमुक्तेन वाराणस्या गुणान्प्रति।
नामापि गृह्णतां काश्याश्चतुर्वर्गो न दूरतः॥

पाद्मे—काशीतिवर्णद्वितयं स्मरंस्त्यजति पुद्गलम्।
यत्र क्वापि भवेत्तस्य कैलासे वसतिः स्फुटा॥

पुद्गलं शरीरम् । स्कान्दे—

काशी काशीति काशीति रसना रससंयुता ।
यस्य कस्यापि भूयाच्चेत्स रसज्ञो न चेतरः ॥

तथा—तावद्गर्जन्ति पापानि ब्रह्महत्यादिकान्यलम् ।
यावन्नाम न गृह्णन्ति काश्याः पापाचलाशनेः ॥
ब्रह्महत्यादिपापानि यस्या नाम्नोऽपि कीर्तनात् ।
त्यजन्ति पापिनं काशी सा केनेहोपमीयते ॥

तथा—वाराणसीति काशीति महामन्त्रमिमं जपन् ।
यावज्जीवं त्रिसंध्यं तु जन्तुर्जातु न जायते ॥

तत्क्षेत्रनामस्मरणान्न स भूयोऽभिजायते । इति च ।
यस्तु काशीति काशीति द्विस्त्रिर्जपति पुण्यवान् ।
अपि सर्वपवित्रेभ्यः स पवित्रतरो महान् ॥

तथा—वाराणसीति काशीति रुद्रावास इति स्फुटम् ।
मुखाद्विनिर्गतं येषां तेषां न प्रभवेद्यमः ॥
येन बीजाक्षरयुतं काशीति हृदि धारितम् ।
अबीजानि भवन्त्येव कर्मबीजानि तस्य वै ॥
श्रुतं कर्णामृतं येन काशीत्यक्षरयुग्मकम् ।
न समाकर्णयत्येव स पुनर्गर्भजां कथाम् ॥

ब्रह्मवैवर्ते—

यथा विष्णोः शंकरस्यापि नाम्ना
लोकः शोकं नाश्य मोक्षं प्रयाति ।
वाराणस्या नाम गृह्णन्विशेषा-
त्तीर्त्वा मृत्युं मृत्युजेता स्वयं स्यात् ॥ इत्यादि ।

इति नाममहिमा । अथ काश्यादिशब्दनिर्वचनं काशीखण्डे—

काशतेऽत्र यतो ज्योतिस्तदनाख्येयमीश्वर ।
अतो नामापरं चास्तु काशीति प्रथितं विभो ॥

तथा—काशी ब्रह्मेति विख्यातं तद्ब्रह्म प्राप्यतेऽत्र हि ।

तथा—काशी ब्रह्मेति विख्यातं तद्विवर्तो जगद्भ्रमः ।
अविमुक्तं तदेवाऽऽहुः काशीति ब्रह्मवादिनः ॥

मात्स्य ईश्वरवाक्यम्—

विमुक्तं न मया यस्मान्मोक्ष्यते वा कदाचन ।
महत्क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥

काशीखण्डेऽगस्त्य उवाच—

अविमुक्तमिदं क्षेत्रं कदाऽऽरभ्य भुवस्तले ।
परां प्रथितिमापन्नं मोक्षदं चाभवत्कथम् ॥
वाराणसीति काशीति रुद्रावास इति प्रभो ।
महाश्मशानमिति च कथं ख्यातं शिखिध्वज ॥

स्कन्द उवाच—

मुने प्रलयकालेऽपि न तत्क्षेत्रं कदाचन ।
प्रविमुक्तं शिवाभ्यां यदविमुक्तं ततः स्मृतम् ॥

यद्यपि मन्दराचलगतेन सदाशिवेन चिरकालं क्षेत्रं त्यक्तमेव तथाऽपि लिङ्गरूपेण कदाऽपि न त्यक्तमित्याशयः । अत एव तत्रैवोक्तम्—

मन्दराद्रिगतेनापि क्षेत्रं नैतत्पिनाकिना ।
विमुक्तं लिङ्गरूपेण अविमुक्तं ततः स्मृतम् ॥ इति ।
यियासुना च देवेन मन्दरं चित्रकन्दरम् ।
निजमूर्तिमयं लिङ्गमविज्ञातं विधेरपि ॥
स्थापितं सर्वसिद्धीनां साधकेभ्यः समर्पकम् ।
विपन्नानां च जन्तूनां दातुं नैश्रेयसीं श्रियम् ॥
सर्वेषामिह संस्थानां क्षेत्रं चैवाभिरक्षितुम् । इति च ।
नामाविमुक्तमभवदुभयोः क्षेत्रलिङ्गयोः ॥ इति च ।

ततश्च 'आदिलिङ्गमिदं प्रोक्तं श्रीविश्वेश्वरपूजितम्' इत्युपक्रमाद-विमुक्तेश्वरलिङ्गरूपेण न विमुक्तमित्यभिसंधिः ।

लैङ्गे—अविशब्देन पापं तु कथ्यते वेदवादिभिः ।
तेन पापेन तत्क्षेत्रं वर्जितं वरवर्णिनि ॥ इत्यादि ।

पाद्मे—आनन्दकाननं तद्धि शंकरस्यापि वल्लभम् ।
न विमुञ्चति विश्वात्मा अविमुक्तं ततः स्मृतम् ॥ इति ।

तथा काशीखण्डे—

अस्याऽऽनन्दवनं नाम पुराऽकारि पिनाकिना ।
क्षेत्रस्याऽऽनन्दहेतुत्वादविमुक्तं निरन्तरम् ॥

तथा—ये तु वर्षेषवो देवा दिवि देवि प्रकीर्तिताः ।
वातेषवोऽन्तरिक्षे ये ये भुव्यन्नेषवः प्रिये ॥
रुद्रा दश दश प्राच्यवाचीप्रत्यगुदक्स्थिताः ।
ऊर्ध्वादिक्स्थाश्च ये रुद्राः पठ्यन्ते वेदवादिभिः ॥
असंख्याताः सहस्राणि ये रुद्रा अधिभूतले ।
ते सर्वेभ्योऽधिकाः काश्यां जन्तवो रुद्ररूपिणः ॥
रुद्रावासस्ततः प्रोक्तमविमुक्तं घटोद्भव ॥

तथा—श्मशब्देन शवः प्रोक्तः शानं शयनमुच्यते ।
निर्वचन्ति श्मशानार्थं मुने शब्दार्थकोविदाः ॥
महान्त्यपि च भूतानि प्रलये समुपस्थिते ।
शेरतेऽत्र शवा भूत्वा श्मशानं च ततो भवेत् ॥
असिश्च वरणा चैव क्षेत्ररक्षाकृते कृते ।
वाराणसीति विख्याता तदारभ्य महामुने ॥

पाद्मे—लिङ्गं लिङ्गशरीरस्य विश्लेषं गमयेत्परम् ।
तेन लिङ्गमिति ख्यातमपवर्गैकसाधनम् ॥

ब्रह्मवैवर्ते—महातत्त्वमये पात्रे ब्रह्म शुद्धं सनातनम् ।
मायाप्रवेशरहितमविमुक्तं तदुच्यते ॥

तथा—आनन्दकन्दबीजानामङ्कुराणि यतस्ततः ।
ज्ञेयानि सर्वलिङ्गानि तस्मिन्नानन्दकानने ॥
मम लिङ्गानि सर्वाणि ह्यङ्कुराणीव सर्वशः ।
आनन्दादुदितानीति ह्यानन्दवनमुच्यते ॥

लैङ्गे—अविमुक्तं परं क्षेत्रं शंकरस्य सदैव हि ।
तन्नाम्ना तत्प्रसिद्धं च त्रैलोक्ये शूलपाणिनः ॥
निम्नगाभ्यां पुरी सा च नाम्ना वाराणसी मुने ।

अथ काशीस्मरणमहिमा नारदीये—
योजनानां शतस्थोऽपि योऽविमुक्तं स्मरेद्धृदि ।
बहुपातकपूर्णोऽपि न स पापैः प्रबाध्यते ॥

ब्रह्मवैवर्ते—स्मरन्ति ये नराः काशीं यत्र कुत्रापि संस्थिताः ।
तेऽप्यघौघविनिर्मुक्ता भवन्ति ज्ञानभागिनः ॥

तथा—मनसा यैः काशिकायाः स्मृतमौदार्यमार्यकैः ।
तेषां मनो न स्मरति स्मरारिनगरीं विना ॥

नारदीये काशीखण्डे च—

मम प्रियस्य क्षेत्रस्य योऽविमुक्तस्य संस्मरेत् ।
प्राणप्रयाणसमये दूरगोऽप्यघवानपि ॥
स पापपूगमुत्सृज्य स्वर्गभोगान्समश्नुते ।
काशीस्मरणपुण्येन स्वर्गाद्भ्रष्टो हि जायते ॥
पृथिव्यामेकराड्भूत्वा भुक्त्वा भोगाननेकशः ।
प्राप्याविमुक्तं तत्पुण्यान्निर्वाणपदभाग्भवेत् ॥

कौर्मे—ये स्मरन्ति परं कालं विदन्ति च पुरीमिमाम् ।
तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥

ब्रह्मपुराणे—

संस्मरिष्यन्ति ये स्थानमविमुक्तं सदा नराः ।
निर्धूतसर्वपापास्ते भविष्यन्ति गणोपमाः ॥

ब्रह्मवैवर्ते—काशी काशीति काशीति बहुधा संस्मरन्द्विजः ।
न पश्यतीह नरकान्वर्तमानान्स्वयंकृतान् ॥

स्वकृतकर्मजानित्यर्थः ।

भवः—अद्याऽऽरभ्य महाभागा ये स्मरिष्यन्ति काशिकाम् ।
तेषां पापक्षयो भूयो मोक्षबीजं भवत्वनु ॥
अविमुक्तं महाक्षेत्रं स्मरन्प्राणांस्तु यस्त्यजेत् ।
दूरदेशान्तरस्थोऽपि सोऽपि जातु न जायते ॥
आनन्दकाननं यस्य चित्तं संस्मरते सदा ।
तत्क्षेत्रनामस्मरणान्न स भूयोऽभिजायते ॥

तथा—काशीस्मरणमात्रेण किं चित्रं यदघं व्रजेत् ।
गर्भवासोऽपि नश्येत विश्वेशानुग्रहात्परात् ॥

तथा—तिष्ठन्गच्छन्स्वपन्भुञ्जन्कर्म कुर्वन्हसन्नपि ।
योऽविमुक्तं स्मरेद्देवि तस्य जन्मभयं कुतः ॥

तथा—काश्यां येषां नाम गृह्णन्ति लोका
बीजं तेषां जायते मोक्षमार्गे ॥
काशीं ये वै संस्मरन्त्यन्यदेशे
तानप्यात्मा शंकरस्तारयेच्च ॥

अथ स्तुतिमहिमा काशीखण्डे—

यः काशीं स्तौति मेधावी यः काशीं हृदि धारयेत् ।
तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः ॥

तथा भवः—

मुने न मे प्रियस्तद्वद्दीक्षितो मम पूजकः ।
यादृक्प्रियतरः सत्यं काशीस्तवनलालसः ॥
तादृक्तुष्टिर्न मे दानैस्तादृक्तुष्टिर्न मे मखैः ।
न तुष्टिस्तपसा तादृग्यादृक्स्यात्काशिसंस्तवैः ॥
आनन्दकाननं येन स्तुतमेतत्सुचेतसा ।
तेनाहं संस्तुतः सम्यक्सर्वैः सूक्तैः श्रुतीरितैः ॥

तथा—वाराणस्याः स्तुतिमपि यो निशम्यानुमोदते ।
अपि ब्रह्माण्डमखिलं ध्रुवं तेनानुमोदितम् ॥

अथ काशीगमनमहिमा ब्रह्मवैवर्ते—

प्रसङ्गतो ये गमनं प्रकुर्युर्व्यापारतः प्रेषणेनापि केचित् ।
बद्ध्वाऽपि ये काशिकां संप्रणीतास्ते स्युः कृतार्थाः श्रुतिवाद एषः॥

गमने च विष्णुप्रार्थना तत्रैव—

जय केशव देवेश जय काशीप्रियाच्युत ।
काशीं प्रापय देवेश देहि वासं जनार्दन ॥

सनत्कुमारसंहितायाम्—

वाराणसीमेव यदा प्रवृत्तो गन्तुं नरस्तस्य समस्तपापम् ।
विनाश्य सार्धं गणकैर्गुणैः स्वैः प्रीतः सुहृत्तृप्यति धर्मराजः ॥

तथा—कृत्स्नस्य लोकस्य नृपस्य बन्धो-
र्मित्रस्य पित्रोर्महतो गुरोर्वा ।
याच्ञामथाऽऽज्ञामथ वोपदेशं
कुर्यान्न काश्यां गमनस्य विघ्नम् ॥

याच्ञादिरूपं विघ्नमिति योजना । काशीखण्डे—

ब्रह्महा योऽभिगच्छेद्वै दैवाद्वाराणसीं पुरीम् ।
तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्या निवर्तते ॥

कौर्मे—आगच्छतामिदं स्थानं सेवितुं मोक्षकाङ्क्षिणाम् ।
मृतानां च पुनर्जन्म न भूयो भवसागरे ॥

लैङ्गे—काशीं प्रकृत्य—

सत्यं सत्यं पुनः सत्यं त्रिसत्यं नान्यतः शुभे ।
शीघ्रं तत्रैव संयातु यदीच्छेन्मामकं पदम् ॥

तथा काशीखण्डे—

उड्डीय सर्वतो देशाद्यानं वाराणसीं प्रति ।
उड्डीयानो महाबन्ध एष मुक्त्यै प्रकल्पते ॥

योगे ह्युड्डीयानबन्धोऽस्तीह स्वयमेवेत्यर्थः । तथाऽनेकानि मरण-चिह्नान्युक्त्वा द्विचत्वारिंशेऽध्याय उक्तम्—

एतानि कालचिह्नानि सन्त्यन्यानि बहून्यपि ।
ज्ञात्वाऽभ्यस्येन्नरो योगमथ वा काशिकां श्रयेत् ॥

तथा—सर्वेषामिह पापानां प्रायश्चित्तचिकीर्षया ।
निःशङ्कैरेव वक्तव्यं प्रमाणज्ञैरिदं वचः ॥
पुरश्चरणकामश्चेद्भीतोऽसि यदि पापतः ।
मन्यसे यदि नः सत्यं वाक्यं शास्त्रप्रमाणतः ॥
ततः सर्वं परित्यज्य कृत्वा मनसि निश्चयम् ।
आनन्दकाननं याहि यत्र विश्वेश्वरः स्वयम् ॥

मात्स्ये—यदि पापो यदि शठो यदि वाऽधार्मिको नरः ।
मुच्येत सर्वपापेभ्यो ह्यविमुक्तं व्रजेद्यदि ॥

तथा—अविमुक्तं सदा देवि ये व्रजन्ति मुनिश्चिताः ।
ते तिष्ठन्तीह सुश्रोणि मद्भक्ताश्च त्रिविष्टपे ॥

तथा—दूरं मे मरणं युवाऽहमधुना धार्यं न चित्ते त्विति
श्रोतव्यो निभृतं कृतान्तमहिषग्रैवेयघण्टारवः ।
नैकट्यात्प्रकटोत्कटश्रुतिपुटीं संप्राप्य हित्वा ततो
जीर्णां पर्णकुटीं ततः पटुमतिर्गच्छेत्पुरीं धूर्जटेः ॥

ब्रह्मवैवर्ते—

शृण्वन्तु लोकाः परमार्तियुक्ता रहस्यमन्त्रं परमादरेण ।
कलौ विनष्टव्रतधैर्यवीर्या गच्छन्तु काशीं परमार्थराशिम् ॥

वाराणस्यां महातीर्थे नरः पापाद्विमुच्यते ।
सप्तजन्मकृतात्पापाद्गमनादेव मुच्यते ॥

पाद्मे—काशीं प्रति प्रस्थितानां जनानां पापकर्मणाम् ।
घूर्णन्ते सर्वपापानि सर्वधातुगतान्यपि ॥
काशीमुद्दिश्य यातानां सर्वः स्यात्समयः शुभः ।
मङ्गलं सकलं वस्तु न किंचिद्धि विचारयेत् ॥
काशीगमने मुहूर्तशकुनयोः प्रतीक्षा न कार्येत्यर्थः ।
देवाः सर्वे भवेयुर्हि प्रतिबन्धकराः परम् ॥
तानुपेक्ष्यैव गन्तव्या काशी मुक्तिप्रकाशिका ।

अथ काशीदर्शनमहिमा काशीखण्डे—
तुलापुरुषदानेन यत्पुण्यं सम्यगाप्यते ।
काशीदर्शनमात्रेण तत्पुण्यं श्रद्धयाऽस्तु वै ॥

तथा—प्रयागस्नानपुण्येन यत्फलं स्याच्छिवप्रदम् ।
काशी दर्शनेत्यादि पूर्ववत् ।

तथा—श्रेयसां भाजनं चैतन्नृजन्म न मुधा नयेत् ।
देवानामपि दुष्प्राप्यं काशीसंदर्शनादृते ॥
कः कलिः कोऽथवा कालः किं वा कर्माण्यनेकधा ।
परानन्दप्रदं क्षेत्रमविमुक्तं यदीक्षितम् ॥
प्रसङ्गतोऽपि यन्नेत्रपथमानन्दकाननम् ।
यातं तेऽत्र न जायन्ते नेक्षेरन्पितृकाननम् ॥

तथा—यैर्दृष्टा दूरतः काशी ते पुण्याः पापशत्रवः ।
स्पृष्टा यैस्तेऽपि च ततः श्रेष्ठा मोक्षैकभाजनम् ॥

ब्रह्मपुराणे—
आगमिष्यन्ति ये द्रष्टुं सज्जना योजनेन तु ।
ते ब्रह्महत्यामोक्षात्तु भविष्यन्ति ममानुगाः ॥

मात्स्ये—अज्ञानाज्ज्ञानतो वाऽपि वर्तमानमतीतकम् ।
सर्वं तस्य च तत्पापं क्षेत्रं दृष्ट्वा विनश्यति ॥

पाद्मे—अस्याः संदर्शनं व्यास सर्वपातकघातकम् ।
अस्यां निवासो निर्वाणं साधयत्यञ्जसा मुने ॥

ब्रह्मवैवर्ते—
पश्य तात परमार्चितां पुरीं
योगिभिः सुकृतिभिर्मुनीश्वरैः ।
यां निरीक्ष्य पुरुषः पुरा कृतैः
पातकैः शरमितैर्वियुज्यते ॥

पञ्चमहापातकैरित्यर्थः ।

जन्मान्तरसहस्रैस्तु यत्पुण्यं समुपार्जितम् ।
तेन पुण्यकदम्बेन दर्शनं याति काशिका ॥

तथा—बहिष्कृतानि पापानि पूर्वजन्मार्जितान्यपि ।
काशीदर्शनमात्रेण नाशमेष्यन्ति नान्यथा ॥

अत्र बहिष्कृतानीतिनिर्देशात्पूर्ववचनान्यप्येतद्विषयाण्युपसंह्रियन्ते चतुर्धाकरणवाक्यानीवाऽऽग्नेयविषयत्वेन । अन्यथा काश्यन्तःकृतपातकपरिहारार्थं पञ्चक्रोशयात्रादिविधानवैयर्थ्यं स्यात् ।

तथा—पूर्वजन्मशतकोटिसंचितं पापराशिमतुलं विनाशयेत् ।
काशिका परपदप्रकाशिका दर्शनश्रवणकीर्तनादिभिः ॥

तत्रैव मनुः—

ब्रह्मन्काशीं काशिताशेषतत्त्वां
ये ये लोकाः संस्मरन्त्यत्र कुत्र ।
ते ते मुक्ताः किं पुनर्दर्शनात्सा
दृष्ट्वा ये वै काशिकां संगताश्च ॥

अथ काशीप्रवेशमहिमा ब्रह्मवैवर्ते—

महापातकयुक्तोऽपि श्रद्धया रहितोऽपि वा ।
काशीप्रवेशादनघः सम्यक्स्थित्वा सुखी भवेत् ॥

अत्र कश्चित्काशीप्रवेशे पापं न नश्यति किंतु बहिरेव तिष्ठति । एतदेवानघत्वम् । अत एव लिङ्गपुराणे—

वाराणस्यां तु यः कश्चित्प्रविष्टो ब्रह्मघातकः ।
तिष्ठते बाह्यतः पापं निर्गते गृह्यते पुनः ॥ इति ।

स्कान्देऽपि—पञ्चक्रोशान्तरे राजन्ब्रह्महत्या न सर्पति ।

तथा पिशाचमोचनाख्याने—

प्रवेशो नास्ति चास्माकं प्रेतानां तपसां निधे ।
महतां पातकानां च वाराणस्यां शिवाज्ञया ॥ इति ।

एवमन्यान्यपि पुराणवचनानि ज्ञेयानि । इदं तु विचारासहम्—पापस्याऽऽत्मगुणस्यामूर्तस्य च बहिरवस्थानासंभवात् । अथ पूर्वं शरीरावच्छिन्ने स्थितमिदानीं तु व्यापकत्वादात्मनो बहिरवच्छिन्ने तस्मिंस्तिष्ठति न तु काश्यवच्छिन्न इति मन्यसे तन्न । अदृष्टस्य प्रदेशावच्छेदेन वृत्त्यभावात् । यदि च पूर्वमेव बहिरवच्छिन्न उत्पन्नं पापं न तु काश्यव-

च्छिन्ने तर्हि काशीप्रवेशेन किमधिकं कृतम्। अतः स्वार्थासंभवाद्वा पापस्थितिप्रतिपादकवाक्यानि बहिर्न गतव्यं किंत्वत्रैव वासः का इत्येवंपराणि। निर्गते गृह्यते पुनरिति च न हि निन्दा निन्दितुं प्रव तेऽपि तु विधेयं स्तोतुमितिन्यायेन बहिर्न यायादिति स्फुटमेवाऽऽह किंच बहुतराणि वचांसि पापविनाशमेव प्रतिपादयन्ति। तथा पाद्मे—

अत्र प्रविष्टमात्रस्य जन्तोः पापं पुराऽर्जितम्।
विनाशमाप्नोति परं पुण्यराशिश्च वर्धते ॥

मत्स्यपुराणे—वाराणसीति भुवनत्रयसारभूता
धन्या सदा मम पुरी गिरिराजपुत्रि ॥
अत्राऽऽगता विविधदुष्कृतकारिणोऽपि
पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ॥

शिवपुराणे—अविमुक्तप्रविष्टानां सद्यः पापं विलीयते।

पाद्मे—चत्वारो ब्राह्मणाः शस्ता एका स्त्री च पतिव्रता। इति।

संतप्यमानं भूरि द्युम्नं प्रति शालङ्कायनजवचनम्—
काशीं गच्छ महाराज सर्वपापप्रणोदिनीम्।
तां प्राप्य सकलं पापं क्षपयिष्यसि सर्वथा ॥
प्रत्ययार्थं च राजेन्द्र नीलीनिचयसंभवान्।
अनिशं कञ्चुकान्पञ्च परिधत्स्व महामते।
आकाशीदर्शनात्तां हि दृष्ट्वा स्युश्चन्द्रसंनिभाः ॥
कञ्चुका हि यदा नैल्यं जह्युः काशीविलोकनात्।
तदा त्वं तत्स्वकलुषं क्षपितं वेत्सि सर्वशः ॥ इति।

लैङ्गेऽपि—

ब्रह्महा योऽभिगच्छेत्तु अविमुक्तं कदाचन।
तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्या निवर्तते ॥

तथा—ब्रह्महत्यापहं तीर्थं क्षेत्रमेतन्मया कृतम्।

तथा—अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा।
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना ॥
अविमुक्तं प्रविष्टस्य तत्सर्वं भस्मसाद्भवेत्।

तथा—अविमुक्तं गता ये वै महापुण्यकृतो नराः।
अपापा ह्यजराश्चैव अदेहाश्च भवन्ति ते ॥

तथा—जन्मान्तरसहस्रेण यत्पापं पूर्वसंचितम् ।
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ॥

नन्वेकाम्रमाहात्म्ये—

एष विश्वेश्वरो देव एषैव मणिकर्णिका ।
कलावन्तर्हिता काशी मुक्तिरत्रैव लभ्यते ॥

इति काश्या अन्तर्धानश्रवणात्कुतस्तत्प्रवेशगमनादीति चेत् । नैवम् ।
अन्तर्धानं कलौ याति तत्पुरं तु महात्मनः ।
अन्तर्हिते पुरे तस्मिन्पुरी तु वसते ततः ॥

इति हरिवंशे वचनात् ।

तथा—कलावन्तर्हितो देवस्तत्पुरं च विशेषतः ।
पुरी तु वसते नित्यं सर्वप्राणिविमुक्तिदा ॥

इत्यादिपुराणपर्यालोचनया युगान्तरप्रत्यक्षस्य सुवर्णविविधरत्नघटितस्य विशेषरूपस्य देवदेवनिवासस्य पुरस्य ज्योतीरूपस्य वाऽन्तर्धानात्काशीलक्षणायास्तु पुर्या मुक्त्यादिफलदाया अनन्तर्धानान्न काचिदनुपपत्तिः । एवमन्यान्यपि तत्तत्पुराणगतान्यन्तर्धानवचांसि नेयानि । एकाम्रप्रशंसावाक्ये तु काशीपदं पुरपरमेव । यद्वा तत्क्षेत्रस्तुतिपरतया तन्न स्वार्थे तात्पर्यं भजते । सनत्कुमारसंहितायाम्—
अन्तःकृताघं न बहिर्नक्ष्यत्यप्यश्वमेधतः ।
बहिष्कृता ब्रह्महत्याऽप्यन्तर्यातस्य नश्यति ॥
कौर्मे—महापातकिनो ये च ये चैभ्यः पापकृत्तमाः ।
वाराणसीं समासाद्य ते यान्ति परमां गतिम् ॥
तथा—प्रविष्टमात्रे देवेशे ब्रह्महत्या कपर्दिनि ।
हाहेत्युक्त्वा सनादं सा पातालं प्राप दुःखिता ॥

इति महादेवब्रह्महत्यानाशान्यार्थदर्शनेन तन्नाऽशोऽपि फलमुक्तम् ।
तथा—मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
अविमुक्तं समासाद्य तत्क्षणाद्व्रजति क्षयम् ॥

काशीखण्डे—

काशीप्राप्तिरयं योगः काशीप्राप्तिरिदं तपः ।
काशीप्राप्तिरिदं दानं काशीप्राप्तिः शिवैकता ॥

तथा—अन्यान्यपि च पापानि महान्त्यल्पानि यानि च।
क्षयन्ति तानि सर्वाणि काशीं प्रविशतां सताम् ॥

मत्स्यपुराणे—

सर्वगुह्योत्तमं स्थानं मम प्रियतमं शुभम् ।
धन्याः प्रविष्टाः सुश्रोणि मम भक्ता द्विजातयः ॥

तथा—अविमुक्तं शुभं प्राप्य मद्भक्ताः कृतनिश्चयाः ।
निर्धूतपापा विमला भवन्ति विगतक्लमाः ॥

काशीप्रवेशे शुभाशुभकालविचारोऽपि न कार्यः । अत एवो
काशीखण्डे—

अथ वा काशीसंप्राप्तौ न चिन्त्यं हि शुभाशुभम् ।
तदेव हि शुभः कालो यदैवाऽऽप्येत काशिका । इति ॥

इदं चासंभवविषयम् । संभवे तु शुभकालः शोध्य एव, अथ वेति
वचनात् । अत्र प्रवेशदर्शनादिष्वविशेषश्रवणेऽपि प्रारब्धव्यतिरि
पापक्षयो द्रष्टव्यः प्रारब्धकर्मणां भोगादेव क्षय इतिवचनात् । प्रारब्ध
कर्मक्षये प्रवेशमात्रेण शरीरपातप्रसङ्गाच्च । अत एव ब्रह्मवैवर्ते—गोदा
वरीतीरदेशोत्पन्नस्य वेदधर्मसंज्ञस्य गुरोर्दीपकाख्येन शिष्येण स
काश्यामागतस्यापि प्रारब्धनाशो नाभूदित्युक्तम्—

ततस्तौ सहितौ विप्रौ काशीं गत्वा स्थितौ सुखम् ।

इत्याद्युक्त्वा—

प्रारब्धभोगमखिलं गुरुर्भोक्तुं प्रचक्रमे ।
कुष्ठरोगं समासाद्य नेत्रान्धत्वमपि प्रभुः ॥

इत्यादि । अत्रेदं विवेक्तव्यम्—किं काशीप्रवेशादतीताशेषजन्मार्जित
पापं नश्यत्युतैतज्जन्मजमेवेति । अत्र केचित्—अनेकजन्मीयपापनाशे

लिङ्गं दशाश्वमेधीशं(यं) दृष्ट्वा दशहरातिथौ ।
दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ॥

इत्याद्यनुपपत्तिः । एवं दशाश्वमेधे ज्येष्ठशुक्लप्रतिपदादिदशम्यन्त
स्नाने क्रमेणैकद्व्यादिजन्मपातकनाशप्रतिपादकानि तत्तल्लिङ्गदर्शनाद्वि
जन्मादिपातकनाशप्रतिपादकानि चानुपपन्नानि वचनानि स्युः क्षेत्र
प्रवेशादेवाशेषपापक्षयात् । अतः प्रवेशादेतज्जन्मार्जितमेव पापं नश्यति ।
तत्तत्तीर्थस्नानादिना तु प्राग्जन्मीयपापक्षय इति । एवं तु जन्मान्त

सहस्रेणेत्यादिप्रागुदाहृतैः प्रवेशादनेकजन्मपापनाशप्रतिपादकवचनैर्विरोधापातात्तत्तत्तीर्थस्नानादिना पापादिशब्दलक्षिता पापवासनाऽनेकजन्मीया नश्यति प्रवेशात्त्वखिलपापनाश एव । न च ततो वासनाऽपि नश्यतीति वाच्यम् । तथा सति काशीप्रविष्टानां वासनाभावात्पापे प्रवृत्त्यभावापत्तेस्तस्याः प्रवेशानिवर्त्यत्वात्कारणान्तरादेव निवृत्तेः । तदुक्तं ब्रह्मवैवर्ते—

> पूर्वजन्मसहस्रैर्यस्त्वनुभूतः कलिर्बहिः ।
> तद्वासना हृद्गताऽत्र कथं याति महर्षयः । इति ॥

अतः प्रवेशादखिलजन्मीयपापनाशः, तत्तत्तीर्थस्नानादिभिस्तु तत्तज्जन्मीयपापवासनानिवृत्तिरेवेत्यन्ये । अपरे त्वेवं सति पापादिशब्देषु वासनालक्षणापत्तिर्दोषो वासनानाशे च पुनः काशीस्थानां पापे प्रवृत्त्यनुपपत्तिः । न च ततः प्राचीनजन्मानुवृत्तवासनातस्तदुपपत्तिः । कृत्तिवासविश्वेश्वरादिदर्शनेनाशेषपापक्षयप्रतिपादनात्तत्राशेषवासनानिवृत्तिपरत्वे पापप्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात् । अतः प्रवेशादशेषमेव पापं नश्यति । काशीस्थतत्तत्तीर्थस्नानतत्तल्लिङ्गदर्शनादिना त्वेकद्व्यादिजन्मीयपापनिवृत्तिर्ये देशान्तरमृताः पुण्यातिशयेन काश्यामुत्पन्नास्तद्विषयतयाऽप्युपपन्नेति न काचिदनुपपत्तिः । ननु तेषामपि लिङ्गशरीरस्य काशीप्रवेशादखिलं पापं नष्टमेव । मैवम् । पाष्ठतिर्यगधिकरणन्यायेन

> यतो विधिनिषेधेषु मनुष्याणामधिक्रिया ।
> अतः पशुपिशाचाद्या धर्माधर्मोखरा मताः ॥

इतिपद्मपुराणाच्च मनुष्याधिकारित्वाच्छास्त्रस्य लिङ्गशरीरे पापनाशासंभवात् । न हि ज्वलनस्य दाहकत्वमिव काशीसंबन्धमात्रस्य पापनाशकता किंत्वधिकारिकृतयथाविधिसंबन्धस्य । अन्यथाऽङ्गविधिवैयर्थ्यापातात् । न च लिङ्गशरीरस्य काशीसंबन्धस्तथा । यत्तु पिशाचमोचनाख्याने पिशाचस्यापि तत्र स्नानात्पैशाच्यनिवृत्तिप्रतिपादनं तत्स्तुत्यर्थतया न स्वार्थे प्रमाणम् । यद्वा निषादस्थपतीष्टिवद्यावद्वचनं वाचनिकमिति न्यायेन तन्मात्रविषयमेव । लिङ्गदेहस्य तु काशीप्रवेशात्पापनिवृत्तौ न वचनमस्ति । अतः काश्युत्पन्नविषयाणि तत्तत्तीर्थस्नानादेकद्व्यादिजन्मीयपापनाशवचनानीति । यत्तु 'तत्र ब्रह्मेश्वरं दृष्ट्वा ब्रह्मलोके महीयते' इत्यादि ब्रह्मलोकेन्द्रलोकादिफलं यच्च क्वचिन्मुक्त्यादि-

फलं श्रुतं तदपि यात्रां कृत्वा देशान्तरमृतविषयम् । ननु काशीप्रवेशात्प्रवेशावधिकृतसकलपापनाशे कृतकाशीयात्रस्याकृतकाशीपातकस्य काशीतो निर्गमनसमन्तरमेव मरणेऽनन्तस्वर्गापत्तिः केवलपुण्येन पुनः संसारासंभवात् । न च पुण्यान्तं यावत्स्वर्गभोगोऽनन्तरं मोक्ष एव तस्येति युक्तं श्रवणादिजन्यात्मज्ञानाभावे तदनुपपत्तेरिति चेन्न । तस्यापि पापसंभवात् । अस्वास्थ्यादिना मार्गे नित्यादिलोपजप्रत्यवायापत्तेः । चोरादिभिर्हनने तु दुर्मरणजपापापत्तेः अन्ते दुष्टमतिसंभवेनान्ते मतिः सा गतिरितिवचनादनेकयोन्यापत्तेश्च अतः काशीप्रवेशादखिलपापनाशेऽपि न काचिदनुपपत्तिः । ऋजवस्तु स्मरणगमनदर्शनप्रवेशतत्तत्तीर्थस्नानादीनां नियतक्रमाणां फलावैलक्षण्ये उत्तरोत्तरानर्थक्यापातात्प्रत्येकं च सर्वपापक्षयश्रवणात्क्षये च स्वतो वैलक्षण्याभावेऽपि कायिकवाचिकमानसिकबुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यत्यन्तावृत्तमहापातकोपपातकादिप्रतियोगिकृतवैलक्षण्यसंभवात्पापे च सर्वत्वस्यावान्तरवैजात्यावच्छेदेनैव संकुचद्वृत्त्या सर्वेभ्यो ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासौ सर्वेभ्यश्चातुर्मास्यानीतिवत्संभवाद्गमनादौ प्रत्येकं सर्वपापनाशेऽपि न काचिदनुपपत्तिः । तथा च प्रवेशाद्यज्जातीयं सर्वं पापं नष्टं तद्विजातीयमेवैकध्यादिजन्मीयं तत्तत्तीर्थस्नानान्नश्यतीत्याहुः । अत्र परीक्षकैर्विचार्य युक्तः पक्षो ग्राह्यः ।

इति नारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रवेशविचारः ।

## अथ काश्यादिक्षेत्रपरिमाणम् ।

तत्र पाद्मे पातालखण्डे—

परिमाणं च वक्ष्यामि तन्निबोधत सत्तमाः ।
मध्यमेश्वरमारभ्य यावद्देहलिविघ्नपम् ॥
सूत्रं संस्थाप्य तद्दिक्षु भ्रामयेन्मण्डलाकृति ।
तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम् ॥
काशीति यद्विदुर्वेदास्तत्र मुक्तिः प्रतिष्ठिता ।
काश्यन्तः परमं क्षेत्रं विशेषफलसाधनम् ॥
वाराणसीति विख्यातं तन्मानं निगदामि वः ।
दक्षिणोत्तरयोर्नद्यौ वरणाऽसिश्च पूर्वतः ॥
जाह्नवी पश्चिमे चापि पाशपाणिर्गणेश्वरः ।
तस्या अन्तःस्थितं दिव्यं विशेषफलसाधनम् ॥

अविमुक्तमिति ख्यातं तन्मानं च ब्रवीमि वः ।
विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगोन्मितम् ।
अविमुक्ताभिधं क्षेत्रं मुक्तिस्तत्र न संशयः ॥
गोकर्णेशः पश्चिमे पूर्वतश्च
गङ्गामध्यमुत्तरे भारभूतः ।
ब्रह्मेशानो दक्षिणे संप्रदिष्ट-
स्तत्तु प्रोक्तं भवनं विश्वभर्तुः ॥

विश्वभर्तुर्भवनमन्तर्गृहम् । ततश्च काशीवाराणस्यविमुक्तान्तर्गृहाख्यानां चतुर्णां क्षेत्राणामुत्तरोत्तरं पूर्वपूर्वान्तर्वर्ति पूर्वपूर्वापेक्षया न्यूनपरिमाणं चेति संपिण्डितार्थः । तथा ब्रह्मपुराणे रुद्रं प्रति ब्रह्मा काशीक्षेत्रमाह—

पञ्चक्रोशप्रमाणं तु क्षेत्रं दत्तं मया तव ।
क्षेत्रमध्ये यदा गङ्गा गमिष्यति सरित्पतिम् ॥
तेन सा महती पुण्या पुरी रुद्र भविष्यति ।
पुण्या चोदङ्मुखी गङ्गा प्राची चापि सरस्वती ॥
उदङ्मुखी योजने द्वे गच्छते जाह्नवी नदी ।

मध्यमेश्वरात्सर्वदिक्षु पञ्चक्रोशप्रमाणमित्यर्थः । यत्तु ब्रह्मवैवर्ते कामकलावचः—

अहो महालिङ्गमयं जनार्दनं
पश्यामि काश्यां परमात्मरूपम् ।
आनाहतो योजनपञ्चकात्मकं
विस्तारि गव्यूतियुगं तु सार्धम् ॥ इति ।

अत्र योजनं क्रोशस्तेन समन्ततः पञ्चक्रोशतैवेति न विरोधः । वाराणसीक्षेत्रं तु वरणास्योरन्तरा तदुक्तं कौर्मे—

वरणायास्तथैवास्या मध्ये वाराणसी पुरी । इति ।

मात्स्ये—द्वियोजनमथार्धं च पूर्वपश्चिमतः स्थितम् ।
अर्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्थितम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी तथा ।
एष क्षेत्रस्य विस्तारः प्रोक्तो देवेन धीमता ॥

शुष्कनदी, असी । अत्र प्रथमार्धे काश्या एव विस्तार उक्तो न तु वाराणस्याः । तस्यां पूर्वतो जाह्नवीति पाद्मे जाह्नव्याः पूर्वावधिकर-

णात् । ' क्षेत्रस्य संदृश्यं च पूर्ववेलां पृष्ठेन गङ्गा प्रवहत्यजस्रम् ' इ
सनत्कुमारसंहितोक्तेश्च । अतो दशक्रोशपरिमिते काशीक्षेत्रे गङ्गा
मध्ये व्यवच्छिन्ने पूर्वार्धं परित्यज्य पश्चिमार्धे गङ्गासीदेहलीविनाय
वरणारूपैश्चतुर्दिगवधिभिरवच्छिन्नो देशो वाराणसीति सिध्यति । इ
मात्स्य एव—

द्वियोजनं तु विस्तीर्णं पूर्वपश्चिमतः स्मृतम् ।
अर्धयोजनविस्तीर्णं तत्क्षेत्रं दक्षिणोत्तरम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी तु वै ।
भीमचण्डीं समारभ्य पर्वतेश्वरमन्तिके ॥

इदमपि पूर्वेण व्याख्यातम् । अत्र च द्वियोजनमित्यद्दूरव्यवधाने
स्थूलपरिमाणाभिप्रायेण वा सार्धद्वियोजनपरमेव । पाद्मे सृष्टिखण्डे—

वरणा चाप्यसिश्चैव द्वे नद्यौ सुरनिर्मिते ।
अन्तराले तयोः क्षेत्रं वध्या न विशते क्वचित् ॥

अत्र सर्वत्र शास्त्रोक्ता संगमेश्वरप्रदेशस्थैवासी गृह्यते । तेन क्व
चिद्गङ्गाप्रवाहस्य दूरदेशगमनेन नगराधस्तान्निम्नतयाऽसीप्रवाहवहनेऽ
गङ्गातीरस्य वाराणस्यन्तःपाताविघातः । पञ्चक्रोशयात्रयाऽपीदं
वाराणसीक्षेत्रं प्रदक्षिणी क्रियते । पञ्चक्रोशयात्रासमाख्याऽपि प्रा
श्चाच गङ्गादेहलीविनायकावधिकस्य क्षेत्रस्य क्रोशपञ्चकपरिमितत
दुपपन्ना । एवं च सति गङ्गाया वाराणस्यन्तर्गतत्वं परपारे च वारा
सीसत्वं मणिकर्णिकेश्वरगङ्गाकेशवादिक्रमेण वचनबलात्परपारं प
त्यज्य यात्राकरणमिति वदतामभिप्रायं न विद्मः । विद्मश्च काशीवा
णस्योर्विवेकाग्रहमिति । यदपि क्षेत्रमध्यादितिवचने यद्यपि क्षेत्रम
गङ्गाप्रवाहः प्रतीयते तथाऽप्यन्तराले तयोः क्षेत्रमिति ब्रह्मपुराणा
त्रमध्यपदं क्षेत्रस्पर्शमात्रपरं ग्राममध्ये न गत इतिवदिति तद्व्यस
क्षेत्रमध्यादितिवचसः काशीपरतया वाराणसीपरत्वाभावस्योक्तत्वा
अविमुक्तप्रमाणं तु लिङ्गपुराणे—

कृत्तिवाससमारभ्य क्रोशं क्रोशं चतुर्दिशम् ।
योजनं चैव तत्क्षेत्रं गणै रुद्रैश्च संवृतम् ॥

तथा—क्षेत्रमध्ये यदा लिङ्गं भूमिं भित्त्वा समुत्थितम् ।
मध्यमेश्वरसंज्ञं तु ख्यातं सर्वसुरासुरैः ॥

अस्मादारभ्य लिङ्गात्तु क्रोशं क्रोशं चतुर्ष्वपि ।
योजनं विद्धि तत्क्षेत्रं मृत्युकालेऽमृतप्रदम् ॥
एष क्षेत्रस्य विस्तारः पुराणे परिकीर्तितः ।
अस्मात्तु परतो देवि विहारो नैव विद्यते ॥

स्कान्दे—चतुष्क्रोशं चतुर्दिक्षु क्षेत्रमेतत्प्रकीर्तितम् ।
योजनं विद्धि चार्वङ्गि मृत्युकालेऽमृतप्रदम् ॥

तथा—मुक्तिक्षेत्रप्रमाणं च क्रोशं क्रोशं च सर्वतः ।
आरभ्य लिङ्गादस्माच्च पुण्यदान्मध्यमेश्वरात् ॥

अत्र लैङ्गस्कान्दालोचनया कृत्तिवासमध्यमेश्वरयोश्चतुर्दिक्षु योजनमितमविमुक्तम् । पाद्मे तु विश्वेश्वरात्सर्वतो धनुःशतद्वयमितम् । तथा चात्र परिमाणविकल्पः । योजनमित्येतत्तु वचनत्रयेऽपि प्रथमार्धोक्ताविमुक्तक्रोशेन सह योजनस्य पञ्चक्रोशात्मकत्वात्काशीपरिमाणपरमिति न काचिदनुपपत्तिः । कृत्तिवासस्य च मध्यमेश्वरसामीप्यादल्पान्तरता न दोषाय । अन्तर्गृहपरिच्छेदश्च काशीखण्डे—

पूर्वतो मणिकर्णीशो ब्रह्मेशो दक्षिणे स्थितः ।
पश्चिमे चैव गोकर्णो भारभूतस्तथोत्तरे ॥
इत्येतदुत्तमं क्षेत्रमविमुक्ते महाफलम् ।

अविमुक्ते तन्मध्ये । अत्र पूर्वतो मणिकर्णिकेश्वरस्यावधित्वोक्तावपि पाद्मैकवाक्यतया गङ्गामध्यमेव तेनोपलक्ष्यते । तेन गङ्गार्धजलमृतस्य क्षेत्रचतुष्टयमरणसिद्धिः । विकल्प एवेत्यन्ये । तदयं संक्षेपः—

सीमाविनायकेभ्यश्च बहिः काश्याः प्रमाणतः ।
तावत्क्षेत्रं विजानीयाद्यावद्धनुःशतत्रयम् ॥

इति वचनात्पश्चिमे भीमचण्ड्याः परतो धनुःशतत्रयमितदेशेन सह पूर्वतो गङ्गापारेण च सार्धं वर्तुलं काशीक्षेत्रम् । गङ्गा तु तन्मध्ये वहति क्षेत्रमध्यादुदग्गङ्गेतिवचनात् । गङ्गासीमीमचण्डीपाशपाणिवरणान्तर्गतं क्षेत्रं वाराणसी । पञ्चक्रोशयात्रायां च क्षेत्रबहिष्ठस्यापि पृथ्वीश्वरसुयूपसरोवृषभध्वजादेर्गमनं वचनबलाद्भवति । स्कान्दलैङ्गवशान्मध्यमेश्वरकृत्तिवाससमन्तात्क्रोशमितमविमुक्तम् । पाद्मे तु विश्वेश्वरतः समन्ताद्धनुःशतद्वयमितम् । अन्तर्गृहं तु पूर्वादिषु गङ्गामध्यब्रह्मेश्वरगोकर्णेश्वरभारभूतेश्वरावधिकम् । एवं चतुर्विधे क्षेत्रे मरणे मुक्ति-

तारतम्यं वक्ष्यामः । काशीक्षेत्राद्बहिः समन्ताद्योजनं देवभूमिः मृताः स्वर्गभाजः ।

काश्याश्चतुर्दिशं देवि योजनं स्वर्गभूमिका ।
मृतास्तत्र हि गच्छन्ति स्वर्गं सुकृतिनां पदम् ॥

इति ब्रह्मवैवर्तवचनात् । वामनपुराणे तु हरिणा महेश्वरं प्रति क्षेत्रान्तरमप्युक्तम्——

योऽसौ प्राङ्मण्डले पुण्ये मदंशप्रभवोऽव्ययः ।
प्रयागे वसते नित्यं योगशायीति विश्रुतः ॥
चरणाद्दक्षिणात्तस्य विनिर्याता सरिद्वरा ।
विश्रुता वरणेत्येव सर्वपापहरा शुभा ॥
सव्यादन्या द्वितीया च असिरित्येव विश्रुता ।
ते उभे सरितां श्रेष्ठे लोकपूज्ये बभूवतुः ॥
तयोर्मध्ये तु यो देशस्तत्क्षेत्रं योगशायिनः ।
त्रैलोक्यप्रवरं तीर्थं सर्वपापप्रमोचनम् ॥
न तादृशोऽस्ति गगने भूम्यां न च रसातले ।
तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा ॥
यस्यां हि भोगिनो नाशे प्रयान्ति भवतो लयम् ।

इति श्रीभट्टनारायणविरचिते त्रिस्थलीसेतौ काशीप्रकरणे क्षेत्रपरिमाणम् ।

अथ कियत्कालं काशीवासफलम् ।

स्कान्दे—तीर्थान्तरे गवां कोटिं विधिवद्यः प्रयच्छति ।
एकाहं यो वसेत्काश्यां काशीवासी तयोर्वरः ॥

तथा—अहोरात्रं स्थित्वा भवति सुकृती पापरहित-
स्त्रिरात्रं यस्तिष्ठेत्स खलु सुखमोक्षैकनिलयः ।
निवासं ये कुर्युर्विततमधिकारानुगुणितं
न ते धर्मात्मानः पुनरपि भवभ्रान्तिषु जुषः ॥
त्रिरात्रमपि ये काश्यां वसन्ति नियतेन्द्रियाः ।
तेषां पुनन्ति नियतं स्पृष्टाश्चरणरेणवः ॥

तथा—यत्पुण्यमश्वमेधेन यत्पुण्यं राजसूयतः ।
काश्यां तत्पुण्यमाप्नोति त्रिरात्रवसनाद्यमी ॥

मात्स्ये—मासमेकं वसेद्यस्तु लघ्वाहारो जितेन्द्रियः ।
सम्यक्तेन व्रतं चीर्णं दिव्यं पाशुपतं महत् ॥
जन्ममृत्युभयं तीर्त्वा स याति परमां गतिम् ।

इदं चान्यत्र मृतस्यापि काशीवासमात्रस्य मुक्तिबीजतया जन्मान्तराभिप्रायेण परम्परया परमगतिरूपमोक्षप्राप्तिः फलं ज्ञेयम् । अत एवोक्तम्—

बहुकालमुषित्वाऽपि नियतेन्द्रियमानसः ।
यद्यन्यत्र विपद्येत दैवयोगाच्छुचिस्मिते ॥
सोऽपि स्वर्गसुखं भुक्त्वा भूत्वा क्षितिपतीश्वरः ।
पुनः काशीमवाप्याऽऽर्यं विन्देन्निःश्रेयसं परम् ॥ इति ।

तथा—एकाहारस्तु यस्तिष्ठेन्मासं तत्र वरानने ।
यावज्जीवकृतं पापं मासेनैकेन शुध्यति ॥

इदं काश्यां मासमुषित्वाऽन्यत्र मृतस्य । अमोक्षरूपत्वाद्यावज्जीवमिति । अन्तर्गृहयात्राद्यसमर्थस्य समर्थस्यापि वा तदकुर्वाणस्यैकाहारत्वादिधर्मविशिष्टमासवासाद्यावज्जीवकृतं मानसादिक्षुद्रपापं नश्यतीत्यर्थः । तेन नान्यत्र कृतस्य पापस्य नाशस्तस्य काशीप्रवेशान्नाशात् । नाप्यत्रैव कृतमहापातकस्य तस्यैतावन्मात्रेण नाशासंभवात् । न क्षुद्रपापस्य, अन्तर्गृहयात्रादिना नाशादित्यादिविकल्पाः परिहृता भवन्ति । यद्वा यावज्जीवकृतपापवासना नश्यतीत्यर्थः ।

स्कान्दे—निमेषमात्रमपि यो ह्यविमुक्तेऽतिभक्तिमान् ।
ब्रह्मचर्यसमायुक्तस्तेन तप्तं महत्तपः ॥
संवत्सरं वसंस्तत्र जितक्रोधो जितेन्द्रियः ।
अपरस्वविपुष्टाङ्गः परान्नपरिवर्जकः ॥
परापवादरहितः किंचिद्दानपरायणः ।
समासहस्रमन्यत्र तेन तप्तं महत्तपः ॥

ब्रह्मवैवर्ते—

अहोरात्रं स्थिता ये तु पुण्यसंभारसंततिः ।
तेषां प्रवर्धते नित्यं माससंवत्सरक्रमैः ॥

अथ क्षेत्रसंन्यासो ब्रह्मवैवर्ते—

आनन्दाख्ये कानने ये वसन्ति
क्षेत्रन्यासं संविधायात्र पुत्र ।

तैर्वस्तव्यं रुद्ररूपैर्हि यत्ना-
द्यतो रुद्रो धर्मपालः प्रसिद्धः ॥

तथा—अनेकजन्मसु महत्साधनैर्ज्ञानमुत्तमम् ।
प्राप्नुवन्ति तदेकेन जन्मना साधुवासिनः ॥
अविमुक्तं समासाद्य न त्यजेन्मोक्षकामुकः ।
क्षेत्रन्यासं दृढं कृत्वा वसेद्धर्मपरः सदा ॥
यथा पतिव्रता नारी भर्तारमनु गच्छति ।
तथाऽस्य हस्तमालम्ब्य काशीमनुगतो भवेत् ॥

तथा—वाराणसीं समासाद्य यो बहिर्गन्तुमिच्छति ।
तदन्नं वर्जयेद्धीमांश्चाण्डालस्यान्नवत्सदा ॥
मोहेनापि बहिर्गन्तुमनुज्ञां यः प्रयच्छति ।
रौरवादिषु घोरेषु नरकेषु पतत्यधः ॥

तथा—यस्याः प्रसादादन्यास्तु पुर्यो मोक्षं वितन्वते ।
तां काशीं को न सेवेत मोक्षार्थी सर्वदा शुभाम् ॥

तथा—वसन्ति पापा न हि काशिकायां
वसन्ति चेदत्र मृतिर्न जायते ।
मृतिर्भवेच्चेन्न हि यातनाक्षयः
क्षये भवेन्मोक्षसुखे तु धिक्कृतः ॥

तथा—तीर्थानि कृत्वा काश्यां तु वसेन्निर्व्याकुलः सदा ।
न तु काश्याः प्रगन्तव्यं तीर्थान्यत्र वसन्ति यत् ॥

सनत्कुमारसंहितायाम्—

नष्टेषु सर्वेषु कलावुपाये-
ष्वासाद्य काशीं शिवराजधानीम् ।
लिङ्गं प्रतिष्ठाप्य वरं स्वनाम्ना
वसेत्सदा विघ्नशतैर्हतोऽपि ॥

काशीखण्डे—

ज्ञात्वा क्षेत्रस्य माहात्म्यं यो वसेत्कृतनिश्चयः ।
तं तारयति विश्वेशो जीवन्तं त्वथवा मृतम् ॥

तथा—जन्मान्तरसहस्रैस्तु यत्पुण्यं समुपार्जितम् ।
तत्पुण्यपरिवर्तेन काश्यां वासोऽत्र लभ्यते ॥

तथा—काशी द्विजाशीर्भिरहो यदाप्ता
कस्तां मुमुक्षुर्यदि वाऽमुमुक्षुः ।
ग्रासं करस्थं स विसृज्य हृद्यं
श्वकूर्परं लेढि विमूढचेताः ॥

इत्यादि पञ्चमेऽध्याये ।

तथा—सापदं संपदं ज्ञात्वा सापायं कायमुच्चकैः ।
चपलाचपलं चाऽऽयुर्मत्वा काशीं समाश्रयेत् ॥

तथा—यस्तत्र निवसेद्विप्र संयतात्मा समाहितः ।
त्रिकालमपि भुञ्जानो वायुभक्षसमो भवेत् ॥

तथा—अद्य प्रातः परश्वो वा मरणं प्राप्यमेव च ।
यावत्कालविलम्बोऽस्ति तावत्काशीं समाश्रयेत् ॥

कौर्मे—मोक्षं सुदुर्लभं मत्वा संसारं चातिभीषणम् ।
अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥

तथा—कृत्वा वै नैष्ठिकीं दीक्षामविमुक्ते वसन्ति ये ।
तेषां तत्परमं दानं ददाम्यन्ते परं पदम् ॥

काशीखण्डे—
वरं वाराणसीवासी जटी मुण्डी दिगम्बरः ।
नान्यत्र च्छत्रसंच्छन्नवसुधामण्डलेश्वरः ॥
वरं वाराणसीभिक्षा न लक्षाधिपताऽन्यतः ।
लक्षाधीशो विशेद्गर्भं तद्भिक्षाशी न गर्भभाक् ॥

तथा—रुद्रावासे वसेन्नित्यं नरो नियतमानसः ।
एनसामपि संभारं कृत्वा कालाद्विमुच्यते ॥

तथा—विधाय क्षेत्रसंन्यासं ये वसन्तीह मानवाः ।
जीवन्मुक्तास्तु ते देवि तेषां विघ्नं हराम्यहम् ॥

तथा—स सर्वतीर्थसुस्नातः स सर्वक्रतुदीक्षितः ।
स दत्तसर्वदानस्तु काशी येन निषेविता ॥

तथा—कलिः कालः कृतं कर्म त्रिकण्टकमितीरितम् ।
एतत्त्रयं न प्रभवेदानन्दवनवासिनाम् ॥

वनान्तरवदानन्दवने कण्टकवद्दुःखदायीदं त्रयं नास्तीत्यर्थः ।

तथा—कः प्राप्य काशीं दुर्मेधाः पुनस्त्यक्तुमिहेहते ।
अनेकजन्मजनितकर्मनिर्मूलनक्षमाम् ॥ इत्यादि ।

मात्स्ये—आदेहपतनाद्यावत्तत्क्षेत्रं यो न मुञ्चति ।
ब्रह्मचर्यव्रतः सम्यक्सम्यगिष्टं मखैर्भवेत् ॥
सदा यजति यज्ञेन सदा दानं प्रयच्छति ।
सदा तपस्वी भवति ह्यविमुक्ते स्थितो नरः ॥

ब्रह्मवैवर्ते—
यस्तु काश्यां वसेज्जन्तुः सर्वव्यापारकृन्नरः ।
तस्यापि या गतिः प्रोक्ता न सा यज्ञैर्न चान्यतः ॥

पाद्मे—सन्त्यनेकानि तीर्थानि पृथिव्यां मुनिसंत्तम ।
तथाऽपि जन्तुना काशी सेव्या सर्वप्रयत्नतः ॥

लिङ्गपुराणे—
अविमुक्तं निषेवेत संसारभयमोचनम् ।
भोगमोक्षप्रदं दिव्यं बहुपापविनाशनम् ॥
विघ्नैरालोड्यमानोऽपि योऽविमुक्तं न मुञ्चति ।
स मुञ्चति जरां मृत्युं जन्म चैतदशाश्वतम् ॥
न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे ।
या गतिर्विहिता पुंसामविमुक्तनिवासिनाम् ॥
अविमुक्ते स्थिता नित्यं पांसुभिर्वायुनेरितैः ।
स्पृष्टा दुष्कृतकर्माणो यास्यन्ति परमां गतिम् ॥
अविमुक्ते वसेद्यस्तु मम तुल्यो भवेन्नरः ।

तथा—काश्यां योगो न दुष्प्रापः काश्यां मुक्तिर्न दुर्लभा ।
ततोऽनिशं निषेवेत काशीं मोक्षाप्तये नरः ॥

मात्स्ये—आदेहपतनाद्यावत्क्षेत्रं यो न विमुञ्चति ।
न केवलं ब्रह्महत्या प्राकृतश्च निवर्तते ॥

प्राकृतः संसारः ।

तथा—अविमुक्तं न सेवन्ते मूढा ये तामसा नराः ।
विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः ॥

पुनः पुनर्गर्भवासं प्राप्नुवन्तीत्यर्थः ।

अविमुक्तं यदा गच्छेत्कदाचित्कालपर्ययात् ।
अश्मना चरणौ हत्वा तत्रैव निधनं व्रजेत् ॥

अविमुक्तं प्रविष्टस्तु यदि गच्छेत्ततः पुनः ।
तदा हसन्ति भूतानि अन्योन्यकरताडनैः ॥

तथा—कामक्रोधेन लोभेन ग्रस्ता ये भुवि मानवाः ।
निष्क्रामन्ते नरा देवि दण्डनायकमोहिताः ॥

लैङ्गे—विदित्वा भङ्गुरं लोकं येऽस्मिन्वत्स्यन्ति मत्पुरे ।
अन्तकालेऽपि वत्स्यन्ति तेषां भवति मोक्षदम् ॥

तथा—श्रुत्वा कलियुगं घोरमल्पायुपमधार्मिकम् ।
सिद्धक्षेत्रं न सेवन्ते जायन्ते च म्रियन्ति च ॥

मात्स्ये—अनन्यमानसो भूत्वा योऽविमुक्तं न मुञ्चति ।
तस्य देवः सदा तुष्टः सर्वान्कामान्प्रयच्छति ॥

ब्रह्मपुराणे—
आदेहपतनाद्ये तु क्षेत्रं सेवन्ति मानवाः ।
ते मृता हंसयानेन दिव्यं यान्त्यकुतोभयाः ॥

दिव्यं देवस्थानम् । अत्र क्षेत्रपदोपादानात्क्षेत्रमात्रमृतविषयमेतन्मोक्षफलाश्रवणात् ।

पाद्मे—काश्यां तिष्ठन्ति ये केचित्तान्पश्यन्ति सुरोत्तमाः ।
चतुर्भुजांस्त्रिनयनान्गंङ्गोद्भासितमूर्धजान् ॥

मरणानन्तरं सारूप्यप्राप्त्या , जीवद्दशायामेव वा क्षेत्रमाहात्म्यादेवं पश्यन्तीत्यर्थः ।

अविमुक्ते तु यस्तिष्ठेदाकलेवरपातनात् ।
तं विश्वेशोऽत्र जीवन्तं मृतं च परिरक्षति ॥

लैङ्गे—अविमुक्तं समासाद्य नान्यद्गच्छेत्तपोवनम् ।
सर्वात्मना तपः सत्यं प्राणिनां नात्र संशयः ॥

तथा—अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरो मासानब्दं वा न वसेत्पुनः ॥
अविमुक्ते प्रविष्टस्य विहारस्तु न विद्यते ।
न दोषोऽपि भवेत्तस्य दृष्टं शास्त्रे पुरातने ॥

काश्यां निवसता शरीरनिर्वाहादिचिन्ता न कार्येत्यर्थे काशीखण्डे—
सर्वार्थानामत्र दात्री भवानी
सर्वान्कामान्पूरयेदत्र ढुण्ढिः ।

सर्वाञ्जतून्मोचयेदन्तकाले
विश्वेशोऽत्र श्रोत्रमन्त्रोपदेशात् ॥

लैङ्गे—केवला जाह्नवी विप्रा ज्ञाताऽज्ञाताऽथ वा पुनः ।
अपवर्गं वितरति स्वतोये त्यक्तदेहिनः ॥
यस्य कस्यापि वा जन्तोर्भागीरथ्यां गतायुषः ।
न दुर्लभो ब्रह्मभावस्तत्सङ्क्षपितांहसः ॥
चिदानन्दमयं ब्रह्म गङ्गाभावमुपागतम् ।
ब्रवीमि सत्यमेवैतन्माऽत्र वः संशयो भवेत् ॥
एवंप्रभावा निर्वाणतोयराशिवहा नदी ।
भागीरथी विलसति क्षेत्रे शंभोर्विमुक्तिदे ॥
एकैकमपि विप्रेन्द्राः साक्षाद्ब्रह्माप्तिसाधनम् ।
न चित्रमत्र द्वितयं यन्निर्वाणाय कल्पते ॥
कीकटेऽपि प्रमीतस्य पापकर्मरतस्य च ।
यद्यस्थिखण्डं गङ्गायां निपतेद्दैवयोगतः ॥
तदा संक्षीणपापः सन्दिव्यभोगसमन्वितः ।
षष्टिर्वर्षसहस्राणि स्वर्गलोके महीयते ॥
ईदृशी स्वर्णदी यत्र सर्वतीर्थसमन्विता ।
तां काशीं को न सेवेत भीमसंसारमुक्तये ॥

कौर्मे—तस्मान्मुमुक्षुर्नियतो वसेदामरणान्तिकम् ।
वाराणस्यां महादेवाज्ज्ञानं लब्ध्वा विमुच्यते ॥
वसेद्वा (दा) मरणाद्विप्रो वाराणस्यां समाहितः ।
सोऽपीश्वरप्रसादेन याति तत्परमं पदम् ॥

तथा—संप्राप्य काशीं शिवराजधानीं
किं यासि रे मूढ दिगन्तराणि ।
निधानकुम्भं चरणेन हत्वा
चाण्डालसेवां प्रकरोषि नित्यम् ॥

शिवपुराणे—

देवो देवी नदी गङ्गा मृष्टमन्नं शुभा गतिः ।
वाराणस्यां विशालाक्षि वासः कस्य न रोचते ॥

यदि स्वयं काशीवासं कर्तुं न शक्नोति तदा ब्राह्मणं वासयेत्।
तदुक्तं पाद्मे—

काशीवासं कर्तुकामो यदि स्या-
द्दूरस्थोऽपि ब्राह्मणं धर्मनिष्ठम् ।
तदा नानावस्त्रभोज्यादि दत्त्वा
श्रद्धायुक्तः सर्वदा वासयीत ॥
वाराणस्यां वासयन्ब्राह्मणाद्यं
द्वयोश्छिन्द्याद्दुष्टसंसारबन्धम् ।
तस्मात्तत्र स्थापनीयाः प्रयत्ना-
द्विप्रा राजन्दूरगेणापि मुक्त्यै ॥

काशीखण्डेऽपि—

स्वयं वस्तुमशक्तोऽपि वासयेत्तीर्थवासिनम् ।
अप्येकमपि मूल्येन स वस्तुः फलभाग्ध्रुवम् ॥

ब्रह्मवैवर्ते—

परं साहसमास्थाय काश्यां स्थेयं मुमुक्षुभिः ।
साहसात्सिद्धिमाप्नोति नरो विकलमानसः ॥

तथा—यैर्यैरुद्वेजितो जन्तुस्त्यजेत्काशीं सुदुःखितः ।
ते ते नरकजालेषु पच्यन्ते पितृभिः सह ॥

अथ काशीवासिनो विहितनिषिद्धानि पाद्मे पातालखण्डे भृगुरुवाच—

यत्पृष्टोऽहं मुनिश्रेष्ठाः कथं सेव्येत सा पुरी ।
वदामि तदहं तत्त्वं श्रूयतामवधानतः ॥
विहाय काममर्थं च दम्भं मात्सर्यमेव च ।
धर्ममोक्षौ पुरस्कृत्य निषेवेत विभोः पुरीम् ॥
प्रतिग्रहादुपावृत्तः शान्तिक्षान्तिसमन्वितः ।
शंकरध्याननिरतो निषेवेत विभोः पुरीम् ॥
अकुर्वन्कलुषं कर्म समलोष्टाश्मकाञ्चनः ।
पञ्चाक्षरपरो नित्यं निषेवेत विभोः पुरीम् ॥
गृही चेद्धर्मनिरतो बहिरर्जितवित्तभुक् ।
व्यवहारोपयोग्यत्र गृह्णन्वा विमलं वसु ॥
प्रियातिथिः सार्थपरो निषेवेत विभोः पुरीम् ।
स्वाध्यायाध्ययने युक्तो गुरुशुश्रूषणे रतः ॥

ब्रह्मचारी धर्मरतो निषेवेत विभोः पुरीम् ।
कैः सेव्येति च यत्प्रोक्तं तदहं प्रब्रवीमि वः ॥
स्वस्वजात्यनुसारेण यो धर्मो यस्य कल्पितः ।
तत्तद्धर्मयुतैरेव सेव्या वाराणसी पुरी ॥
अन्यैः संसेव्यमाना सा कीकटान्नातिरिच्यते ।
अतो धर्मपरैरेव रागद्वेषविवर्जितैः ॥
निर्वाणमेव काङ्क्षद्भिः शंकरोपास्तितत्परैः ।
श्रयणीया मुनिश्रेष्ठास्तेषां साक्षाद्विमुक्तिदा ॥
द्वैपायनोऽपि देवेन शंकरेण द्विजोत्तमाः ।
द्वेषाकुलतया काश्या बहिरेव पुरा कृतः ॥

ब्रह्मवैवर्ते—

परान्नं परिवादश्च परदारास्तथा धनम् ।
अदानाचारविद्वेषाभक्ष्यालस्यानुदैन्यताः ॥
दश दोषा महादेवि वर्ज्याः काशिनिवासिभिः ।

तथा—यः काश्यां कुरुते पापं जनो मोहमदान्वितः ॥
आवयोः कालराजस्य दण्डपाणेर्गणेशितुः ।
अपराधी दुराचारः कथं सिद्धिमवाप्नुयात् ॥
मयाऽपि यत्र सततं कालराजाद्धि बिभ्यता ।
स्थीयते सावधानेन काश्यामानन्दभोगिना ॥
स्थानानुरूपा वृत्तिर्हि शोभते पुरुषस्य च ।
न ह्यग्निहोत्रशालायां क्रियते मलमोचनम् ॥

काशीखण्डे—

काश्यां पापं न कुर्वीत दारुणा रुद्रयातना ।
अहो रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥
अभिलष्यन्ति ये नित्यं धनं नानाप्रतिग्रहैः ।
परस्वं कपटैर्वाऽपि काशी सेव्या न तैर्नरैः ॥

तथा—आत्मरक्षाऽत्र कर्तव्या महाश्रेयोभिवृद्धये ।
अत्राऽऽत्मत्यजनोपायं मनसाऽपि न चिन्तयेत् ॥
एकस्मिन्नपि यच्चाह्नि काश्यां श्रेयोऽभिलभ्यते ।
न तु वर्षशतेनापि तदन्यत्राऽऽप्यते क्वचित् ॥

तथा—वासः काश्यां सज्जनानां प्रसङ्गो
गङ्गास्नानं पापकर्मारुचिश्च ॥
पुण्यप्रीतिः स्वेच्छया लाभसौख्यं
दानं शक्त्या न प्रतिग्राह्यमत्र ॥
अष्टावेते यस्य सन्त्येव योगा
योगाभ्यासैस्तस्य किं काशिकायाम् ॥

तथा—असत्सङ्गात्प्रत्यहं पापराशि-
र्विचीयते सज्जनः संक्षिणोति ॥
तस्मात्सन्तः सावधानेन सेव्याः
सद्भिर्दानैर्दुःखभारं जहाति ॥
नारायणपरः काश्यां महादेवपरोऽथ वा ।
भूत्वा सदाचाररतस्तिष्ठेदत्र न चान्यथा ॥
यात्रापूजानामसंकीर्तनादि
स्नानं तीर्थेष्वेव तत्तद्दिनेषु ॥
सत्सङ्गेऽन्यैर्नैव संभाषणादि
कुर्यादेवं देवदेवो दिदेश ॥
स्नातव्यं जाह्नवीतोये द्रष्टव्यः पार्वतीपतिः ।
स्मर्तव्यः कमलाकान्तो वस्तव्यं काशिकास्थले ॥

तथा—दातव्यमिति काश्यां नो वक्तव्यं मनुजैः क्वचित् ।
अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत् ॥
दशोत्तरं पर्वसु च शतं चन्द्रग्रहे भवेत् ।
सूर्यग्रहे सहस्रं तु मरणेऽनन्तकं स्मृतम् ॥
तस्माद्दातव्यमित्युक्तं देयमेव न चान्यथा ।
बुधैस्तदेव वक्तव्यं दातुं शक्यं यदेव हि ॥

तथा—उक्त्वा न दीयते यद्धि यातनावहमेव तत् ।
दानमेव कलौ नृणां प्रायश्चित्तं न चेतरत् ॥
काश्यामपि कृता दोषा नश्यन्ति हि सुदानतः ।
काशीस्थनिन्दनपरान्परमादरेण
काश्यां मृतानपि हि यातयते महात्मा ।
श्रीकालराज इति यः प्रथितः परेशः

सोऽस्यावमत्य सुकृतं परिशिक्षयेच्च ।
तस्मात्काश्यां सर्वसत्त्वेषु बुद्धिः
कर्तव्या ते रुद्ररूपा सदाऽऽदौ ।
पश्चादन्यद्धर्मजातं स्वशक्त्या
कर्तव्यं ते पुत्रक त्राणहेतोः ।

तथा—आत्मानं सद्गुणं मत्वा शास्त्राचरणसंमतम् ॥
ततोऽन्यस्य करोत्यज्ञो निन्दां निन्दित एव सः ।
अत एव त्वया वत्स निन्दा कस्यापि देहिनः ॥
न श्रोतव्या न कर्तव्या न स्थेयं तत्र यत्र सा ।

तथा—आदौ काश्यां धर्ममार्गेण वासः
पापत्यागः काशिमाहात्म्यदृष्टिः ।
देहं गेहं पुत्रमित्रादि यस्य
सर्वं तुच्छं सोऽधिकारी महात्मा ।

कौर्मे—वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ॥
तेनैव जन्मना ज्ञानं लब्ध्वा याति परं पदम् ।

मात्स्ये—संहृत्य शक्तितः कामान्विषयेभ्यो बहिः स्थिताः ॥
धर्मशीला जितक्रोधा निर्ममा नियतेन्द्रियाः ।
ध्यानयोगपराः सिद्धिं गच्छन्ति परमं पदम् ॥

पाद्मे—काश्यां कृतस्य पापस्य भोगो रुद्रपिशाचता ।
एकैकस्य च पापस्य समानामयुतत्रयम् ॥
तस्मात्पापं न कर्तव्यं मनागपि विभोः पुरे ।

तथा—अत्रत्यपापभोगस्तु दारुणो दानवेश्वर ।
एतत्कृताघसंघातो घोरां भुक्त्वा तु यातनाम् ॥
पैशाच्यं समवाप्नोति वर्षाणामयुतत्रयम् ।

आदौ नरकभोगः पश्चाद्रुद्रपिशाचतेत्यर्थः । तथा च पाद्म ए
ऋषय ऊचुः—

पापात्मा किं पिशाचत्वं प्रथमं प्राप्नुयात्परम् ।
अथ वाऽन्यत्र नरके पतेत्पूर्वं ततस्तु तद् ॥
एतद्विस्तरतो ब्रूहि सर्ववित्त्वं मतो हि नः ।

भृगुः—क्षणं कुरुत मद्भं वो वदामीह यथाश्रुतम् ॥

काश्यां कृतस्य पापस्य फलं यद्यत्सुदारुणम् ।
वाराणस्यां मृतः पापो नोपैति यमयातनाम् ॥
नियन्ता भैरवस्तस्य कालराजः कपालभृत् ।
अहो बत भृशं तीव्रा भीमा भैरवयातना ॥
काश्यां कृतेन पापेन यद्दुःखं समवाप्यते ।

अन्तकोऽपि न तद्दुःखं तादृशं चार्पितुं क्षमः । इत्यादि ।

तथा—अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यं श्रुत्वैव न कस्यापि काश्यां पापोद्यमो भवेत् ॥

इत्युपक्रम्य क्रमेलकोपाख्यानमुक्तं तस्यायमाशयः—'धर्मात्मा द्विजभक्तश्च दयावाननसूयकः' इत्याद्युक्तविशेषणविशिष्टस्य नित्यनैमित्तिककर्मानुष्ठाननिरतस्य धार्मिकस्यापि क्रमेलकस्य काश्यां गृहागतमुमुक्षुभिक्षाकब्राह्मणभर्त्सनताडनादितिरस्कारमात्रेण कालान्तरे मणिकर्ण्यामधौदकमृतस्याप्यतिदुःसहा भैरवयातनाऽभूत् । तस्मात्काश्यामल्पमपि पातकं न कार्यमिति । तथा—धर्मेश्वरसमीपस्थस्यानेकपापकारिणः काशीमृतस्यापि हिरण्यगर्भनाम्नः पाशुपतस्य त्रयस्त्रिंशद्वर्षसहस्रमिता कालभैरवयातनाऽभूदिति ब्रह्मवैवर्ते पञ्चविंशेऽध्याये कथा । तथा तत्रैव—

सूत काश्यामृणं कृत्वा काश्यामेव म्रियेत यः ।
का गतिस्तस्य कथय ऋणहा नैव मुच्यते ॥

सूतः—धार्मिकस्त्वृणभीतो यो म्रियेतात्र प्रमादतः ।
स सद्यो मुक्तिमाप्नोति ऋणी तस्य च शंकरः ॥
ऋणं बहुगुणं तस्मै ददाति भगवान्हरः ।
स्वयमङ्गीकृत्य ऋणं तारकं प्रदिशत्यलम् ॥
कुटुम्बभोगकीर्त्यर्थमृणं कृत्वा विमुह्यति ।
स पापात्माऽशुद्धतनुर्यातनाः प्रतिपद्यते ॥
अतः सर्वैरुपायैर्हि ऋणशुद्धिः समीहिता ।

तथा—वक्ता परुषवाक्यानां मन्तव्यो नरकागतः ॥
संदेहो न मुनिश्रेष्ठाः पुनर्यास्यति यातनाम् ।
परापवादी पापात्मा सर्वपापकृदध्रुवः ॥
पच्यते नरके सोऽपि महापातकिभिः सह ।

तथा—धनाद्यर्थं तु यो मूढो मिथ्यावादं करोति च ॥

तस्याऽऽशु सुकृतं याति नरकं च प्रपद्यते।
अनृतं न वदेत्प्राज्ञः प्राणैः कण्ठगतैरपि॥
कौतुकेनापि हि महान्स्वैरहास्येष्वपि क्वचित्।
अनृतं सर्वपापानां पात्रं तस्मिन्हि संचिते॥
पापराशिस्तु सुमहाञ्जायते वर्धतेऽपि च।
बहुनाऽत्र किमुक्तेन पापराशिरनन्तकः॥
दुःखप्रदोऽतो भवति नानृतात्पातकं परम्।
पुराणेषु पृथग्गीतं नानाख्यानैरनेकशः॥
अनृतं नैव वक्तव्यमनृतात्सुकृतं क्षरेत्।

मात्स्ये—कामः क्रोधोऽतिलोभश्च दम्भस्तम्भोऽतिमत्सरः॥
निद्रा तन्द्रा तथाऽऽलस्यं पैशुन्यमिति ते दश।
अविमुक्तस्थिता विघ्नाः शक्रेण विहिताः स्वयम्॥
विनायकोपसर्गश्च सततं मूर्ध्नि तिष्ठति।
पुण्यमेतद्भवेत्सर्वं भक्तानामनुकम्पया॥

स्तम्भो गर्वः। तथा काश्यां भिक्षार्थं पर्यटता व्यासेन भिक्षायामलब्धायाम्—

माऽस्तु त्रिपुरुषी विद्या माऽस्तु त्रिपुरुषं धनम्।
माऽस्तु त्रिपुरुषं सख्यं व्यासो वाराणसीं शपत्॥

इत्येवं शापे दत्ते विश्वेश्वरेण भवान्या भिक्षां दापयित्वोक्तम्—

इह क्षेत्रे न वस्तव्यं क्रोधनस्त्वं महामुने।

तथा—द्वैपायन बहिर्याहि नात्र स्थेयं मनागपि॥
रागद्वेषात्तचित्तानां निवासाय न मे पुरी।
अवैमि त्वां महाबुद्धे मदेकशरणं मुने॥
अतो ब्रवीमि मत्क्षेत्रान्नातिदूरे व्यवस्थितः।
मामाराधय निष्कामः सततं मत्परायणः॥
ततो रागादिनिर्मुक्तो मत्पुरे स्थास्यसि ध्रुवम्।
एवमुक्तो भगवता व्यासोऽन्तेवासिभिः सह।
पालयञ्शंकरस्याऽऽज्ञां बहिरेवावतिष्ठते।
तस्माद्रागादिहीनैः सा सेव्या मुख्याधिकारिभिः॥ इति।

पाद्मे जनकं प्रति याज्ञवल्क्यः—

एवं यदा महेशेन प्रजासंरक्षणार्थिना।
स्वयंभुवा नोदितेन नियमः परिकल्पितः॥
तदैव राजन्सर्वेषां मुनीनामपि बुद्धिषु।
रागद्वेषभयोद्वेगप्रमादालस्यकामिताः॥
प्रादुरासन्समात्सर्यास्तत्त्वज्ञानविरोधिनः।
ततः केचिद्भयोद्विग्ना वृथाभीताश्च केचन॥
तत्यजुः काशिकां विप्राः केचिद्द्रोहमथाऽऽचरन्।
अन्योन्यमात्सर्ययुताः कलिप्रोत्सुकबुद्धयः॥
बभवुर्मुनयः केचित्केचित्कामपरा भवन्।
इत्थं व्याकुलिताः सर्वे संहृत्योचुः परस्परम्॥
त्यजामः काशिकां शीघ्रं विघ्ना नः संभवन्ति हि।
यद्यपीह सुलभ्यं तन्निर्वाणं मुनिसत्तमाः॥
तथाऽपि रागद्वेषादिर्बाधते मानसानि नः॥
रागादिषु च जातेषु पापमेव समेधते।
अस्मिन्क्षेत्रे कृतं पापं स्वल्पं चापि महद्भवेत्॥
तस्मादन्यत्र कर्माणि करिष्यामो यथाविधि।
अन्तःकरणशुद्ध्यर्थं ततस्तत्त्वं स्फुरिष्यति॥
विचार्यैवं गताः सर्वे मुनयः संशितव्रताः।
वाराणसीं विहायैव नानातीर्थानि संश्रिताः॥

पाद्मे—काश्यां यो निजधर्मेण मुमुक्षुस्तिष्ठति द्विजः।
अनायासाविलम्बाभ्यां स एव लभते फलम्॥

ब्रह्मवैवर्ते—

काश्यां स्थित्वा हीन्द्रियाणां व्ययं नो
कुर्याद्यत्नात्सत्कृतं रक्षणीयम्॥
अन्तर्यामी प्रेरकः कारणानां
सोऽयं द्विष्यादिन्द्रियैर्नाशितैर्हि॥
अत्र स्वेच्छाचारदोषप्रनष्टा
लोकाः कामाद्भ्रान्तिभाजो भवन्ति॥
तस्मात्सद्भिर्नात्र पन्था विरुद्धः

सेव्यः सेव्यो वेदमूलो हि धर्मः ॥

तथा—ये स्युः काश्यां महाभागाः सत्यधर्मपरायणाः ।
दानैर्व्रतैश्च नियमैः स्वाध्यायैश्चैव संयुताः ॥
तेषां कलिर्न प्रभवेद्विद्यमानोऽपि सर्वतः ।

तथा—पुत्रो भ्राता पिता वाऽपि यः काश्यां पापमाचरेत् ॥
त्याज्य एव स पापात्मा भवेत्संसर्गजाद्भयात् ।

तथा—गुरुद्रोहपरो यस्तु विप्रद्रोहरतस्तथा ॥
न तस्य काशी सिध्येत बहुभिः साधनैर्युता ।

तथा—वाराणस्यां वसेद्यस्तु वृत्तिं यायावरीं चरेत् ॥
अन्यन्न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ।

तथा—काश्यां वसेद्धर्मपरो महात्मा
न वित्तकामादिपरः कदाचित् ।
वित्तं पुरा दैवकृतं तु याव-
त्तावद्भवत्येव न चात्र वादः ।

तथा—अहर्निशं वित्तचिन्तातुराणां
कलत्रपुत्राप्तगृहादिभाजाम् ।
विजृम्भते न परं काशिसौख्यं
यदर्थमास्ते सहरिर्गिरीशः ।

सहरिर्हरिसहितः ॥

तथा—गङ्गास्नानं विश्वनाथानुवृत्ति-
स्तत्तत्तीर्थस्नानदेवार्चनानि ॥
दानं शक्त्या सत्कथा सत्प्रसङ्गः
पापत्रासः कीर्तनं शंभुनाम्नाम् ॥
कुर्यादेवं क्षेत्रमध्यस्थितो ना
नो चेत्तीव्रा यातना भैरवी स्यात् ॥
कृते काश्यां ज्ञाननिष्ठा वसन्ति
त्रेतायां ते यज्ञदानप्रधानाः ॥
पूजादानं द्वापरे तु प्रकुर्वन्
तिष्ये दानं केवलं मोक्षहेतुः ॥

तथा—कलौ न काशीवसतिः स्थिरा भवे-
त्पापात्मनां दण्डपाणिप्रभावात् ।

ममाऽऽज्ञया दण्डपाणिः शुभात्मा
क्षुद्रासयिष्यत्यथ पापकर्तॄन् ॥

तथा—काशीस्थाश्च जनाः सर्वे शिवविष्णुस्वरूपिणः ।
तस्मात्काशीजनान्नैव दूषयेदपि पापिनः ॥
न धर्मः काशिजनतासेवनात्सुभगः परः ।
न पापं काशिलोकानामपराधादतः परम् ॥

तथा—ब्राह्मणक्षत्रियविशां शूद्राणां च सदाशिव ।
अपराधाः पृथक्प्रोक्ताः सर्वेषां च विशेषतः ॥
प्रतिग्रहो ब्राह्मणानामनाचारस्तथा परः ।
तथाऽस्वधर्माचरणं शूद्रान्नं शूद्रसेवनम् ।
क्षत्रियाणां प्रजाद्रोह ऋणाशुद्धिर्न पापभीः ॥
यथेष्टं व्यवसायादि मानकूटं तथा विशाम् ।
अपराधा भवन्त्येवं शूद्राणां शृणु शंकर ॥
द्विजासेवा वेदवादः प्रतिग्रहरुचिस्तथा ।
मद्यमांसादिव्यसनं मायया लोकवञ्चनम् ॥
पूज्यबुद्धिरसेवा च वर्णानां वेषधारणम् ।
ब्राह्मणाद्यैः काशिकायामेतद्वर्ज्यं पृथक्पृथक् ॥

तथा—निन्दकानां सुखं धर्मस्तपः सत्यं दयाऽभयम् ।
तीव्रव्रततपोदानविद्यादि च निरर्थकम् ॥

काश्यां वसतां गङ्गोदकेन शौचाद्यशुचिकर्मकरणेऽपि न दोषः—
तत्क्षेत्रमासाद्य ममाविमुक्तं
गङ्गोदकोपात्तसमस्तकार्यैः ॥

इति सनत्कुमारसंहितायाम् । काशीखण्डे च—
सर्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम् ।
भूमिष्ठा अपि ते मर्त्या अमर्त्या एव वै हरे ॥

समस्तपदे संकोचे प्रमाणाभावात् । यदा तु न करोति तदा सम्यक्संकल्पजकामस्यापि धर्ममूलत्वात्फलातिशयः । तथा सनत्कुमारसंहितायाम्—

वाराणसीं समासाद्य ये कुर्वन्त्यर्थसंचयम् ।
तेषां नास्त्येव संसिद्धिर्या काश्यां प्राप्यते शिवात् ॥

व्यास उवाच—

गृहस्थानां मुमुक्षूणां भक्तानां काशिवासिनाम् ।
विनाऽर्थसंचयं ब्रह्मन्नत्र वासः कथं भवेत् ॥

सनत्कुमार उवाच—

एकाकिनो गृहस्था ये सपत्नीकास्तथाऽपरे ।
कुटुम्बभरणा येऽन्ये कृत्वा ते संचयं बहिः ॥
मध्ये वसेयुर्निर्लेपास्त्यक्त्वा द्यंशं धनं द्विजे ।
एकाहमात्रमप्यन्तः संचिन्वानो न दुष्यति ॥
एकाकी योऽगृही भक्तो भिक्षां सोऽर्हत्यसंशयम् ।
किं पुनर्ये कुटुम्बार्थे सर्वदानेऽपि संचयाः(?) ॥
लब्ध्वाऽन्तर्द्रविणं त्यद्याच्चतुर्भागं त्यजेत्परम् ।
तेषां तत्रोज्झितासूनां सिद्धिः सा परमा ध्रुवा ॥
लब्ध्वा च मध्ये द्विगुणं दत्त्वाऽपि पुनरुद्धृताः ।
तेषां जन्मसहस्रेऽपि दोषो वज्री भविष्यति ॥
प्रतिगृह्य बहिः कोटिमुग्रादपि महामुने ।
कृतान्तरालयः काश्यां भुञ्जानोऽप्यनघः कृती ॥
वाराणसीं समासाद्य यो वा को वाऽपि वाऽऽश्रमी ।
पक्वान्नं परमादद्यान्नैकाहार्थादथापि वा ॥
साक्षाद्योगी स विज्ञेयः काशीविज्ञानतत्परः ।

काशीखण्डे—

पापमेव हि कर्तव्यं मतिरस्ति यदीदृशी ।
सुखेनान्यत्र कर्तव्यं मही ह्यस्ति महीयसी ॥
अपि कामातुरो जन्तुरेकां रक्षति मातरम् ।
अपि पापकृता काशी रक्ष्या मोक्षार्थिनैकिका ।

तथा—त्यक्त्वा वैश्वेश्वरीं भक्तिं येऽन्यदेवपरायणाः ॥
सर्वथा तैर्न वस्तव्या राजधानी पिनाकिनः ।
शिवनिन्दापरा ये च वेदनिन्दापराश्च ये ॥
वेदाचारप्रतीपा ये सेव्या वाराणसी न तैः ।
परद्रोहरता ये च परेर्ष्याकारिणश्च ये ॥
परोपतापिनो ये वै तेषां काशी न सिद्धये ।

कौर्मे—किंतु विघ्ना भविष्यन्ति काश्यां निवसतां सताम् ॥
ततो नैवाऽऽचरेत्पापं कायेन मनसा गिरा ।

लैङ्गे—मोक्षप्रदायकं लिङ्गं त्यक्त्वा येऽर्थस्य लिप्सया ॥
राजप्रतिग्रहासक्ताः कृतकान्पूजयन्ति ये ।
ते रुद्रपाशनिर्दग्धाः पतन्ति नरके ध्रुवम् ॥
ये पुनः सिद्धलिङ्गानां प्रासादानां स्वशक्तितः ।
कुर्वन्ति पूजासत्कारं ते मुक्ता नात्र संशयः ।

तथा—स्त्रीशूद्रौ नाभिभाषेत शूद्रान्नं वर्जयेत्सदा ॥
शूद्रान्नरसपुष्टस्य निष्कृतिस्तस्य कीदृशी ।
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥
वैश्यान्नमन्नमित्याहुः शूद्रान्नं रुधिरं स्मृतम् ।
तस्मादत्र सदा देवि यदीच्छेन्मामकं पदम् ॥
श्मशानवासी धर्मात्मा यथालब्धेन वर्तयेत् ।
लभेत रुद्रसायुज्यं सदा रुद्रमनुस्मरन् ॥
षण्मासाल्लभते ज्ञानमस्मिन्क्षेत्रे विशेषतः ।

काशीखण्डे—

अत्रोषित्वाऽपीशभक्तान्विरुणद्धि तपः कुधीः ॥
पुर्यै द्रुह्यति वा मूढस्तस्यान्यत्रात्र नो गतिः ।

तथा—मनसाऽपि हि विश्वेशं विद्विषन्तीह येऽधमाः ।
अध्यासतेऽन्धतामिस्रं मृतास्तेऽन्यत्र संततम् ॥
शिवनिन्दापरा ये च ये पाशुपतनिन्दकाः ।
विद्विषो मम ते ज्ञेयाः पतन्ते नरकेऽशुचौ ॥
अष्टाविंशतिकोटीषु नरकेषु क्रमेण हि ।
कल्पं कल्पं वसेयुस्ते ये विश्वेश्वरनिन्दकाः ॥

मम विष्णोः ।

तथा—यैश्च काशीस्थितो जन्तुरल्पकोऽपि विरोधितः ।
तैर्वै विश्वंभरा सर्वा मया सह विरोधिता ॥

तथा—निवसन्ति मम क्षेत्रे मम भक्तिं प्रकुर्वते ।
मम लिङ्गधरा ये तु तानेवोपादिशाम्यहम् ॥

निवसन्ति मम क्षेत्रे मम भक्तिं न कुर्वते।
मम लिङ्गधरा ये नो न तानुपदिशाम्यहम् ॥

तथा—सेव्योत्तरवहा नित्यं लिङ्गमर्च्यं प्रयत्नतः।
दमो दानं दया नित्यं कर्तव्यं मुक्तिकाङ्क्षिभिः ॥
इदमेव रहस्यं च कथितं क्षेत्रवासिनाम्।
मतिः परहिते कार्या वाच्यं नोद्वेगकृद्वचः ॥
मनसाऽपि न कर्तव्यमेनोऽत्र विजिगीषुणा।
अत्रत्यमक्षयं यस्मात्सुकृतं सुकृतेतरत् ॥

तथा—मरणं नाभिकाङ्क्षेत काङ्क्ष्यो मोक्षोऽपि नो पुनः।
शरीरपोषणोपायः कर्तव्यः सुधियाऽत्र हि ॥
शरीरसौष्ठवं काङ्क्ष्यं व्रतस्नानादिसिद्धये।
आयुर्वृद्धत्र वै चिन्त्यं महाबलसमृद्धये ॥

तथा—कृच्छ्रचान्द्रायणादीनि कर्तव्यानि प्रयत्नतः।
यथेन्द्रियविकाराश्च न बाधन्तेऽत्र कर्हिचित् ॥
यदीन्द्रियाणि कुर्वन्ति विक्रियामिह देहिनाम्।
तदाऽत्र वाससंसिद्धिर्विघ्नेभ्यो नैव लभ्यते ॥

तथा—यथाशक्ति च देयानि दानान्यत्र सुगुप्तवत्।
अन्यान्यपि च देयानि विघ्नान्परिजिहीर्षुणा ॥
परोपकरणं चात्र कर्तव्यं सुधिया सदा।
पर्वस्वपि विशेषेण स्नानदानादिकाः क्रियाः ॥
विशेषपूजा कर्तव्या सुमहोत्सवपूर्वकम्।
कार्यास्तथाऽधिका यात्राः समर्च्याः क्षेत्रदेवताः ॥
अत्र मर्म न वक्तव्यं सुधिया कस्यचित्क्वचित्।
परदारपरद्रव्यपरापकरणं त्यजेत् ॥
परापवादो नो वाच्यः परेर्ष्यां न च कारयेत्।
असत्यं नैव वक्तव्यं प्राणैः कण्ठगतैरपि ॥
अत्रत्यजन्तुरक्षार्थमसत्यमपि भाषयेत्।
येन केन प्रकारेण शुभेनाप्यशुभेन वा।
अत्रत्यः प्राणिमात्रोऽपि रक्षणीयः प्रयत्नतः ॥

एकस्मिन्रक्षिते जन्तावत्र काश्यां प्रयत्नतः ।
त्रैलोक्यरक्षणात्पुण्यं यत्स्यात्तत्स्यान्न संशयः ॥
ये वसन्ति सदा काश्यां क्षेत्रसंन्यासकारिणः ।
त एव रुद्रा मन्तव्या जीवन्मुक्ता न संशयः ॥
ते पूज्यास्ते नमस्कार्यास्ते संतोष्याः प्रयत्नतः ।
तेषु वै परितुष्टेषु तुष्येद्विश्वेश्वरः स्वयम् ॥

तथा—प्रसरस्त्विन्द्रियाणां च निवार्योऽत्र निवासिभिः ।
मनसोऽपि हि चाञ्चल्यमिह वार्यं प्रयत्नतः ॥

तथा—अतः काश्यां प्रयत्नेन स्नानं दानं तपो जपः ।
व्रतं पुराणश्रवणं स्मृत्युक्ताध्वनिषेवणम् ॥
प्रतिक्षणं प्रतिदिनं विश्वेशपदचिन्तनम् ।
लिङ्गार्चनं त्रिकालं च लिङ्गस्यापि प्रतिष्ठितिः ॥
साधुभिः सह संवासो जल्पः शिवशिवेति च ।
अतिथेश्चापि सत्कारो मैत्री तीर्थनिवासिभिः ॥
आस्तिक्यबुद्धिर्विनयो मानामानसमानधीः ।
अकामिता त्वनौद्धत्यमरागित्वमहिंसनम् ॥
अप्रतिग्रहवृत्तिश्च मतिश्चानुग्रहात्मिका ।
अदम्भिता त्वमात्सर्यमप्रार्थितधनागमः ॥
अलोभित्वमनालस्यमपारुष्यमदीनता ।
इत्यादिसम्यग्वृत्तिश्च कर्तव्या क्षेत्रवासिना ॥

इति व्यासोपदेश इत्यलं बहुना । इह स्मृत्याद्यविहितास्तदनिषिद्धा एव च केचिद्विधीयन्ते निषिध्यन्ते च । यथा विश्वेश्वरपूजनादयो गङ्गायामस्नात्वा भोजनादयश्च । केचित्तु स्मृतितः साधारण्येन विहिता निषिद्धाश्च पुनस्तीर्थमात्रे विहिता निषिद्धाश्च पुनरपि काश्यां विधीयन्ते निषिध्यन्ते च यथा सत्यवचनादयो द्वेषादयश्च । तत्राऽऽद्यातिक्रमे विशेषविहितमेवान्तर्गृहयात्रादिप्रायश्चित्तं कामाकामसकृदसकृच्छक्त्यशक्त्यादितारतम्येन 'विहितं यदकामानां कामात्तद्द्विगुणं भवेत्' इत्यादिस्मृत्युक्तरीत्यैकद्विगुणादि ज्ञेयम् । उत्तरेषां तु यदि तीर्थमात्रेऽतिक्रमस्तदा विधिनिषेधपुनःश्रवणबलाद्देशविशेषेण प्रत्यवायाधिक्यावगतेः 'एनांसि गुरुणि गुरूणि लघुनि लघूनि' इति गौतमवच-

नात्प्रायश्चित्तगौरवेण भाव्यम् । तच्चैवम् । यदि तीर्थमात्रं तद्विशेषं प्रकृत्य किंचिद्विशेषतो विहितं प्रायश्चित्तं तदा तच्च स्मार्तं चेति समुच्चयः । तत्रापि स्मार्तमादौ पश्चाद्विशेषविहितमागन्तूनामन्ते निवेश न्यायात् ।

यत्र तु विशेषतो न श्रुतं तत्र स्मार्तमेव तीर्थतारतम्येन सपादं सा द्विगुणं वेत्यादि योज्यम् । काश्यां तु पुनर्विधिनिषेधश्रवणात्तीर्थान्त तोऽपि पातकगौरवावगमात्ततोऽपि प्रायश्चित्तगौरवम् । तच्चेत्थ कामाकामादिभेदेन स्मार्तं विशेषश्रुतं चान्तर्गृहादि पूर्ववत्क द्वयमप्येकद्विगुणादिसमुच्चितं कार्यमिति । तद्यथा नानृतं वदे दर्शपूर्णमासयोः पुनर्निषेधाच्छ्रौतस्मार्तप्रायश्चित्तसमुच्चयस्तथाऽत्रापि इयांस्तु विशेषः । तत्र नैमित्तिकाङ्गरूपं श्रौतं प्रायश्चित्तं प्रयोगमध्य एवानुष्ठेयं स्मार्तं तु प्रयोगं परिसमाप्य पश्चात् । अन्यथा प्रयोगप्राशु वभङ्गापत्तेः । इह तु बाधकाभावादुक्तन्यायाच्च स्मार्तमादौ पश्चाद्वि विहितमिति । अयं चान्यो विशेषः । तत्रानृतवदनेन दुरितापूर्व जन्यत एकं क्रतोरुपघातकमपरं पुंसो नरकजनजनकं स्मार्तनिषेधस्य पार्थत्वात्प्राकरणिकनिषेधेन च क्रत्वर्थत्वात् । तथा चैकैकप्रायश्चित्त रणे क्रतोः पुंसो वा साद्गुण्येऽप्यन्यतरस्य वैगुण्यमेवेत्युभयानुग्रहार्थ र्धद्वयनाशलक्षणकार्यभेद एव प्रायश्चित्तसमुच्चयः । इह तु कस्यचि करणाभावान्निषेधद्वयस्यापि पुमर्थत्वादपूर्वभेदे मानाभावादुर्वक दुरितापूर्वमुत्पद्यते साक्ष्येऽनृतवत् । तथा चैकैकप्रायश्चित्तेन गुरुत तानाशात्पुंसो वैगुण्यमेवेति तदनुग्रहायैकापूर्वनाशाख्यकार्यैक्येऽपि स च्चयः । काश्याः प्रकरणं भविष्यतीति चेत् । न । द्रव्यस्य प्रकरणा गात् । वासस्येत्यपि न । तत्संदंशाद्यभावात् । अनङ्गीकृतवास काश्यधिकरणकपापे दुरितगौरवाभावापत्तेः । अत्रत्यपापेन वास वैगुण्ये 'काश्यां कृतस्य पापस्य भोगो रुद्रपिशाचता' इत्यादि तद्दुष्टफलकीर्तनानुपपत्तेश्च । तस्माद्दानादिष्विव देशकृतविशेषमेक त्रापूर्वम् । नन्वेवं कार्यैक्ये प्रायश्चित्तयोर्विकल्प एव स्यात् । नैव स्मार्तमात्रेण वाऽल्पव्ययायासतया स्मार्तादप्यूनेन वैशेषिकेण वा गु तरदुरितनिराकरणासंभवादतुल्यकल्पत्वाच्च । एतेन विशेषोपदिष्टान्त हादिमत्याम्नायेन स्मार्तमेव सर्वमीपद्वा कार्यमिति परास्तम् ।

प्रत्याम्नायतायां प्रमाणाभावाच्च । यत्तु वैशेषिकमात्रादेवात्रत्यपापनाशो विशेषविधिवशादिति तदपि न । सकृत्कृतात्तस्माद्गुरुतरदुरितानाशात् । 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्' [ जै० । १ । २ । १ । १७ ] इति न्यायात् । यत्र हि वैशेषिकं सातिशयं तत्र भवतु तन्मात्रान्नाशः ।

यथा—द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमाचरेत् ।
यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रतम् ।

इत्यादौ । इह तु न तथा । किंचान्यत्र कृते ब्रह्महननादौ द्वादशाब्दादि, अत्र तु कृते सकृदन्तर्गृहयात्रा पञ्चक्रोशयात्रा वेति सर्वे पापशूराः काशीमाश्रित्य यथेच्छं पापानि कुर्युः । यथाऽत्र पुण्यं कृतमक्षयं स्यात्तथाऽत्र पापं कृतमक्षयं हीत्यादिप्रायश्चित्तगौरवार्थार्थवादानुपपत्तिश्च । आवृत्तिकल्पनायां तु कियती सेति मानाभावादनध्यवसायः । विशेषविधिस्त्वस्मदुक्तमार्गेऽप्युपपन्नः । यत्तु मण्डपाख्यानादौ सकृत्पञ्चक्रोशयात्रामात्रेणानेकमहापातकनाशप्रतिपादनं तदर्थवादमात्रमिति भव...पङ्क्तीकार्यम् । असंकल्पितयाऽसीसंगमादेव कृतयाऽपरिपूर्णया तयाऽल्प...पनाशस्याप्यसंभवात् । गुरुतरदुरितनाशेऽपि वैशेषिकस्यैव शक्त्यति...यः कल्प्यतां शब्दमात्रप्रमाणकत्वात् । नास्ति शब्दस्यातिभार इति न्या...दिति चेत् । सत्यम् । कल्प्यत एव । अत एव तीर्थनिषेधात्काशीनिषेधाच्च ...दुरिते गुरुता सा वैशेषिकेणैव नश्यति न तु तत्रापरं प्रायश्चित्तम् । ...:प्रत्यवायनिवृत्त्यैवाऽऽनुषङ्गिकाल्पीयःप्रत्यवायनिवृत्तेः सर्वत्राभ्युप...त्सुरापाने तदाघ्राणादिवत् । किंतु स्मार्तनिषेधकृतगौरवनिवर्तको वैशेषिकस्यातिशयो भूयोल्पभावस्य विपरीतत्वात् । यत्राप्यति...दृष्टः स स्वार्थानतिलङ्घनादिति न्यायादुक्तबाधकाच्चेत्यलम् । ...द्धं स्मृतिनिषिद्धस्य काश्यां पुनर्निषेधे तदनुष्ठाने स्मार्तवैशेषि...यश्चित्तयोः समुच्चय इति ।

इति श्रीनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे
काशीवासिधर्माः ।

...थ क्षेत्रसंन्यासविधिरुपपुराणे—

माघशुक्लचतुर्दश्यामुपोष्येह पुरोऽहनि ।
ब्राह्मणान्भोजयेत्पश्चादेकं वाऽपि सदक्षिणम् ॥

गत्वा मौनेन च स्नानं ज्ञानवाप्यां समाचरेत् ।
शुक्लाम्बरधरो भूत्वा नत्वा ढुण्ढिविनायकम् ॥
दण्डपाणिं ततो नत्वा दृष्ट्वा विश्वेश्वरं च माम् ।
श्रीमुक्तिमण्डपं गत्वा कुर्यात्संकल्पमात्मना ॥
प्राणायामत्रयं कृत्वा जपेत्पञ्चाक्षरं मनुम् ।
करिष्ये क्षेत्रसंन्यासमिति संचिन्तयेद्बुधः ॥
पञ्चक्रोशाद्बहिः क्षेत्रान्न गच्छाम्यम्बिकापते ।
इमं मन्त्रं पठेदुच्चैर्द्विस्त्रिः पञ्च च सप्त वा ॥
नमस्कृत्य महादेवं दण्डपाणिं ततो व्रजेत् ।
साक्षीकृत्य महात्मानं दण्डपाणिं विनायकम् ॥
श्रीकालभैरवं चैव साक्षी कुर्यात्प्रयत्नतः ।
एवं कृत्वा विधानेन पश्चात्कुर्यात्तु भोजनम् ॥
पूर्वसंचितवित्तादि दद्यात्सर्वं ममाऽऽज्ञया ।
य एवं कुरुते न्यासं क्षेत्रे देवि विधानतः ॥
सर्वपापविनिर्मुक्तो मुच्यते नात्र संशयः ।

माघेत्यादि । त्रयोदश्यामुपोष्य चतुर्दश्यां ब्राह्मणभोजनज्ञानवाप स्नानादि क्रमेण कुर्यादित्यर्थः । अत्र गृहस्थानामप्यधिकारः ।

ततःप्रभृति चार्वङ्गि येऽपि क्षेत्रनिवासिनः ।
गृहिणो लिङ्गिनो वाऽपि मद्भक्ता मत्परायणाः ॥
मत्प्रसादाद्गमिष्यन्ति मोक्षं परमदुर्लभम् ।

इति शिवपुराणात् । अत्र च ब्राह्मणस्यैवाधिकारः सर्वस्वदा विधानात् । क्षत्रियादीनां च तद्दाने सति प्रतिग्रहानधिकारादजीव पत्तेः । अत एव कौर्मे—

वसेद्वा मरणाद्विप्रो वाराणस्यां समाहितः ।

इति विप्रग्रहणं कृतम् । अन्ये तु क्षेत्रसंन्यासाङ्गभूतसर्वस्वद कृते क्षत्रियादिभिर्धर्मतो निर्वाहमात्रोपयोगिव्यवसायादिकरणेऽ दोषस्तेन सर्वेषामधिकारः । विप्रग्रहणं तु तत्प्राप्त्यर्थं न त्वित त्यर्थं त्रिदोषपरिसंख्यापातादित्याहुः । अयं च क्षेत्रसंन्यासो

क्षेत्रविषयो न तु काशीविषयः। 'मध्ये प्रदक्षिणं कुर्यादसीवरणयोः ...ी' इति क्षेत्रसंन्यासिपञ्चक्रोशयात्रायामुक्तेः।

इति त्रिस्थलीसेतौ क्षेत्रसंन्यासविधिः।

---

## अथ नानाकाम्यकर्माणि।

---

ब्राह्मे मात्स्ये च काशीं प्रकृत्य—

तत्र दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियम्।
प्राप्नोति धूपदानेन स्थानं रुद्रनिषेवितम्॥

तथा—अर्चयेद्यश्च मां देवि अविमुक्ते वरानने।
तस्य धर्मं प्रवक्ष्यामि यावदाप्नोति मानवः॥
दशसौवर्णिकं पुष्पं योऽविमुक्ते प्रयच्छति।
अग्निहोत्रफलं धूपे गन्धदाने च तच्छृणु॥
भूमिदानेन तत्तुल्यं गन्धदानफलं स्मृतम्।
संमार्जने पञ्चशतं सहस्रमनुलेपने॥
माल्ये शतसहस्रं तु अनन्तं गीतवादने।

दशेत्यादि। दशसुवर्णदानजन्यं फलमेकपुष्पसमर्पणाद्भवति। धूपेऽग्निहोत्रजन्यम्। गन्धे भूमिदानजन्यम्। संमार्जने गोपञ्चशतीदानजन्यम्। अनुलेपने सहस्रगोदानजम्। मालायां गोलक्षदानजम्। गीते वाद्ये चानन्तगोदानजं फलं भवतीत्यर्थः। लैङ्गे काशीप्रकरणे—

दशानामश्वमेधानां यज्ञानां यत्फलं स्मृतम्।
तदवाप्नोति धर्मात्मा स्नात्वा तत्र वरानने॥
स्वल्पमप्यत्र यो दद्याद्ब्राह्मणे वेदपारगे।
शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते॥
उपवासं तु यः कृत्वा विप्रान्संतर्पयेद्द्विजः।
स सौत्रामणियज्ञस्य फलं प्राप्नोति निश्चितम्॥

विप्रानिति बहुवचनात्त्र्यधिकाऽशक्त्या भोजयेत्। शक्तिपदोपेतवाक्यान्तरसमानार्थत्वादपूर्वान्तरकल्पनानापत्तेश्च। कश्चित्तु कपिञ्जलन्यायेन त्रीनित्याह।

तथा—एकाहारस्तु यस्तिष्ठेन्मासं तत्र वरानने।
यावज्जीवकृतं पापं मासेनैकेन नश्यति॥

एकाहार एकान्नाहारः ।

अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः ।
प्रविशन्ति मुखं ते मां न पुनर्भाविनो नराः ॥
कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥

तथा—अविमुक्ते महादेवमर्चयन्ति स्तुवन्ति ये ।
सर्वपापविनिर्मुक्तास्ते तिष्ठन्त्यजरामराः ॥
अविमुक्तं समासाद्य लिङ्गमर्चयते तु यः ।
कल्पकोटिशतैश्चापि न तस्यास्ति पुनर्भवः ॥
अमरो ह्यजरश्चैव तिष्ठेच्छांभवसंनिधौ ।
ये च ध्यानं समासाद्य युक्तात्मानः समाहिताः ॥
संनियम्येन्द्रियग्रामं जपन्ति शतरुद्रियम् ।
अविमुक्ते स्थिता नित्यं कृतार्थास्ते न संशयः ॥

तथा—एकाहमुपवासं यः करिष्यति यशस्विनि ।
फलं वर्षशतस्येह लभते मत्परायणः ॥

वर्षशतोपवासस्येत्यर्थः ।

मात्स्ये—सुवर्णशृङ्गीं रौप्यखुरीं चैलाढ्यां च पयस्विनीम् ।
वाराणस्यां तु यो दद्यादाकर्णायतलोचने ॥
गां दत्त्वा तु वरारोहे ब्राह्मणे वेदपारगे ।
आसप्तमं कुलं तेन पावितं नात्र संशयः ॥
यो दद्याद्ब्राह्मणे किंचित्तस्मिन्क्षेत्रे वरानने ।
कनकं रजतं वस्त्रमन्नाद्यं बहुविस्तरम् ॥
अक्षयं चाव्ययं चैव स्यात्तत्तस्य सुलोचने ।

तथा—अन्यत्र ब्राह्मणानां तु कोटिं संभोज्य यत्फलम् ॥
वाराणस्यां सुदैकेन भोजितेन तदाप्यते ।

तथा—वृषभं तरुणं सौम्यं चतुर्वत्सतरीयुतम् ॥
यश्चाङ्कयित्वा मोचयति स याति परमां गतिम् ।
पितृभिः सहितो मोक्षं गच्छत्यत्र न संशयः ॥

अङ्कनं दक्षिणवामपार्श्वयोश्चक्रत्रिशूलाभ्याम् । अत्र वत्सतरी
युतत्वाङ्कनरूपसमानधर्मोक्ता वृषोत्सर्गत्वेन च तदितिकर्तव्यता प्रा

तथा—किमत्र बहुनोक्तेन यद्दानं क्रियते नरैः ।
धर्मकामार्थमुद्दिश्य तदनन्तफलं भवेत् ॥
स्वर्गापवर्गयोर्हेतुस्तद्धि तीर्थतमं भुवि ।
स्नानं जप्यं तथा होममनन्तफलसाधनम् ॥
गत्वा वाराणसीतीर्थे यस्तु चान्द्रायणं चरेत् ।
यस्तत्र पञ्चतां याति मोक्षं याति न संशयः ॥

तथा—मनुष्यैः पिण्डदानादि कार्यमत्राऽऽगतैः सदा ।
पिण्डदानं च तत्रैव सुपुत्रैः कार्यमादरात् ॥
सुपुत्रास्ते पितॄणां तु भवन्ति सुखदायकाः ।

तीर्थे पिण्डदानस्य प्रधानत्वात्तदनुरोधेन श्राद्धादि सर्वमङ्गं कार्यम् । 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इतिन्यायात् । श्राद्धासंभवे तु पिण्डदानमात्रमपि कार्यमित्युक्तं प्राक् ।

तथा—अन्यत्रापि प्रमीतानां श्राद्धं श्रद्धासमेधितम् ।
अत्र दीयेत तेन स्यात्तेषां कैलाससंगमः ॥

तथा—सिद्धलिङ्गाश्रयं भग्नं दृष्ट्वा राज्ञे निवेदयेत् ।
स्वभूतं परभूतं ये संस्कुर्वन्ति यथा तथा ॥
ते भोगानां नराः पात्रमन्ते मोगस्य भागिनः ।

स्वकृतं परकृतं वा देवालयादि त्रुटितं राज्ञे निवेद्य संस्कर्तव्यमित्यर्थः ।

तथा—खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः ।
ते रुद्रलोकमासाद्य मोदन्ते सुखिनः सदा ॥

तथा—राजप्रतिग्रहासक्ताः कृतकान्पूजयन्ति ये ।
ते रुद्रशापनिर्दग्धाः पतन्ति नरके ध्रुवम् ॥
ये पुनः सिद्धलिङ्गानां प्रासादानां स्वशक्तितः ।
कुर्वन्ति पूजां सत्कारं ते मुक्ता नात्र संशयः ॥

सिद्धलिङ्गानां पूजां प्रासादानां च सत्कारमिति क्रमेणान्वयः ।
तत्र पूजा जपो होमः कृतो भवति देहिनाम् ।
अनन्तफलदः सर्वो रुद्रभक्तिसमन्वितः ॥

काशीखण्डे—अविमुक्तं समासाद्य यो लिङ्गं स्थापयेत्सुधीः ।
कल्पकोटिशतैर्वाऽपि नास्ति तस्य पुनर्भवः ॥

तथा—समागत्येह काश्यां यः कुर्यादेकं शिवालयम्।
तेन त्रैलोक्यमखिलं सालयं कृतमेव हि॥
तपांसि तेन तप्तानि शीर्णपर्णाशनान्यपि।
वाराणसीं समासाद्य येनाकारि शिवालयः॥
अशेषाः सुविशेषाढ्या इष्टास्तेन महामखाः।
आनन्दकानने येन देवदेवालयः कृतः॥

ब्रह्मवैवर्ते पार्वतीं प्रति शिववचः—
यत्र यत्र जलं काश्यामुद्धरेत्सुकृती नरः।
तत्र तत्र मुदा युक्ताः पितरः पर्युपासते॥
काश्यां रुद्रमयाः सर्वे जन्तवः श्रुतिनोदिताः।
ते पिबन्ति जलं यत्र तडागादौ तृषार्दिताः॥
तत्पुण्यं न मया वक्तुं शक्यं वर्षशतैरपि।
परं तु सावधानैः स कर्तव्यो हि जलाशयः॥
अपराधो न भवति महापापकृदक्षयः।

पार्वत्युवाच—
जलाशये कृते देव कारिते वा महात्मभिः।
कोऽपराधः पतेदत्र तन्ममाऽऽचक्ष्व शंकर॥

महादेव उवाच—
काश्यां तिले तिले लिङ्गं काश्यां तीर्थं पदे पदे।
खननं काशिभूमेस्तु दुर्घटं तेन पार्वति॥
जीर्णोद्धारं च ये कुर्युर्निःसंदेहा भवन्ति ते।
न तत्र लिङ्गपीडा स्यान्न तीर्थखननं भवेत्॥
अतो जीर्णोद्धृतिः कार्या निरवद्या महाफला।
स्वयं कृतं यत्खातादि तदनेकफलप्रदम्॥
ततोऽप्यधिकधर्माणां जनकं जीर्णमुद्धृतम्।

पाद्मे—जीर्णोद्धारेण वै तेषां तत्फलं द्विगुणं भवेत्। इति॥

अत्रापूर्वजलाशयनिन्दा न निषेधार्था किंतु जीर्णोद्धृतेः प्राशस्त्यातिशयार्था। 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्युदितहोमप्रशंसार्थानुदितहोमनिन्दावत्। न हि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमिति न्यायात्। तेन सावधानतयाऽपूर्वतडागादिकरणेऽपि न दोषः।

पाद्मे—द्विजं स्वधर्मनिरतं यो वर्षाशनदानतः ।
स्थापयेच्छ्रद्धया युक्तस्तस्य पुण्यफलं शृणु ॥
यावत्यः सिकताः सन्ति गङ्गायां मुनिसत्तम ।
तावद्वर्षसहस्राणि क्रीडेदिन्द्रेण संगतः ॥
पश्चादत्र महाराजो जायते निर्मले कुले ।
दीर्घायुर्बहुपुत्रश्च सुखी शंकरभक्तिमान् ॥
अन्ते च लभते काशीं ततो निर्वाणमाप्नुयात् ।
अश्वत्थं पिचुमन्दं वा सहकारमथो लताम् ॥
यो रोपयति यत्नेन तस्याप्येतत्फलं भवेत् ।
न्यायागतं धनं काश्यां स्वल्पमप्यग्रजेऽर्पितम् ॥
भवेदनन्तफलदं नित्यं तत्क्षेत्रवासिनि ।

तथा ब्रह्मवैवर्ते—
शिवालयशतं कृत्वा यत्फलं प्राप्यते नृभिः ।
द्विजालयेन चैकेन तत्फलं त्वक्षयं भवेत् ॥
शिवायतनलक्षाणि विष्णोरायतनानि च ।
कृतानि तेन विप्रेन्द्राः स्थापितो ब्राह्मणो यदि ॥

तथा—वर्षाशनं तु यो दद्यात्काश्यां सीदत्कुटुम्बिने ।
यावन्त्यब्दानि तावन्ति युगानि दिवि पूज्यते ॥
वस्तुः कोटिगुणं पुण्यं काश्यां वासयितुर्ध्रुवम् ।
आत्मानं तारयेद्वस्ता तौ द्वौ वासयिता यतः ॥
काश्यां वसन्ति ये विप्रा दूरस्थैरपि सन्नरैः ।
योगक्षेमौ विधातव्यौ तेषां विश्वेशितुर्मुदे ॥

पाद्मे—वाराणस्यां कृतं कर्म नीलकण्ठाय चार्पितम् ।
मनःशुद्धिं विधायाऽऽशु तत्त्वज्ञानाय कल्पते ॥

तथा—तत्र स्वल्पं हुतं जप्तं दत्तं तप्तं द्विजोत्तमाः ।
भूयादनन्तफलदं तत्क्षेत्रस्य प्रभावतः ॥

तथा—यत्कर्म तत्र कुर्वीत शुभं वा यदि वाऽशुभम् ।
अक्षयं तत्प्रभवति नात्र कार्या विचारणा ।

तथा—अनेकजन्मसाहस्रैर्यत्तपःफलमाप्यते ।
ततोऽप्यधिकमेवात्र त्रिरात्रोपोषणाद्भवेत् ॥

ब्रह्मवैवर्ते—

अन्नदानं तु यः कुर्याद्यस्य कस्यचिदप्यहो ।
यावन्त्यङ्गानि तावन्ति युगानि स वसेद्दिवि ॥

तथा—अन्यत्र योगाभ्यासेन यावज्जीवं कृतेन च ।
वाराणस्यां प्राणरोधात्तत्पुण्यं समवाप्यते ॥

तथा—अस्मिन्क्षेत्रे महादेवि पुण्यं पुण्येतरत्तु वा ।
अनन्तकोटिगुणितं भवेत्सर्वं न संशयः ॥

तथा—ये प्रयच्छन्ति मनुजा जीवादप्यधिकं धनम् ।
जीवकोशः श्लथस्तेषां पुण्यराशिः पदे पदे ॥
स्नानेन दानेन परिक्रमेण
शिवार्चनेनापि सतोऽर्चनेन ॥
दिने दिने च सुकृतस्य वृद्धि-
र्यया जनः कृतकृत्यः सदा स्यात् ॥
मनागपि विचारेण मनसो निग्रहो यदि ।
अविमुक्ते भवेद्येषां ते मुक्ता भवबन्धनात् ॥

सनत्कुमारसंहितायाम्—

ब्राह्मणं क्षत्रियं वाऽपि वैश्यं शूद्रमथापि वा ।
यं वा कं वाऽपि वा ब्रह्मञ्शिवभक्तिपरायणम् ॥
योगक्षेमोपदेशाद्यैर्वासयेदपि यत्नतः ।
यावत्स वसते तत्र तावत्तत्फलमस्य वै ॥

तथा—यः काश्यां वासयेदेकं स्थावरं चापि जङ्गमम् ।
यावत्स कालं वसति तावल्लक्षगुणाधिकम् ।
शिवलोके वसेत्कालमिति शास्त्रविनिश्चयः ॥
यं कंचिदपि वा काश्यामेकाहमपि वासयेत् ।
वर्षकोटिशतं ब्रह्मन्रुद्रलोके महीयते ॥
जन्मान्तरे पुनः काश्यां शिवज्ञानमवाप्स्यति ।
त्रयो धर्माः सर्वधर्मादधिकास्त्वक्षयाः सदा ॥
पिशाचमोचने तीर्थे लो[ ]द्रोणं समुद्धरेत् ।
न पीड्यते परे लोके स्वल्पयाऽपि पिपासया ॥

द्रोणपरिमितां मृदमित्यर्थः ।

कुलस्तम्भस्य मूलेऽन्नं दद्यादामलकप्रमम् ।
परलोकेष्वशेषेषु क्षुधया नैव पीड्यते ॥
एकं वा वासयेत्काश्यां वृक्षगुल्मलतास्वपि ।
एकाहमपि वा धातर्यमलोकं न पश्यति ॥
क्षेत्रवासं विनोपायैः क्षेत्रवासफलं लभेत् ।
यः काश्यां सर्वगुह्येषु यात्रां कुर्याद्यथोदिताम् ॥
यस्तूष्णीं वासयत्येकं वसनाशनपोषणैः ।
एकाहमपि तस्यैव सिद्धिः कोटिगुणाधिका ॥
दद्याद्वाऽप्युपदेशं स यस्त्वसंचयवान्भवेत् ।
येनासावुपदेशेन काशीं श्लिष्टोऽपि नो(?)ति ॥

काशीखण्डे—

नियतं यत्परिस्थाप्य लिङ्गानि फलमाप्यते ।
अन्यत्र तदिहैकेन लिङ्गेन परिलभ्यते ॥
कालेन भङ्गमापन्नं जीर्णोद्धारं करोति यः ।
इह तस्य फलस्यान्तः प्रलयेऽपि न जायते ॥
वित्तशाठ्यं परित्यज्य प्रासादं योऽत्र कारयेत् ।
तेन दत्तो भवेत्सर्वो मेरुर्नियुतयोजनः ॥
कूपवापीतडागानि शक्त्या योऽत्र तु कारयेत् ।
अन्यत्रकरणात्तस्य पुण्यं कोटिगुणाधिकम् ॥
इज्यार्थमत्र यः कुर्यात्सुरम्यां पुष्पवाटिकाम् ।
पुष्पे पुष्पे फलं तस्य सुवर्णकुसुमाधिकम् ॥

इज्यार्थं पूजार्थम् ।

अत्र ब्रह्मपुरीं कृत्वा यो विप्रेभ्यः प्रयच्छति ।
वर्षाशनेन संयुक्तां तस्य पुण्यफलं शृणु ॥
क्षीयन्ते सलिलान्यब्धेर्भौमाश्च त्रसरेणवः ।
क्षयो न तस्य पुण्यस्य शिवलोके समासतः ॥

तिष्ठत इत्यर्थः ।

मठानपि तपस्विभ्यः कारयित्वाऽत्र योऽर्पयेत् ।
जीवनोपायसंयुक्तान्सोऽपि सर्वफलाश्रयः ॥
कृत्वा महान्ति पुण्यानि योऽत्र विश्वेश्वरेऽर्पयेत् ।
न तस्य पुनरावृत्तिर्घोरे संसारसागरे ॥

तथा—चतुर्णामपि वेदानां पुण्यमध्ययनाच्च यत् ।
तत्पुण्यं जायतां काश्यां गायत्रीलक्षजापतः ॥
अष्टाङ्गयोगाभ्यासेन यत्पुण्यमपि जायते ।
तत्पुण्यं साधिकं भूयाच्छ्रद्धाकाशीनिषेवणात् ॥
कृच्छ्रचान्द्रायणाद्यैश्च यच्छ्रेयः समुपार्ज्यते ।
तदेकेनोपवासेन भवत्वानन्दकानने ॥
अन्यत्र यत्तपस्तप्त्वा श्रेयः स्याच्छरदां शतम् ।
तदस्तु काश्यां वर्षेण भूमिशय्याव्रतेन हि ॥
आजन्ममौनव्रततो यदन्यत्र फलं स्मृतम् ।
तदस्तु काश्यां पक्षाहःसत्यवाक्परिभाषणात् ॥
अन्यत्र दत्त्वा सर्वस्वं सुकृतं यत्समीहितम् ।
सहस्रभोजनात्काश्यां तद्भूयादयुताधिकम् ॥

तथा—दत्त्वाऽल्पमपि देवेशि न्यायेनोपार्जितं धनम् ।
अविमुक्ते मम क्षेत्रे न दरिद्रो भवेत्क्वचित् ॥

तथा—तप्त्वा तपांसि सर्वाणि बहुकालं जितेन्द्रियैः ।
यत्फलं लभ्यतेऽन्यत्र तत्काश्यामेकरात्रतः ॥

कौर्मे—दत्तं जप्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ।
ध्यानमध्ययनं ज्ञानं सर्वमत्राक्षयं भवेत् ॥

वायवीये—

वाराणस्यां नगर्यां तु देयं श्राद्धं प्रयत्नतः ।
तस्यां योगेश्वरो नित्यं तस्यां दत्तमथाक्षयम् ॥

काशीखण्डे—

संनिहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
तुलापुरुषदानेन काश्यां भिक्षा समा भवेत् ॥

तथा—भिक्षाऽपि यत्र भिक्षुभ्यो दत्ताऽऽमलकसंमिता ।
सुमेरुणाऽपि तुलिता वाराणस्यां गुरुर्भवेत् ॥
वाराणस्यां वर्षभोज्यं यो दद्यान्निरुपायिने ।
स कदाचित्तृट्क्षुधा नो दुःखं भुङ्क्ते नरर्षभः ॥
वाराणस्यां निवसतां यत्पुण्यमुपजायते ।
तदेव संवासयितुः फलं त्वविकलं भवेत् ॥

तथा—नियमेन तु विश्वेशे पत्रं पुष्पं फलं जलम् ।
यद्दत्तं सुमनोवृत्त्या महादानं तदत्र वै ॥

सुमनोवृत्त्या निष्कामतया ।

मुक्तिमण्डपिकायां च क्षणं यत्स्थिरमास्यते ।
स्नात्वा गङ्गामृते शुद्धे तप एतदिहोत्तमम् ॥
सत्कृत्य भिक्षवे भिक्षा यत्काश्यां परिदीयते ।
तुलापुरुष एतस्याः कलां नार्हति षोडशीम् ॥
हृदि संचिन्त्य विश्वेशं क्षणं यद्विनिमील्यते ।
देवस्य दक्षिणे भागे महायोगोऽयमुत्तमः ॥
इदमेव तपोऽत्युग्रं यदिन्द्रियविलोलताम् ।
निषिध्य स्थीयते काश्यां क्षुत्तापाद्यवमन्य च ॥
मासि मासि यदप्येतद्व्रताच्चान्द्रायणात्फलम् ।
अन्यत्र तदिहाऽऽप्येत भूतायां नक्तभोजनात् ॥
मासोपवासादन्यत्र यत्फलं समुपार्ज्यते ।
श्रद्धयैकोपवासेन तत्काश्यां स्यादसंशयम् ॥
चातुर्मास्यव्रतात्प्रोक्तं यदन्यत्र महाफलम् ।
एकादश्युपवासेन तत्काश्यां स्यादसंशयम् ॥
षण्मासान्नपरित्यागाद्यदन्यत्र फलं भवेत् ।
शिवरात्र्युपवासेन तत्काश्यां जायते ध्रुवम् ॥
वर्षं कृत्वोपवासानि लभेदन्यत्र यद्व्रती ।
तत्फलं स्यात्त्रिरात्रेण काश्यामविकलं मुने ॥
मासि मासि कुशाग्राम्बुपानादन्यत्र यत्फलम् ।
काश्यामुत्तरवाहिन्यामेकेन चुलकेन तत् ॥

तथा—लिङ्गं समर्चितं दृष्ट्वा यः कुर्यात्प्रणतिं सकृत् ।
संदेहो जायते तस्य पुनर्देहनिबन्धने ॥
लिङ्गं यः स्थापयेद्भक्त्या सतजन्मकृतादघात् ।
मुच्यते नात्र संदेहो विशुद्धः स्वर्गभाग्भवेत् ॥

तथा—एकं प्रतिष्ठितं येन लिङ्गमत्रेशभक्तितः ।
तेनाऽऽत्मना समं विश्वं जगदेतत्प्रतिष्ठितम् ॥
रत्नाकरे रत्नसंख्या संख्यावद्भिरपीष्यते ।
लिङ्गप्रतिष्ठापुण्यस्य न तु संख्येह विद्यते ॥

तथा—महादानेन चान्यत्र यत्फलं लभ्यते नरैः ।
अविमुक्ते तु दत्तायां काकिन्यां तदवाप्यते ॥

तथा—अत्र यत्क्रियते क्षेत्रे शुभं वाऽशुभमेव वा ।
संवर्तेऽपि न तस्यान्तस्तस्माच्छ्रेयः समाचरेत् ॥

तथा—अन्यत्र योगाभ्यसनाद्यावज्जन्म यदर्ज्यते ।
वाराणस्यां तदेकेन प्राणायामेन लभ्यते ॥
सर्वतीर्थावगाहाच्च यावज्जन्म यदर्ज्यते ।
तदानन्दवने प्राप्यं मणिकर्ण्येकमज्जनात् ॥

तथा—यत्षोडशमहादानैः पुण्यं प्रोक्तं महर्षिभिः ।
तत्पुण्यं जायते पुंसां विश्वेशे पुष्पदानतः ॥
अश्वमेधादिभिर्यज्ञैर्यत्फलं प्राप्यतेऽखिलैः ।
पञ्चामृतानां स्नपनाद्विश्वेशे तदवाप्यते ॥
वाजपेयसहस्रेण सम्यगिष्टेन यत्फलम् ।
सकृन्महार्हैर्नैवेद्यैर्विश्वेशे तच्छताधिकम् ॥
ध्वजातपत्रचमरं विश्वेशे यः समर्पयेत् ।
एकच्छत्रं स वै राज्यं प्राप्नुयाद्वसुधातले ॥
महापूजोपकरणं योऽर्पयेद्विश्वभर्तरि ।
न तं संपत्तिसंभारा विमुञ्चन्तीह कुत्रचित् ॥
सर्वर्तुकुसुमाढ्यां च यः कुर्यात्पुष्पवाटिकाम् ।
तदङ्गणे कल्पवृक्षाश्छायां कुर्वन्ति शीतलाम् ॥
यः क्षीरस्नपनार्थं वै विश्वेशे धेनुमर्पयेत् ।
क्षीरार्णवतटे तस्य निवसेयुः पितामहाः ॥
विश्वेशराजसदने यः सुधां चित्रमेव वा ।
कारयेत्तस्य भवनं कैलासे चित्रितं भवेत् ॥
ब्राह्मणान्यतिनो वाऽपि तथैव शिवयोगिनः ।
भोजयेद्योऽत्र वै काश्यामेकैकगणनाक्रमात् ॥
कोटिभोज्यफलं तस्य श्रद्धया नात्र संशयः ।
तपस्त्वत्र प्रकर्तव्यं दानमत्र प्रदापयेत् ॥
विश्वेशस्तोषणीयोऽत्र स्नानहोमजपादिभिः ।
अन्यत्र कोटिजप्येन यत्फलं प्राप्यते नरैः ॥

अष्टोत्तरशतं जप्त्वा तदत्र समवाप्यते ।
कोटिहोमेन यत्प्रोक्तं फलमन्यत्र सूरिभिः ॥
अष्टोत्तराहुतिशतात्तदत्राऽऽनन्दकानने ।
यो जपेद्रुद्रसूक्तानि काश्यां विश्वेशसंनिधौ ॥
पारायणेन वेदानां सर्वेषां फलमाप्यते ।
तस्य पुण्यं न जानामि चिन्तिते चाक्षरे परे ॥

तथा—अवन्ध्यं दिवसं कुर्यात्स्नानदानजपादिभिः ।
यतः काश्यां कृतं कर्म महत्त्वाय प्रकल्पते ॥

तथा—अस्मिन्वैश्वेश्वरे क्षेत्रे संभोज्य शिवयोगिनः ।
कोटिभोज्यफलं सम्यगेकैकपरिसंख्यया ॥

मत्स्यपुराणे—

अविमुक्ते परा सिद्धिरविमुक्ते परा गतिः ।
जप्तं दत्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ॥
ध्यानमध्ययनं दानं सर्वं भवति चाक्षयम् ।

पाद्मे सृष्टिखण्डे—

तत्र त्वपि हि यद्दानं भक्त्या रुद्राय कल्प्यते ॥
खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः ।
ते रुद्रलोकमासाद्य मोदन्ते सुखिनः सदा ॥
तत्र पूजा जपो होमः सर्वं भवति देहिनाम् ।
अनन्तफलदं सर्वं रुद्रभक्तिरतात्मनाम् ॥
तत्र दीपप्रदानेन ज्ञानशक्तिरतीन्द्रियाः ।
अथ किं बहुनोक्तेन यत्तत्र क्रियते नरैः ॥
कर्म धर्मार्थमुद्दिश्य तदनन्तफलं भवेत् ।
स्वर्गापवर्गदं क्षेत्रं तद्धि तीर्थतमं भुवि ॥
स्नानाज्जप्यात्तथा होमादनन्तफलसाधनम् ।
गत्वा वाराणसीतीर्थं व्रतं चान्द्रायणं चरेत् ॥

तथा—पिण्डदानं च तत्रैव सुपुत्रैः कार्यमादरात् ।
पुत्रास्ते तु पितॄणां वै भवन्ति सुखदाः सदा ॥ इति ।

मात्स्ये—यावत्कृते पुण्यमिहाविमुक्ते
त्रेतायुगे कोटिगुणं ततोऽपि ।

स्याद्द्वापरे सुन्दरि तत्परार्ध-
मनन्तकं तद्भवतीह तिष्ये ॥

तिष्ये कलावित्यादि । काश्यन्तर्गततत्तत्तीर्थावच्छेदेन काम्यानुष्ठान-
फलं तु यथास्थानं वक्ष्यामः ।

इति त्रिस्थलीसेतौ काश्यधिकरणकनानाकाम्यकर्माणि ।

अथ कालविशेषेऽनेकतीर्थागमः । लिङ्गपुराणे—

अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
शशिभानूपरागेषु कार्तिक्यां च विशेषतः ॥
सर्वपर्वसु पुण्येषु विषुवेष्वयनेषु च ।
पृथिव्याः सर्वतीर्थानि वारणस्यां तु जाह्नवीम् ॥
उत्तरप्रवहां पुण्यां मम मौलिविनिर्गताम् ।
पितुस्ते गिरिराजस्य सुतां हिमवतः शुभाम् ॥
मज्जन्ते सर्वतोऽभ्येत्य ताञ्शृणुष्व वरानने ।
संनिहत्या कुरुक्षेत्रं सार्धं तीर्थशतैस्तथा ॥
नैमिषं पुष्करं चैव प्रयागं सपृथूदकम् ।
संध्याः ससर्पयश्चैव सर्वा नद्यः सरांसि च ॥
समुद्राः सप्त चैवात्र देवतीर्थानि कृत्स्नशः ।
भागीरथीं समभ्यन्ति सर्वपर्वसु काशिकाम् ॥
अविमुक्तेश्वरं चैव काशीस्थमचलात्मजे ।
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ॥
प्रविशन्ति सदाऽभ्येत्य पुण्येऽस्मिन् सर्वपर्वसु ।
केदारे चैव यल्लिङ्गं यल्लिङ्गं च महालये ॥
मध्यमेश्वरसंस्थं च तथा पशुपतीश्वरम् ।
शंकुकर्णेश्वरं चैव गोकर्णेशौ तथा श्रुतौ ॥
द्रुमिचण्डेश्वरं चैव भद्रेश्वरमथैव च ।
स्थानेश्वरमथैकाम्रं कालेश्वरमजेश्वरम् ॥
भैरवेश्वरमीशानं तथा कारोहणे स्थितम् ।
यानि चान्यानि पुण्यानि स्थानानि मम भूतले ॥
तानि सर्वाण्यनेकानि काशीपुर्यां विशन्ति माम् ।
सर्वपर्वसु पुण्येषु गुह्यं चैतदुदाहृतम् ॥

सप्तपुर्यादिस्थितिस्तु सार्वदिकी तदुक्तं ब्रह्मवैवर्ते—

काश्यां नवीश्वराः सप्त पुर्यः सन्ति समागताः ।
नवारण्यानि च तथा नगाश्च सुकृतप्रदाः ॥
तथा सर्वाणि तीर्थानि सप्त पुर्यश्च मानदे ।
वसन्ति काशीमाश्रित्य स्वसामर्थ्यविवृद्धये ॥

तथा—तीर्थानि सर्वाणि पुरीश्च सर्वा-
स्तथा शिवस्याऽऽयतनानि पट्टिः ।
नद्यो नदाः ससरःसागराश्च
देवाः समेता मुनयश्च सर्वे ॥

वसन्ति काश्यां सततमित्यादि । काशीखण्डे—

यदाप्रभृति विश्वेशो मन्दरादागतोऽभवत् ।
तस्मिन्नानन्दगहने तदाप्रभृति सत्तम ॥
सर्वाण्यायतनान्याशु साध्वी(धू)नि सगिरीण्यपि ।
सनदीनि सतीर्थानि सद्वीपानि ययुस्ततः ॥

मात्स्ये—यानि स्थानानि श्रूयन्ते त्रिषु लोकेषु सुव्रते ।
अविमुक्तस्य पादेषु नित्यं संनिहितानि वै ॥

इत्यादि । पादाः प्रदेशाः ।

स्कान्दे—तीर्थानि यानि लोकेऽस्मिञ्जन्तूनामघहन्त्यहो ।
तानि सर्वाणि शुध्यर्थं काशीमायान्ति नित्यशः ॥

अथ मत्स्योदरीयोगः काशीखण्डे—

कैलासाद्रेः समायाताः सप्तकोटिमिता गणाः ।

इति प्रक्रम्य—

ततः शैलं महादुर्गं तैः काशीपरितः कृतम् ।
परिखाऽपि कृता रम्या मत्स्योदर्या जलाविला ॥
मत्स्योदरी द्विधा जाता बहिरन्तश्चरा पुनः ।
तच्च तीर्थं महत्ख्यातं मिलितं गाङ्गवारिभिः ॥
यदा संहारमार्गेण गङ्गाम्भः प्रविशेदिह ।
तदा मत्स्योदरीतीर्थं लभ्यते पुण्यगौरवात् ॥
सूर्याचन्द्रमसोः पर्व तदा कोटिगुणं शतम् ।
सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै ॥

तत्रैव सर्वलिङ्गानि गङ्गा मत्स्योदरी यतः ।
मत्स्योदर्यां हि ये स्नाता यत्र कुत्रापि मानवाः ॥
कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः ।
अविमुक्तमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् ॥
परितः स्वर्धुनीवारि संसारि परिवीक्ष्यते ।
मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः ॥
कृत्वाऽपि बहुपापानि नेक्षन्ते भास्करेः पुरीम् ।
किं स्नात्वा बहुतिर्थेषु किं तप्त्वा दुष्करं तपः ॥
यदि मत्स्योदरी स्नाता कुतो गर्भभयं ततः ।
यत्र यत्र हि तीर्थानि नृदेवर्षिकृतान्यपि ॥
तत्र मत्स्योदरीं प्राप्य सुस्नातो मोक्षभाजनम् ।
सन्ति तीर्थान्यनेकानि भूर्भुवःस्वर्गतान्यपि ॥
न समानि परं तानि कोट्यंशेनापि निश्चितम् ।

संहारमार्गेण प्रतिलोमवर्त्मना । इह मत्स्योदरीतीर्थे । मत्स्योदरीतीर्थ जलयुक्तायां परिखायां गणैः कृतायां मत्स्योदरीतीर्थमेवान्तः स्वस्थाने बहिश्च परिखायां गमनाद्द्विविधमभूत्तत्र च परिखाद्वारेण यदा प्रतिकूलमार्गेण वर्षासु वृष्ट्यतिशयेन गङ्गाजलं प्रसरति तदाऽतिप्राशस्त्यमित्यर्थः । मत्स्याकारं काशीक्षेत्रमुदरे यस्या इति व्युत्पत्त्या गङ्गैव मत्स्योदरीसंज्ञा यतो यत्र यत्र तीर्थं प्रविशति तत्र तत्रैव सर्वतीर्थानीति सर्वपर्वाणीत्यादेरर्थः । भास्करेर्यमस्य । यत्र यत्र लिङ्गानि तदुपलक्षितानि तीर्थानि तत्र तत्र मत्स्योदरीं गङ्गां मिलितां प्राप्येति यत्र यत्रेति पद्यार्थः ।

तथा—मत्स्योदरी यदा गङ्गा कपिलेश्वरसंनिधौ ।
तदा तत्र नरः स्नात्वा ब्रह्महत्यां व्यपोहति ॥
वरणोत्सिक्तपानीये द्युनदीतोयमिश्रिते ।
स्नात्वा नादेश्वरं दृष्ट्वा पूतः किमनुशोचति ॥

नादेश्वरमोंकारम् ।

तथा—प्रणवेशसमीपे तु यदा गङ्गा समेष्यति ।
तदा पुण्यतमः कालो देवर्षिपितृवल्लभः ॥
तत्र स्नानं जपो दानं हवनं देवतार्चनम् ।
मत्स्योदर्यामक्षयं स्यादोंकारेश्वरसंनिधौ ॥

तथोंकारं प्रकृत्य—

कदाचित्तस्य देवस्य दर्शनेऽभ्येति जाह्नवी।
मत्स्योदरी सा कथिता स्नाने पुण्यैरवाप्यते॥
मत्स्योदरी यदा गङ्गा पश्चिमेकपिलेश्वरम्।
समायाति महादेवि तदा योगः सुदुर्लभः॥

पश्चिमेकपिलेश्वरमित्यलुक्समासः। लिङ्गपुराणे—

मत्स्योदरीजले गङ्गा ओंकारेश्वरसंनिधौ।
तदा तस्मिञ्जले स्नात्वा ब्रह्महत्यां व्यपोहति॥

तथा—तस्मिन्स्थाने यदा गङ्गा आगमिष्यति भामिनि।
तदा पुण्यतमः कालो देवानामपि दुर्लभः॥ इत्यादि।

अथ प्रसङ्गात्काश्यवच्छिन्नगङ्गामहिमा। भविष्ये—

त्रैलोक्ये यानि तीर्थानि मोक्षदानि च कृत्स्नशः।
सेवन्ते सततं गङ्गां काश्यामुत्तरवाहिनीम्॥

तथा—गङ्गा हि सर्वतः पुण्या ब्रह्महत्यापहारिणी।
वाराणस्यां विशेषेण यत्र चोत्तरवाहिनी॥
वरणायास्तथाऽस्याश्च जाह्नव्याः संगमे नरः।
स्नानमात्रेण सर्वेभ्यः पातकेभ्यः प्रमुच्यते॥
काश्यामुत्तरवाहिन्यां गङ्गायां कार्तिके तथा।
स्नात्वा विमुच्यते माघे महापापातिपातकैः॥
सर्वलोकेषु तीर्थानि यानि ख्यातानि तानि च।
सर्वाण्येतान्यशेषेण वाराणस्यां तु जाह्नवीम्॥
उत्तराभिमुखीं पुण्यामागच्छन्ति दिने दिने।
नित्यं पर्वसु सर्वेषु पुण्यैरायतनैः सह॥
महापातकदोषादिदुष्टानां स्पर्शसंभवम्।
व्यपोहितुं स्वपापं च जलपापापनुत्तये॥
जन्मान्तरशतेनापि सत्कर्मनिरतस्य च।
अन्यत्र सुधियश्चापि मोक्षो लभ्येत वा न वा॥
एकेन जन्मना चात्र गङ्गायां मरणेन च।
मोक्षस्तु लभ्यते काश्यां नरेणाचलितात्मना॥

मात्स्ये—कुरुक्षेत्रसमा गङ्गा यत्र यत्रावगाहिता ।
कुरुक्षेत्राच्छतगुणा यत्र विन्ध्येन संगता ॥
विन्ध्याच्छतगुणा प्रोक्ता काशिपुर्यां तु जाह्नवी ।
स्कान्दे—यथाऽविमुक्तं सर्वेषां स्थानानां स्थानमुत्तमम् ।
वाराणस्यां तथा गङ्गा दुर्लभा साऽकृतात्मभिः ॥
नारदीये—विष्णुपादोद्भवा देवी विश्वेश्वरसमीपगा ।
संसेव्या मुनिभिर्देवैः काश्यां वै मोक्षकाङ्क्षिभिः ॥
अथ काशीस्थतीर्थानां देवतानां च लेशतः ।
नानापुराणसंमत्या महिमेह मयोच्यते ॥

तत्र तावत्सकलतीर्थवरिष्ठायाः श्रीमन्मणिकर्णिकाया महिमा । तत्र काशीखण्डे—

आब्रह्मस्तम्बपर्यन्तं यत्किंचिज्जन्तुसंज्ञितम् ।
चतुर्षु भूतग्रामेषु काश्यां तन्मुक्तिमाप्स्यति ॥
अस्मिंस्तीर्थवरे शंभोर्मणिश्रवणभूषणे ।
संध्यां स्नानं जपं होमं वेदाध्ययनमुत्तमम् ॥
तर्पणं पिण्डदानं च देवतानां च पूजनम् ।

इत्याद्युक्त्वा—

अक्षया मुक्तिरेकाऽस्तु विपाकस्तस्य कर्मणः ।

इत्युक्तम् । तथा—

मुक्तिक्षेत्राणि सर्वाणि यत्संसेव्योदितं फलम् ।
पञ्चरात्रात्तदत्रास्तु निषेव्य मणिकर्णिकाम् ॥

तथा—त्रयाणामपि लोकानां हिताय महते नृप ।
समानैषीत्ततो गङ्गां यत्राऽऽसीन्मणिकर्णिका ॥
प्रागेव हि मुनेऽनर्घ्यं जात्यं जाम्बूनदं स्वयम् ।
पुनर्वारितरेणापि हीरेण यदि संगतम् ॥
चक्रपुष्करिणीतीर्थं प्रागेव श्रेयसां प्रदम् ।
ततः श्रेष्ठतरं शंभोर्मणिश्रवणभूषणात् ॥

तथा—आनन्दकाननमिदं सुखदं पुरैव
तत्रापि चक्रसरसी मणिकर्णिकाऽथ ।
स्वःसिन्धुसंगतिरथो परमास्पदं च
विश्वेशितुः किमिह तन्न विमुक्तये यत् ॥

पाद्मे व्यासं प्रति भृगुः—

चक्रपुष्करिणीतोये जाह्नवीजलसंप्लुते ।
स्नात्वा नाभ्यर्चितः शंभुर्देवदेवः सनातनः ॥
द्वैपायनेदं भवतो धर्मबाधनचेष्टितम् ।

तथा—गर्जन्ति सर्वतीर्थानि स्वस्वधिष्ण्यगतान्यहो ॥
केवलं बलमासाद्य सुमहन्माणिकर्णिकम् ।
उत्क्षिप्यैकाङ्गुलिं तथ्यं श्रेष्ठैका मणिकर्णिका ॥

तथा—विश्वेशो विश्वया सार्धं सदोपमणिकर्णिकम् ।
मध्यंदिनं समासाद्य संस्नाति प्रतिवासरम् ॥
वैकुण्ठादप्यहं नित्यं मध्याह्ने मणिकर्णिकाम् ।
विगाहे पद्मया सार्धं मुदा परमया मुने ॥
सत्यलोकात्प्रतिदिनं हंसयानः पितामहः ।
माध्याह्निकविधानाय समायान्मणिकर्णिकाम् ॥
इन्द्राद्या देवताः सर्वा मरीच्याद्या महर्षयः ।
चराचरेषु सर्वेषु यावन्तश्च सचेतनाः ॥
ते सर्वे स्नातुमायान्ति मध्याह्ने मणिकर्णिकाम् ।
त्रिकालं ये जपन्तीह मानवा मणिकर्णिकाम् ॥
जपामि तानहं वीर त्रिकालं पुण्यकर्मणः ।
इष्टं तेन महायज्ञैः सहस्रशतदक्षिणैः ॥
पञ्चाक्षरी महाविद्या येनोक्ता मणिकर्णिका । इति ।

ब्रह्मवैवर्ते—

सर्वतीर्थावगाहाच्च यत्पुण्यं स्यान्नृणामिह ।
तत्पुण्यं कोटिगुणितं मणिकर्ण्येकमज्जनात् ॥

सनत्कुमारसंहितायाम्—

मग्नः स्मरन्मां मणिकर्णिकायां
विश्वेश्वरं यः स्मरतीष्टवर्गान् ।
स तारयेत्तानपि सर्वपापात्
किमद्भुतं तस्य कृतार्थतायाम् ॥

काशीखण्डे ब्रह्मा—

स्नात्वा तु मणिकर्णिक्यां प्रीणिता ब्राह्मणा धनैः ।
त एते सर्वभोगाढ्याः कल्पं स्थास्यन्ति मत्पुरे ॥

तथा—मुक्तिक्षेत्राणि सर्वाणि यत्संसेव्योदितं फलम् ।
पञ्चरात्रात्तदत्रास्तु निषेव्य मणिकर्णिकाम् ॥
सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।
मणिकर्ण्यां विधिस्नातः श्रद्धया तदवाप्नुयात् ॥
श्रद्धया विधिवत्स्नात्वा कृत्वा देवादितर्पणम् ।
तिलयहिर्यवैः सम्यक्सर्वयज्ञफलं लभेत् ॥
श्रद्दधानो विधिस्नातः कृतसर्वोदकक्रियः ।
जपन्देवान्समभ्यर्च्य सर्वमन्त्रफलं लभेत् ॥

तथा—ज्ञात्वा प्रभावमतुलं मणिकर्णिकायां
यः पुद्गलं त्यजति चाशुचिपूयगन्धि ।
स्नात्वाऽवबोधमहसा सहसा मिलित्वा
कल्पान्तरेष्वपि स नैव पृथक्त्वमेति ॥

तथा—मरणं मङ्गलं यत्र सफलं यत्र जीवितम् ।
स्वर्गस्तृणायते यत्र सैषा श्रीमणिकर्णिका ॥

तथा—सत्यलोकेऽपि ये लोकास्तेऽर्थयन्ते निरन्तरम् ।
यामहो दीर्घनिद्रायै सैषा श्रीमणिकर्णिका ॥ इत्यादि ।

तथा—हुत्वाऽग्निहोत्रमपि च यावज्जीवं द्विजोत्तमाः ।
अन्ते श्रयन्ते मुक्त्यै यां सेयं श्रीमणिकर्णिका ॥

इत्यादिना वर्णाश्रमचतुष्टयस्त्रीतिर्यगादीनामप्यत्र मृतो मुक्तिरिति दर्शितं चतुस्त्रिंशेऽध्याये ।

अथ मणिकर्णिकाप्रमाणम् । काशीखण्डे—

स्थानादमुष्मान्मम राजसौधा-
त्प्राच्यां मनागीशसमाश्रितायाम् ।
सव्येऽपसव्ये च कराः क्रमेण
शतत्रयी चापि शतद्वयी च ॥
हस्ताः शतं पञ्चसुरापगाया-
मुदीच्यवाच्योर्मणिकर्णिकेयम् ।
सारस्त्रिलोक्याः परिकोशभूमि-
र्यैः सेविता ते मम हृच्छया हि ॥

अयमर्थः—मम राजसौधाद्राजगृहात् । 'मोक्षस्वर्द्वारयोर्मध्ये बुधा राजगृहं विदुः' इतिवचनात्स्वर्गद्वारस्थितादारभ्य प्राच्यां मनागैशि-

दीशसमाश्रितायामीशानकोणाश्रितायाम् । किंचिदाग्नेयकोणाश्रितायां चेत्यपि ज्ञेयम् । एवंभूतायां प्राच्यां वामपार्श्वे कराणां शतत्रयं हरिश्चन्द्रमण्डपसीमकम् । तस्मादेव सौधादारभ्य दक्षिणाश्रितभागे कराणां शतद्वयं गङ्गाकेशवावधिकम् । उदीच्यवाच्योरुत्तरदक्षिणयोर्दिशोः सुरापगायां गङ्गायां पञ्चशतं हस्तास्तावन्मितो देशः सेयं मणिकर्णिका । उदीच्यां हरिश्चन्द्रमण्डपात्करशतत्रयावधिभूतात्संमुखे गङ्गायां पञ्चशतं हस्ताः । दक्षिणे च गङ्गाकेशवाच्छतद्वयहस्तावधिभूतात्संमुखे गङ्गायां पञ्चशतं हस्ता इत्यर्थः । एवं च हरिश्चन्द्रमण्डपगङ्गाकेशवयोः सर्वस्मादपि मध्यवर्तिनः प्रदेशात्संमुखे पञ्चशतं हस्ता इत्यर्थाल्लभ्यते । तथा च दीर्घपञ्चकोणाकारैव मणिकर्णिका भवतीत्यर्थः । एतदेवावधिप्रदर्शनद्वारा प्रकटीकृतं तत्रैव—

आगङ्गाकेशवाच्चैव आहरिश्चन्द्रमण्डपात् ।
आमध्याद्देवसरितः स्वर्द्वारान्मणिकर्णिका ॥ इति ।

अत्र च—'तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥

हस्तो वितस्तिद्वितयम्' इत्येतदेव करपरिमाणं ग्राह्यम् । परिमाणान्तरग्रहणे मणिकर्णिकाप्रमाणानियमप्रसङ्गात् ।

अथ मणिकर्णिकोत्पत्तिः ।

कदाचिद्भवानीशंकरयोरिच्छाऽभूत्कश्चित्तादृश आवाभ्यामुत्पाद्यो यस्मिन्सर्वं भारं निधाय सुखेन स्थीयते ।

संप्रधार्येति स विभुः सर्वज्ञश्चित्स्वरूपया ।
तया सह जगद्धात्र्या जगद्धाताऽथ धूर्जटिः ॥
सव्ये व्यापारयां चक्रे दशमङ्गे सुधामुचम् ।
ततः पुमानाविरासीदेकस्त्रैलोक्यसुन्दरः ॥

तं महादेवो वीक्ष्य सर्वं त्वमेव विष्णुर्भूत्वा कुर्विति नियुज्य स्वयं शिवया सहित आनन्दकाननं प्रविष्टः ।

ततः स भगवान्विष्णुर्भालावाज्ञां निधाय च ।
क्षणं ध्यानपरो भूत्वा तपस्येव मनो दधे ॥
खनित्वा तत्र चक्रेण रम्यां पुष्करिणीं हरिः ।
निजाङ्गस्वेदसंदोहसलिलैस्तामपूरयत् ॥

समाः सहस्रं पञ्चाशत्तप उग्रं चचार सः ।
चक्रपुष्करिणीतीरे तत्र स्थाणुसमाकृतिः ॥

ततो महादेवस्तत्तपो दृष्ट्वा मौलिमान्दोलयन्नुवाच—

अलं तप्त्वा महाविष्णो वरं वरय सत्तम । इति ।

एवमुक्तो विष्णुर्वरं वव्रे त्वद्भक्तिर्ममास्त्विति । ततः श्रीशिवस्तं वा दत्त्वोवाच—

त्वदीयस्यास्य तपसो महोपचयदर्शनात् ।
यन्मयाऽऽन्दोलितो मौलिराहिश्रवणभूषणः ॥
तद्धान्दोलनतः कर्णात्पपात मणिकर्णिका ।
मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका ॥
चक्रपुष्करिणीतीर्थं पुरा ख्यातमिदं शुभम् ।
त्वया चक्रेण खननाच्छङ्खचक्रगदाधर ॥
मम कर्णात्पपातेयं यदा च मणिकर्णिका ।
तदाप्रभृति लोकेऽत्र ख्याताऽस्तु मणिकर्णिका ॥

मणियुक्ता कर्णिका कर्णाभरणविशेषः । विष्णुरुवाच—

मुक्ताकुण्डलपातेन तवाद्रितनयाप्रिय ।
तीर्थानां परमं तीर्थं मुक्तिक्षेत्रमिहास्तु वै ॥

इत्येवं काशीखण्डे षड्विंशेऽध्याये कथा । इति मणिकर्णिकोत्पत्तिः।

अथ मणिकर्णिकाध्यानमन्त्रादि । काशीखण्डे अग्निबिन्दुं प्रति विष्णुः—

चक्रपुष्करिणी चैव ख्याताऽभून्मणिकर्णिका ।
द्रवरूपं परित्यज्य ललनारूपधारिणी ॥
प्रत्यक्षरूपिणी तत्र मयैक्षि मणिकर्णिका ।
तस्या रूपं प्रवक्ष्यामि भक्तानां तु शुभप्रदम् ॥
यद्रूपध्यानतः पुंभिराषण्मासं त्रिसंध्यतः ।
प्रत्यक्षरूपिणी देवी दृश्यते मणिकर्णिका ॥
चतुर्भुजा विशालाक्षी स्फुरद्भालविलोचना ।
पश्चिमाभिमुखी नित्यं प्रबद्धकरसंपुटा ॥
इन्दीवरमयीं मालां दधाना दक्षिणे करे ।
वरोद्यते करे सव्ये मातुलुङ्गफलं शुभम् ॥

कुमारीरूपिणी नित्यं नित्यं द्वादशवार्षिकी ।
शुद्धस्फटिककान्तिश्च सुनीलस्निग्धमूर्धजा ॥
सितप्रवालमाणिक्यरमणीयरदच्छदा ।
प्रत्यग्रकेतकीपुष्पलसद्धम्मिल्लमस्तका ॥
सर्वाङ्गमुक्ताभरणा चन्द्रकान्त्यंशुकावृता ।
पुण्डरीकमयीं मालां सश्रीकां बिभ्रती हृदि ॥
ध्यातव्याऽनेन रूपेण मुमुक्षुभिरहर्निशम् ।
निर्वाणलक्ष्मीभजनं श्रीमती मणिकर्णिका ॥
मन्त्रं तस्याश्च वक्ष्यामि भक्तकल्पद्रुमाभिधम् ।

यस्याऽऽवर्तनतः सिध्येदपि सिध्यष्टकं नृणाम् ।
१ वाग्भव २मायाश्लक्ष्मी ४मदन५प्रणवान्वदेत्पूर्वम् ॥
६मान्तं ७बिन्दूपेतं मणिपदमथ कर्णिके ८सहृत्प्रण९वपुटः ।
मन्त्रः सुरद्रुमसमः समस्तसुखसंततिप्रदो जप्यः ॥
तिथिभिः परिमितवर्णैः परमपदं दिशति निशितधियाम् ।

तथा चैवं मन्त्रः—'ॐ ऐं ह्रीं श्रीं क्लीं ॐ मं मणिकर्णिके नमः । ॐ' इति । अन्यत्र त्वयं मन्त्र अन्यथोद्धृतः—

वाङ्माया कमला कामा मान्तं बिन्दुयुतं ततः ।
मणिकर्णिकायै नम इति ॥
तारेण पुटितश्चायं मन्त्रः पञ्चदशाक्षरः ।
अयं मन्त्रोऽनिशं जप्यः पुंभिर्मुक्तिमभीप्सुभिः । इति ।

प्रकारान्तरं वा—

तारस्तारतृतीयो बिन्द्वन्तो मणिपदं ततः ।

कर्णिके प्रणवात्मिपदं के नम इति मनुसंख्यवर्णमनुः । तारः प्रणवस्तारस्य तृतीयाक्षरं मकारो बिन्द्वन्तः सानुस्वारः । तथा चैवं मन्त्रः—'ॐ मं मणिकर्णिके प्रणवात्मिके नमः' इति । अयं मन्त्रोऽनिशं जप्यः पुंभिर्मुक्तिमभीप्सुभिः ।

अत्र पुंभिरित्युक्तेः स्त्रीणामनधिकार इति कश्चित् ।
होमो दशांशतः कार्यः श्रद्धाबद्धादरैर्नृभिः ॥

---

१ ऐं । २ ह्रीं ३ श्रीं ४ क्लीं ५ ॐ ६ प्रणवानन्तरं मकारम् । ७ सानुस्वारम् । ८ नमः-शब्दयुतः ९ प्रणवाभ्यां संपुटितः ।

परिप्लुतैः पुण्डरीकैर्हव्येन हविषा स्फुटैः ।
सशर्करेण मेधावी सक्षौद्रेण सदा शुचिः ॥
त्रिलक्षमन्त्रजप्येन मृतो देशान्तरेष्वपि ।
अवश्यं मुक्तिमाप्नोति मन्त्रस्यास्य प्रभावतः ॥
सौवर्णी प्रतिमा कार्या नवरत्नसमन्विता ।
पूर्वोक्तरूपसंपन्ना संपूज्या सा प्रयत्नतः ॥
संपूज्या वा सदा गेहे नरैर्मोक्षैककाङ्क्षिभिः ।
मणिकर्ण्यामथो क्षेप्या समभ्यर्च्य प्रयत्नतः ॥
संसारभीरुभिः पुंभिः श्रद्धाबद्धादरैरिह ।
उपायः समनुष्ठेयो ह्यपि दूरनिवासिभिः ॥
मणिकर्णीश्वरं लिङ्गं पुरा संस्थापितं मया ।
प्राग्द्वारेऽन्तर्गृहस्यात्र समर्च्यं मोक्षकाङ्क्षिभिः ॥

मणिकर्णिकाशब्दव्युत्पत्तिश्च काशीखण्डे प्रकारद्वयेन—

संसारिचिन्तामणिरत्र यस्मात्तं तारकं सज्जनकर्णिकायाम् ।
शिवोऽभिधत्ते सहसाऽन्तकाले तद्गीयतेऽसौ मणिकर्णिकेति ।
मुक्तिलक्ष्मीमहापीठमणिस्तच्चरणाब्जयोः ॥
कर्णिकेयं ततः प्राहुर्यां जना मणिकर्णिकाम् ।

संसारीति शिववशेषणम् । मुक्तिलक्ष्मीमहापीठेषु मुक्तिस्थानेषु मध्ये मणिः श्रेष्ठा तस्या मोक्षलक्ष्म्याश्चरणकमलयोश्च कर्णिका यतस्तेन मणिश्चासौ कर्णिका चेति व्युत्पत्त्या मणिकर्णिकेति द्वितीयपद्यार्थः ।

अथ ज्ञानवापी । स्कान्दे—

स्कन्दज्ञानोदतीर्थस्य माहात्म्यं वद सांप्रतम् ।
ज्ञानवापीं प्रशंसन्ति यतः स्वर्गौकसोऽप्यलम् ॥

स्कन्द उवाच—

कदाचित्काशीं प्रत्यागतेनेशानेन विश्वेश्वरलिङ्गे दृष्टे—

तस्येशानस्य तल्लिङ्गं दृष्ट्वेच्छेत्यभवत्तदा ।
स्नापयामि महालिङ्गं कलशीशीतलैर्जलैः ॥
चखान च त्रिशूलेन दक्षिणाशोपकण्ठतः ।
कुण्डं प्रचण्डं वेगेन रुद्रो रुद्रवपुर्धरः ॥
पृथिव्यावरणाम्भांसि निष्क्रान्तानि तदा मुने ।
ततस्तैः स्नपयांचक्रे त्वस्पृष्टैरन्यदेहिभिः ॥

ततो विश्वेशे वरदानायोद्यत ईशान उवाच—

यदि प्रसन्नो देवेशो वरयोग्योऽस्म्यहं यदि ।
तदेतदतुलं तीर्थं तव नाम्नाऽस्तु शंकर ॥

विश्वेश्वर उवाच—

त्रिलोक्यां यानि तीर्थानि भूर्भुवःस्वःस्थितान्यपि ।
तेभ्योऽखिलेभ्यस्तीर्थेभ्यः शिवतीर्थमिदं परम् ॥
शिवं ज्ञानमिति प्राहुः शिवशब्दार्थचिन्तकाः ।
तच्च ज्ञानं द्रवीभूतमिह मे महिमोदयात् ॥
अतो ज्ञानोदनामैतत्तीर्थं त्रैलोक्यविश्रुतम् ।
अस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥
ज्ञानोदतीर्थसंस्पर्शादश्वमेधफलं लभेत् ।
स्पर्शनाचमनाभ्यां च राजसूयाश्वमेधयोः ॥

तथा—यत्फलं समवाप्नोति पितॄन्संतर्प्य पुष्करे ।
तत्फलं कोटिगुणितं ज्ञानतीर्थे तिलोदकैः ॥
संनिहत्यां कुरुक्षेत्रे राहुग्रस्ते दिवाकरे ।
यत्फलं पिण्डदानेन तज्ज्ञानोदे दिने दिने ॥

तथा—उपास्य संध्यां ज्ञानोदे यत्पापं काललोपजम् ।
क्षणेन तदपाकृत्य ज्ञानवाञ्जायते द्विजः ॥

तथा डाकिन्यादीन्प्रक्रम्य—

सर्वे ते प्रशमं यान्ति शिवतीर्थजलोक्षणात् ।
ज्ञानोदतीर्थपानीयैर्लिङ्गं यः स्नापयेत्सुधीः ॥
सर्वतीर्थोदकैस्तेन ध्रुवं संस्नापितं भवेत् ।
ज्ञानरूपोऽहमेवात्र द्रवमूर्तिं विधाय च ॥
जाड्यविध्वंसनं कुर्यां कुर्यां ज्ञानोपदेशनम् ।
योऽष्टमूर्तिर्महादेवः पुराणे परिपठ्यते ॥
तस्यैषाऽम्बुमयी मूर्तिर्ज्ञानदा ज्ञानवापिका ।

तथा—जलक्रीडां सदा कुर्यां ज्ञानवाप्यां सहोमया ।
यदम्बुपानमात्रेण ज्ञानं जायेत निर्मलम् ॥
तज्जलक्रीडनस्थानं मम प्रीतिकरं महत् ।
अमुष्मिन्राजसदने जाड्यहृज्जलपूरितम् ॥

शिवपुराणे—

वापीजलं तु तत्रस्थं देवदेवस्य संनिधौ ।
दर्शनात्स्पर्शनात्स्नानात्तत्र धर्मस्य संभवः ॥

पाद्मे—वापी तत्रास्ति वैदेहचिन्मयी देवदक्षिणे ।
तदपां सेवनादेव भासते ब्रह्म केवलम् ॥

देवदक्षिण इति । देवशब्दो देवालयपरस्तेन देवालयाद्दक्षि[णे] इत्यर्थः । देवाद्दक्षिणदिशीति वा । देवस्य पश्चिमाभिमुखतया यथाश्रु[त]बाधात् ।

लैङ्गे—देवस्य दक्षिणे भागे वापी तिष्ठति शोभना ।
तस्यास्तथोदकं पीत्वा पुनर्जन्म न विद्यते ॥
पीतमात्रेण तेनैव उदकेन यशस्विनि ।
त्रीणि लिङ्गानि वर्धन्ते हृदये पुरुषस्य तु ॥
दण्डपाणिस्तु तत्रस्थो रक्षते तज्जलं सदा ।
पश्चिमं तीरमासाद्य देवदेवस्य शासनात् ॥
पूर्वेण तारको देवो जलं रक्षति सर्वदा ।
नन्दीशश्चोत्तरेणैव महाकालस्तु दक्षिणे ॥
रक्षते तज्जलं नित्यमभक्तानां तु मोहनम् ।

विष्णुरुवाच—

ममापि सा परा देवी तनुरापोमयी शुभा ।
अप्राप्या दुर्लभा देवैर्मानवैरकृतात्मभिः ॥
येस्तु तत्र जलं पीतं कृतार्थास्ते तु मानवाः ।
तेषां तु तारकं ज्ञानमुत्पत्स्यति न संशयः ॥
वापीजले नरः स्नात्वा दृष्ट्वा वै दण्डनायकम् ।
अविमुक्तं ततो दृष्ट्वा कैवल्यं लभते क्षणात् ॥

देवस्य दक्षिण इति पूर्ववद्व्याख्येयम् ।

अथ पञ्चनदबिन्दुमाधवयोर्माहिमा—

काशीखण्ड एकोनषष्टितमेऽध्याये पञ्चनदोत्पत्तिर्ज्ञेया ।

तथा—एतत्पञ्चनदं तीर्थं पञ्चब्रह्मात्मसंज्ञकम् ।
यत्र स्नातो न गृह्णीयाच्छरीरं पाञ्चभौतिकम् ॥

तथा—आदौ धर्मनदः पुण्यो मिश्रितो धूतपापया।
यया धूतानि पापानि सर्वतीर्थीकृतात्मना॥
ततोऽपि मिलिताऽऽगत्य किरणा रविणैधिता।
यन्नामस्मरणादेव महामोहोऽन्ततो व्रजेत्॥
ततो भागीरथी प्राप्ता तेन दैलीपिना सह।
किरणा धूतपापा च पुण्यतीर्था सरस्वती॥
गङ्गा च यमुना चैव पञ्चनद्यः प्रकीर्तिताः।
अतः पञ्चनदं नाम तीर्थं त्रैलोक्यविश्रुतम्॥
यत्राऽऽप्लुतो न गृह्णीयाद्देहं ना पाञ्चभौतिकम्।

ना मनुष्यः।

तथा—तीर्थानि सन्ति भूयांसि काश्यामत्र पदे पदे।
न पञ्चनदतीर्थस्य कोट्यंशेन समान्यपि॥
प्रयागे माघमासे तु सम्यक्स्नातस्य यत्फलम्।
तत्फलं स्याद्दिनैकेन काश्यां पञ्चनदे ध्रुवम्॥
स्नात्वा पञ्चनदे तीर्थे कृत्वा च पितृतर्पणम्।
बिन्दुमाधवमभ्यर्च्य न भूयो जन्मभाग्भवेत्॥
यावत्संख्यास्तिला दत्ताः पितृभ्यो जलतर्पणे।
पुण्ये पञ्चनदे तीर्थे तृप्तिः स्यात्तावदाब्दिकी॥
श्रद्धया यैः कृतं श्राद्धं तीर्थे पञ्चनदे शुभे।
तेषां पितामहा मुक्ता नानायोनिगता अपि॥
तथा—तत्र पञ्चनदे तीर्थे यत्किंचिद्दीयते वसु।
कल्पक्षयेऽपि न भवेत्तस्य पुण्यस्य संक्षयः॥
तथा—जलैः पाञ्चनदैः पुण्यैर्वाससा परिशोधितैः।
महाफलमवाप्नोति स्नपयित्वेष्टदेवताम्॥
तथा—राजसूयाश्वमेधौ च भवेतां स्वर्गसाधनम्।
आब्रह्मघटिकाद्वन्द्वं मुक्त्यै पाञ्चनदाप्लुतिः॥

तृतीयपादस्य पूर्वार्धेऽन्वयः।

तथा—कृते धर्मनदं नाम त्रेतायां धूतपापकम्।
द्वापरे बिन्दुतीर्थं च कलौ पञ्चनदं स्मृतम्॥

इत्याद्येकोनषष्टितमेऽध्याये।

तथा—श्रीबिन्दुमाधवस्त्वेष साक्षाल्लक्ष्मीपतिः परः ।
श्रद्धया यं नमन्मर्त्यो न विशेद्गर्भवेश्मनि ॥
न दारिद्र्यमवाप्नोति व्याधिभिर्नाभिभूयते ।
बिन्दुमाधवभक्तो यस्तं यमोऽपि नमस्यति ॥
प्रणवात्मा य एकोऽस्ति नादबिन्दुस्वरूपधृत् ।
अमूर्तं यत्परं ब्रह्म बिन्दुमाधव एव सः ॥

तथा—भापते मम नाम्नाऽत्र तीर्थे पञ्चनदे शुभे ।
अभक्तेभ्योऽपि भक्तेभ्यः स्थितो मुक्तिं सदा दिश ॥

इत्यादिष्वग्निबिन्दुना वरेषु प्रार्थितेषु विष्णुः—
त्वन्नाम्नोऽर्धेन मे नाम मया सह भविष्यति ।
बिन्दुमाधव इत्याख्या मम त्रैलोक्यविश्रुता ॥
काश्यां भविष्यति मुने महापापौघनाशिनी ।
ये मामत्र नराः पुण्याः पुण्ये पञ्चनदे ह्रदे ॥
सदा समर्चयिष्यन्ति तेषां संसारभीः कुतः । इत्यादि ।
बिन्दुतीर्थमिदं नाम तव नाम्ना भविष्यति ॥ इति च ।
बिन्दुमाधवनामानं यो मामत्र समर्चयेत् ।
बिन्दुतीर्थकृतस्नानो निर्वाणं स हि विन्दति ॥

तथा—सर्वदा यत्र सर्वाणि दशम्यादिदिनत्रयम् ।
तिष्ठन्ति तीर्थवर्याणि निजनैर्मल्यहेतवे ॥

तथा कार्तिके विशेषः—

अप्येकं कार्तिकस्याहस्तत्र यैः सफलीकृतम् ।
जपहोमार्चनादानैः कृतकृत्यास्त एव हि ॥ इत्यादि ।

तथा—यैर्न पञ्चनदे स्नातं कार्तिके पापहारिणि ।
तेऽद्यापि गर्भे तिष्ठन्ति पुनस्ते गर्भवासिनः ॥

तथा—शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलम् ।
तत्कार्तिके पञ्चनदे सकृत्स्नानेन लभ्यते ॥
इष्टापूर्तेषु धर्मेषु यावज्जन्मकृतेषु यत् ।
अन्यत्र स्यात्फलं तत्स्यादूर्जे धर्मनदाप्लवात् ॥
गोभूतिलहिरण्याश्ववासोऽन्नस्रग्विभूषणम् ।
यत्किंचिद्बिन्दुतीर्थेऽत्र दत्त्वाऽक्षय्यमवाप्नुयात् ॥

एकामप्याहुतिं दत्त्वा समिद्धेऽग्नौ विधानतः ।
पुण्ये धर्मनदे तीर्थे कोटिहोमफलं लभेत् ॥ इत्यादि ।
कार्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः ।
स्नास्यत्यनुदिते भानौ भानुजात्तस्य भीः कुतः ॥

भानुजाद्यमात् । कार्तिकव्रतानि च षष्टितमेऽध्याये ज्ञेयानि ।

तथा—यं संचयति पापौघमावर्षं तीर्थनायकः ।
तमेकमज्जनादूर्जे त्यजेत्पञ्चनदे ध्रुवम् ॥

अत्र यद्यपि प्रयागस्य यथाश्रुतपापनाशः काशीप्रवेशादेव संभाव्यते पापवासना तु फलबलकल्प्या प्रयागस्य पापप्रवृत्तिरूपफलाभावान्न कल्पयितुं शक्या । न च प्राणिनां पापं प्रयागे संक्रामति किंतु तेन नाश्यते । न च तस्य मज्जनसंभवः । प्रयागाभिमानिदेवतायास्तत्संभवेऽपि वा न तस्या मज्जनात्पापनाशसंभवो मनुष्याधिकारित्वाच्छास्त्रस्य । तथाऽपि शास्त्रदृष्टविरोधात्प्रजापतिवपोत्खननादिवदर्थवादतया स्वार्थे तात्पर्याभावान्न कश्चिद्दोषलेशः ।

प्रयागश्चापि तीर्थेन्द्रः सर्वतीर्थार्पितं मलम् ।
महाघिनां महाघं च हरेत्पाञ्चनदाज्जलात् ॥

इत्यादिवचनेष्वप्येषैव गतिः ।

तथा—वाराणस्यां पञ्चनदे त्र्यहं स्नातास्तु कार्तिके ।
अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः ॥

इत्यादीनि त्र्यहपराण्यपि वचनानि । कार्तिकस्नानविधिं मासकृत्येषु वक्ष्यामः । इति पञ्चनदमहिमा ।

अथ गभस्तीशादयः ॥ लिङ्गपुराणे—

नरः पञ्चनदे स्नात्वा दृष्ट्वा लिङ्गं गभस्तिनः ।
अनन्तं फलमाप्नोति यत्र यत्राभिजायते ॥

काशीखण्डे रविं प्रति शिवः—

त्वया प्रतिष्ठितं लिङ्गं गभस्तीश्वरसंज्ञकम् ।
सेवितं सर्वभावेन सर्वसिद्धिसमर्पकम् ॥
अर्चयित्वा गभस्तीशं स्नात्वा पञ्चनदे नरः ।
न जातु जायते मातुर्जठरे धूतकल्मषः ॥

लैङ्गे—अन्यदायतनं देवि वाराणस्यां विमुक्तिदम् ।
गभस्तीश्वरनामानं लिङ्गं पश्चान्मुखं स्थितम् ॥
सूर्येण स्थापितं भद्रे मम भक्तिपरेण वै ।
तं दृष्ट्वा मानवो देवि ऐशानं लोकमाप्नुयात् ॥

तथा मङ्गलागौरीं प्रकृत्य—
ये च त्वां पूजयिष्यन्ति तस्मिन्स्थाने स्थितो ह्यहम् ।
तेषां त्वं विविधाँल्लोकान्संप्रदास्यसि मानदे ॥
जागरं ये प्रकुर्वन्ति तवाग्रे दीपधारिणः ।
तेषां त्वमक्षयाँल्लोकान्वितरिष्यसि भामिनि ॥

तथा—त्वामुद्दिश्य तु यो देवि ब्राह्मणान्ब्राह्मणीः सह ।
भोजयिष्यति देवेशि तस्य पुण्यफलं शृणु ॥
तव लोके वसेत्कल्पमिहैवाऽऽगच्छते पुनः ।
नरो वा यदि वा नारी सर्वभोगसमन्वितौ ॥
धनधान्यसमायुक्तौ जायेते च महाकुले । इत्यादि ।

ब्राह्मणीसहितब्राह्मणभोजनं दंपतिभोजनम् । काशीखण्डे—
एषाऽसौ मङ्गला गौरी काश्यां परममङ्गलम् ।
यत्प्रसादादवाप्नोति नरोऽत्र च परत्र च ॥

मङ्गलाष्टकस्तोत्रं चैकोनपञ्चाशेऽध्याये ज्ञेयम् ।

तथा—वन्ध्याऽपि वर्षपर्यन्तं स्नात्वा पञ्चनदे ह्रदे ।
समर्च्य मङ्गलां गौरीं पुत्रं जनयति ध्रुवम् ॥
तत्र वै मङ्गलापीठे सर्वमङ्गलदायिनि ।
उपपञ्चनदं तीर्थं भक्तान्संतारयाम्यहम् ॥

तथा दक्षं प्रति भवः—
यत्त्वया स्थापितं लिङ्गमेतद्दक्षेश्वराभिधम् ।
अस्य संसेवनात्पुंसामपराधसहस्रकम् ॥
क्षमिष्येऽहं न संदेहस्तस्मात्पूज्यमिदं जनैः ।

तथा—अग्नीश्वरस्य भक्तानां न भयं विद्युदाग्निजम् ।
अग्निमान्द्यभयं नैव नाकालमरणं क्वचित् ॥
अग्नीश्वरं समभ्यर्च्य काश्यां सर्वसमृद्धिदम् ।
अन्यत्रापि मृतो दैवादग्निलोके महीयते ॥

ततः काशीं समासाद्य कल्पान्ते मोक्षमाप्नुयात् ।
वीरेश्वरस्य पूर्वेण गङ्गायाः पश्चिमे तटे ॥
अग्नीश्वरं समासाद्य पितृलोके वसेन्नरः ।

अथ वीरेशः । ब्रह्मवैवर्ते—

वीरेश्वरं महालिङ्गं चतुर्वर्गफलप्रदम् ।
सर्वसिद्धिप्रदं नृणामशुभध्वान्तनाशनम् ॥

काशीखण्डे—

सिद्धैः संसेवितं लिङ्गं सर्वसिद्धिकरं परम् ।
दर्शनात्स्पर्शनाद्यस्य मनो निर्वृतिभाग्भवेत् ॥
पाश्वमुद्रे महापीठे सिद्धिदे सर्वजन्तुषु ।
यत्र सा विकटा देवी प्रसिद्धा सिद्धरूपिणी ॥
तिलान्तराऽपि नो काश्यां भूमिर्लिङ्गं विना क्वचित् ।
परं वीरेशसदृशं न लिङ्गं त्वाशुसिद्धिदम् ॥
धर्मदं मोक्षदं सम्यक्कामदं सुखदं तथा ।
यथा वीरेश्वरं लिङ्गं काश्यां नान्यत्तथा ध्रुवम् ॥
असंख्याताः सहस्राणि सिद्धाः सिद्धिमिहाऽऽगताः ।
सिद्धलिङ्गमिदं ख्यातं तस्माद्वीरेश्वरं परम् ॥

लैङ्गे—चन्द्रेश्वरस्य पूर्वेण लिङ्गं वीरेश्वरं शुभम् ।
लभेद्विद्याधरं लोकं तस्य लिङ्गस्य दर्शनात् ॥

तथा—पाश्वमुद्रे महापीठे ये वीरेश्वरसेवकाः ।
तेषां परमनिर्वाणं कालेनाल्पेन जायते ॥
वीरतीर्थे नरः स्नात्वा वीरेशं परिपूज्य च ।
तीर्थेष्वेतेषु सर्वेषु स्नातो भवति नान्यथा ॥
यस्तु वीरेश्वरं लिङ्गं नक्तमभ्यर्चयिष्यति ।
तेन त्रिकोटिसंख्यानि लिङ्गानीहार्चितानि वै ॥
एकामप्याहुतिं दत्त्वा वीरेश्वरसमीपतः ।
कोटिहोमफलं सम्यङ्नात्र कार्या विचारणा ॥
अप्येकं यो महारुद्रं जपेद्वीरेशसंनिधौ ।
जापयेद्वा भवेत्तस्य कोटिरुद्रफलं ध्रुवम् ॥
व्रतोत्सर्गादि वीरेशे यत्कृतं व्रतिभिर्नृभिः ।
तत्कोटिगुणसंख्याकं भवत्येव न संशयः ॥

इत्यादि काशीखण्डे त्र्यशीतितमेऽध्याये ।

तथा—पञ्चमुद्रामहापीठे विकटा नाम मातृका ।
यस्याः संसेवनान्नृणां निर्वाणश्रीरदूरतः ॥
सर्वत्र शुभजन्मिन्यां काश्यां मुक्तिः पदे पदे ।
तथाऽपि सविशेषं हि तत्पीठं सर्वसिद्धिकृत् ॥

ब्रह्मपुराणे—पञ्चमुद्रे महापीठे वीरेश्वरसमीपतः ।
विकटाख्या महादेवी पूजनीया हितेप्सुभिः ॥

लैङ्गे हरिश्चन्द्रेश्वरं प्रकृत्य—
यत्र सिद्धो महात्मा वै हरिश्चन्द्रो महाबलः ।
तं दृष्ट्वा मानवो देवि रुद्रस्य पदमाप्नुयात् ॥
पूर्वामुखं तु तल्लिङ्गं स्वर्लोकस्य प्रदायकम् ।
मोक्षेश्वरं च तत्रैव स्वर्गेश्वरमतः परम् ॥
एतौ दृष्ट्वा सुरेशानि स्वर्गं मोक्षं च विन्दति ।
वासुकीश्वरनामानं तयोश्चोत्तरतः शुभम् ॥

स्कान्दे—चन्द्रेश्वरं समभ्यर्च्य यद्यन्यत्रापि संस्थितः ।
अघौघपटलं भित्त्वा सोमलोकमवाप्स्यति ॥
कलौ चन्द्रेशमहिमा नामाग्यैरिह गम्यते ।
सिद्धयोगी(गे)श्वरीपीठमेतत्साधकसिद्धिदम् ॥
षण्मासं नियताहारो ध्यायन्विश्वेश्वरीमिह ।
चन्द्रेश्वरार्चनायातान्सिद्धान्पश्यति सोऽग्रगान् ॥
सिद्धयोगेश्वरी साक्षाद्वरदा तस्य जायते ।
सन्ति पीठान्यनेकानि क्षितौ साधकसिद्धये ॥
परं योगेश्वरीपीठाद्भूपृष्ठे नाऽऽशु सिद्धिदम् ।
यत्र चन्द्रेश्वरं लिङ्गं त्वयेदं स्थापितं शशिन् ।
इदमेव हि तत्पीठमदृश्यमकृतात्मभिः ॥

ब्रह्मवैवर्ते—
चन्द्रेश्वरं चन्द्रकान्तिमणिप्रभमनामयम् ।
अज्ञानध्वान्तशमनं दृष्टं काश्यां चिदात्मकम् ॥

तथा मत्स्यः—बृहस्पतीश्वरं लिङ्गं मया गोप्यं कलौ युगे ।
अस्य संदर्शनादेव प्रतिमा प्रतिलभ्यते ॥

चन्द्रेश्वराद्दक्षिणतो वीरेशान्नैर्ऋते स्थितम् ।
अ(आ)राध्य धिषणेशं वै गुरुलोके महीयते ॥

तथा—चन्द्रेश्वरात्पूर्वभागे दृष्ट्वा लिङ्गं बुधेश्वरम् ।
न बुद्ध्या हीयते जन्तुरन्तकालेऽपि जातुचित् ॥

कम्बलाश्वतरेश्वरोत्तरेऽङ्गारेश्वरो विज्ञेयः ।

तथा—स्वर्गद्वारे विशेयुर्ये विगाह्य मणिकर्णिकाम् ।
तेषां विधूतपापानां क्वापि स्वर्गो न दूरतः ॥
स्वर्गद्वाः स्वर्गभूरेषा मोक्षभूर्मणिकर्णिका ।
स्वर्गापवर्गावत्रैव नोपरिष्टान्न चाप्यधः ॥
दत्त्वा दानान्यनेकानि विगाह्य मणिकर्णिकाम् ।
स्वर्गद्वारं प्रविष्टा ये न ते निरयगामिणः ॥

तथा—एतदेव रहस्यं ते वाराणस्या उदीर्यते ।
उत्क्षिप्यैकाङ्गुलिं तथ्यं श्रेष्ठैका मणिकर्णिका ॥

तथा—विश्राणितमहादानास्त एव नरपुङ्गव ।
चरमे वयसि प्राप्ता यैरेषा मणिकर्णिका ॥

इत्याद्येकषष्टितमेऽध्याये ।

तथा—जप्त्वैकामपि गायत्रीं संप्राप्य मणिकर्णिकाम् ।
लभेदयुतगायत्रीजपनस्य फलं स्फुटम् ॥
एकामप्याहुतिं प्राज्ञो दत्त्वोपमणिकर्णिकाम् ।
यावज्जीवाग्निहोत्रस्य लभेदविकलं फलम् ॥

तथा—मणिकर्ण्यां कृतस्नानो मणिकर्णीशवीक्षणात् ।
जननीजठरावासे वसतिं न लभेन्नरः ॥

तथा तत्रैव—

ब्रह्मनालं परं तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्संगमे नरः स्नात्वा कोटिजन्मफलं लभेत् ॥
ब्रह्मनाले पतेद्येषामपि कीकसमात्रकम् ।
ब्रह्माण्डमण्डपान्तस्ते न विशन्ति कदाचन ॥

तथा—प्रभासतीर्थं विख्यातं ततोऽपि शुभदं नृणाम् ।
सोमेश्वरस्य पुरतस्तत्र स्नातो न गर्भभाक् ॥
जरासंधेशतीर्थं च जरासंधेशसंनिधौ ।
संसारज्वरपीडाभिस्तत्र स्नातो न मुह्यति ॥

विशालतीर्थं विमलं विशालफलदं ततः ।
तत्र स्नातो विशालाक्षीं दृष्ट्वा गर्भे न जायते ॥
तथा—वाराणस्यां विशालाक्षी क्षेत्रस्य परमेष्टदा ।
विशालतीर्थं गङ्गायां कृत्वा पृष्ठे व्यवस्थिता ॥
स्नात्वा विशालतीर्थे वै विशालाक्षीं प्रणम्य च ।
विशालां लभते लक्ष्मीं परत्रेह च शर्मदाम् ॥
इत्यादि सप्ततितमेऽध्याये ।
ततोऽन्यल्ललितातीर्थं गङ्गाकेशवसंनिधौ ।
तत्रास्ति ललिता गौरी क्षेत्ररक्षाकरी परा ॥
सा च पूज्या प्रयत्नेन सर्वसंपत्समृद्धये ।
ललितापूजकानां च जातु विघ्नो न जायते ॥
अन्याऽस्ति काश्यां वाराही क्रतुवाराहसंनिधौ ।
तां प्रणम्य नरो भक्त्या विपदब्धौ न मज्जति ॥
चित्रकूपे नरः स्नात्वा विचित्रफलदे नृणाम् ।
चित्रगुप्तेश्वरं वीक्ष्य चित्रघण्टां प्रणम्य च ॥
न चित्रगुप्तलेख्यः स्याच्चित्रघण्टार्चको नरः ।
सन्ति पीठान्यनेकानि काश्यां सिद्धिप्रदान्यपि ॥
महालक्ष्मीपीठसमं नान्यल्लक्ष्मीकरं परम् ।
स्नात्वा श्रीकुण्डतीर्थे तु समर्च्य जगदम्बिका ॥
दत्त्वा दानानि विधिवन्न लक्ष्म्या परिमुच्यते ।
भीमचण्डीं नरो दृष्ट्वा भीमकुण्डे कृतोदकः ॥
भीमाकृतीन्न वै पश्येद्यामान्दूतीन्क्वचित्कृती ।
तथा काशीखण्डे—
उदग्दशाश्वमेधानां प्रयागाख्यं च माधवम् ।
प्रयागतीर्थेषु स्नातो दृष्ट्वा पापैः प्रमुच्यते ॥
तथा—गङ्गोत्तरवहा यत्र यमुना पूर्ववाहिनी ।
तत्संभेदं नरः प्राप्य मुच्यते ब्रह्महत्यया ॥
वपनं तत्र कर्तव्यं पिण्डदानं च भावतः ।
देयानि तत्र दानानि महाफलमभीप्सुना ॥
प्रयागेशं महालिङ्गं तत्र तिष्ठति कामदम् ।
तत्सांनिध्याच्च तत्तीर्थं कामदं परिकीर्तितम् ॥

तथा——प्रयागतीर्थे सुस्नातो जनो निगडभञ्जनीम् ।
समाजयित्वा नो जातु निगडैः परिबाध्यते ॥

तथा——बन्दीतीर्थं तु तत्रैव महानिगडखण्डनम् ।
यत्र स्नातो विमुच्येत सर्वस्मात्कर्मपाशतः ॥

तथा—क्षोणीवराहतीर्थं च ततोऽपि शुभदं वरम् ।
तत्र स्नातो नरो जातु तिर्यग्योनिं न गच्छति ॥

तथा—मुने धरणिवाराहः प्रयागेश्वरसंनिधौ ।
स्नात्वा वराहतीर्थेऽत्र दृष्ट्वा मां किणरूपिणम् ।
संपूज्य बहुभावेन न विशेद्योनिसंकटम् ।

किणो वराहः । तथा काशीखण्ड एव—
दशाश्वमेधिकं तीर्थमेतत्त्रैलोक्यविश्रुतम् ।
यत्राऽऽहुतित्रयेणापि अग्निहोत्रफलं लभेत् ॥
प्रयागाख्यमिदं स्रोतः सर्वतीर्थोत्तमोत्तमम् ।

तथा—असौ वन्दी महादेवी नित्यं त्रैलोक्यवन्दिता ।
निगडस्थानपि जनान्पाशान्मोचयति स्मृता ।

तथा पञ्चभूरिति प्रक्रम्य—
इयाज दशभिः काश्यामश्वमेधैर्महामखैः ।
पुरा रुद्रसरो नाम तत्तीर्थं कलशोद्भव ॥
दशाश्वमेधिकं पश्चाज्जातं विधिपरिग्रहात् ।
स्वर्धुन्यथ ततः प्राप्ता भगीरथसमागमात् ॥
अतीव पुण्यवज्जातमतस्तत्तीर्थमुत्तमम् ।

तथा—दशाश्वमेधिकं प्राप्य सर्वतीर्थोत्तमोत्तमम् ।
यत्किंचित्क्रियते कर्म तदक्षयमिहेरितम् ॥

तथा—दशाश्वमेधिके तीर्थे सकृत्स्नात्वा नरोत्तमः ।
दृष्ट्वा दशाश्वमेधेशं सर्वपापैः प्रमुच्यते ॥ इत्यादि ।
इति दशाश्वमेधमहिमा ।

अथ योगिन्युद्देशः—
नामधेयानि वक्ष्यामि योगिनीनां घटोद्भव ।
आकर्ण्य यानि पापानि क्षयन्ति भाविनां क्षणात् ॥

गजानना सिंहमुखी गृध्रास्या काकतुण्डिका ।
उष्ट्रग्रीवा हयग्रीवा वाराही शरभानना ॥
उलूकिका शिवारावा मयूरा विकटानना ।
अष्टवक्त्रा कोटराक्षी कुब्जा विकटलोचना ॥
शुष्कोदरी ललज्जिह्वा श्वदंष्ट्रा वानरानना ।
ऋक्षाक्षी केकराक्षी च बृहत्तुण्डा सुराप्रिया ॥
कपालहस्ता रक्ताक्षी शुकी श्येनी कपोतिका ।
पाशहस्ता दण्डहस्ता प्रचण्डा चण्डविक्रमा ॥
शिशुघ्नी पापहन्त्री च काली रुधिरपायिनी ।
वसाधया गर्भभक्षा शवहस्ताऽन्त्रमालिनी ॥
स्थूलकेशी बृहत्कुक्षीः(क्षिः) सर्पास्या प्रेतवाहना ।
दन्दशूककरा क्रौञ्ची मृगशीर्षा वृषानना ॥
व्यात्तास्या धूमनिश्वासा व्योमैकचरणोर्ध्वदृक् ।
तापनी शोषणी दृष्टिः कोटरी स्थूलनासिका ॥
विद्युत्प्रभा बलाकास्या मार्जारी कण्ठपूतना ।
अट्टाट्टहासा कामाक्षी मृगाक्षी मृगलोचना ॥
नामानीमानि यो मर्त्यश्चतुःषष्टिं दिने दिने ।
जपेत्त्रिसंध्यं तस्येह दुष्टबाधा प्रशाम्यति ॥

इत्यादि फलश्रुतिः पञ्चचत्वारिंशेऽध्याये ।

अग्रे कृत्वा स्थिताः सर्वास्ताः काश्यां मणिकर्णिकाम् ।
तन्नमस्कारमात्रेण नरो विघ्नैर्न बाध्यते ॥

लैङ्गेऽम्बराशेश्वरं प्रकृत्य—

तस्यैव दक्षिणे भागे लोलार्को नाम *विश्रुतः ।
तस्य दर्शनमात्रेण सूर्यलोकमवाप्नुयात् ॥
लोलार्कात्पश्चिमे भागे दुर्गा देवी च तिष्ठति ।
मानवानां हितार्थाय कूटे क्षेत्रस्य दक्षिणे ॥

तथा स्थाणावीशं प्रकृत्य—

तदग्रे संनिहत्याख्या महापुष्करिणी शुभा ।
लोलार्कात्पश्चिमे भागे कुरुक्षेत्रस्थली तु सा ॥

---

* विक्रमः ।

तत्र स्नातं हुतं जप्तं वृत्तं चैव शुभार्थिभिः ।
कुरुक्षेत्राद्भवेत्सत्यं कोटिकोटिगुणाधिकम् ॥

तथाऽन्यत्र—

वाराणस्या दक्षिणतः कुक्कुटो नाम वै द्विजः ।
तस्य स्मरणमात्रेणाशकुनः शकुनं भवेत् ॥

काशीखण्डे—

सिद्धकुण्डे नरः स्नात्वा दृष्ट्वा सिद्धेश्वरं महत् ।
सर्वासामेव सिद्धीनां पारं गच्छति मानवः ॥

लैङ्गे—शुक्रेश्वराच्चोत्तरेण लिङ्गं पश्चान्मुखं स्थितम् ।
सिद्धेश्वरेतिनामानं *सिद्धस्य च तटे स्थितम् ॥
तत्र कुण्डे नरः स्नात्वा दृष्ट्वा सिद्धेश्वरं च वै ।
सर्वासामेव सिद्धीनां पारं गच्छति मानवः ॥

काशीखण्डे—

दुर्गाकुण्डे नरः स्नात्वा सर्वदुर्गार्तिहारिणीम् ।
दुर्गां संपूज्य विधिवन्नवजन्माघमुत्सृजेत् ॥
सा दुर्गा शक्तिभिः सार्धं काशीं रक्षति सर्वतः ।
ताः प्रयत्नेन संपूज्याः कालरात्रिमुखा नरैः ॥
रक्षन्ति क्षेत्रमेतद्वै तथाऽन्या नव शक्तयः ।
उपसर्गसहस्रेभ्यस्ता वै दिग्देवताः क्रमात् ॥
शतनेत्रा सहस्रास्या तथाऽयुतभुजाऽपरा ।
अश्वारूढा गजास्या च त्वरिता शववाहिनी ॥
विश्वा सौभाग्यगौरी च सृष्टाः प्राच्यादिमध्यतः ।
एता यत्नेन संपूज्याः क्षेत्ररक्षणदेवताः ॥

वज्रपञ्जरसंज्ञं दुर्गास्तोत्रं द्विसप्ततितमेऽध्याये ज्ञेयम् ।

तथा—तीर्थान्तराणि सर्वाणि भूमीवलयगान्यपि ।
असिसंभेदतीर्थस्य कलां नार्हन्ति षोडशीम् ॥
सर्वेषामेव तीर्थानां स्नानाद्यल्लभते फलम् ।
तत्फलं सम्यगाप्येत नरैर्गङ्गासिसंगमे ॥

लैङ्गे—कूपे पाराशरे स्नात्वा सर्वं सर्वक्रतुफलं लभेत् । इत्यादि ।

---

* सिद्धेश्वरसमीपगम् ।

अथ केदाराः काशीखण्डे—

तुषाराद्रिं समारुह्य केदारं वीक्ष्य यत्फलम् ।
तत्फलं सप्तगुणितं काश्यां केदारदर्शने ॥
इदं तीर्थं हरं पापं सप्तजन्माघनाशनम् ।
गङ्गायां मिलितं पश्चाजन्मकोटिकृताघहम् ॥

पापं हरतीति हरं पापमिति च्छान्दसी केदारतीर्थस्य संज्ञा ।

सरसा मानसेनात्र पूर्वं तप्तं महत्तपः ।
अतस्तु मानसं तीर्थं जने ख्यातिमिदं गतम् ॥

तथा—केदारकुण्डे यः स्नात्वा पिण्डान्दास्यति चात्वरः ।
एकोत्तरशतं वंश्यास्तस्य तीर्णा भवाम्बुधिम् ॥

तथा—केदारं गन्तुकामस्य बुद्धिर्देया नरैरियम् ।
काश्यां स्पृशस्व केदारं कृतकृत्यो भविष्यसि ॥
आषण्मासं त्रिकालं यः केदारेशं नमस्यति ।
तं नमस्यन्ति सततं लोकपाला यमादयः ॥

इत्यादि सप्ततितमेऽध्याये । ब्रह्मवैवर्ते—

केदारेशं महालिङ्गं देहकेदारनाशनम् ।
केदारवित्तपुत्राद्या भवन्ति ध्वान्तभूमयः ॥

काशीसारोद्धारे शिवरहस्ये—

तस्य केदारनाथस्य श्रावणे सोमवासरे ।
पूजा कार्या विशेषेण साधनैर्विविधैः शुभैः ॥
सोमवारव्रतं कार्यं प्रयत्नेन यथाविधि ।
शक्तेनोपोषणं कार्यमन्यथा निशि भोजनम् ॥
तस्य दक्षिणदिग्भागे तिष्ठत्यर्कविनायकः ।
तस्मिन्नेव दिने सोऽपि पूजनीयः प्रयत्नतः ॥ इति ।
ज्ञानवाप्यां नरः स्नात्वा तारकेशं विलोक्य च ।
कृतसंध्यादिनियमः परितर्प्य पितामहान् ॥
धृतमौनव्रतो धीमान्यावल्लिङ्गविलोकनम् ।
मुच्यते सर्वपापेभ्यः पुण्यं प्राप्नोति शाश्वतम् ॥
प्रान्ते च तारकं ज्ञानं यस्माज्ज्ञानाद्विमुच्यते ।
मुनेऽन्यच्च महालिङ्गं करुणेश्वरसंज्ञितम् ॥

मोक्षद्वारसमीपे तु मोक्षद्वारेश्वराग्रतः ।
दर्शनात्तस्य लिङ्गस्य महाकारुणिकस्य वै ॥
न क्षेत्रान्निर्गमो जातु बहिर्भवति कस्यचित् ।
अमृतेश्वरनामेदं लिङ्गमानन्दकानने ॥
एतल्लिङ्गस्य संस्पर्शादमृतत्वं भवेद्ध्रुवम् ।

इदं स्वर्गद्वारसमीपे विश्वकर्मेशपार्वतीशौ नवतितमेऽध्याये । गङ्गेश्वरनर्मदेश्वरसतीश्वराः क्रमेणैकनवत्यादिषु त्रिष्वध्यायेषु विस्तरेणोक्ताः ॥

मोक्षद्वारेश्वरं चैव स्वर्गद्वारेश्वरं तथा ।
उभौ काश्यां नरो दृष्ट्वा स्वर्गं मोक्षं च विन्दति ॥
चक्रपुष्करिणीतीरे ज्योतीरूपेश्वरं परम् ।
समभ्यर्च्याऽऽप्नुयान्मर्त्यो ज्योतीरूपमसंशयम् ॥

इत्यादिसर्वं चतुर्नवतितमेऽध्याये ।

चन्द्रेश्वरस्य पूर्वेण लिङ्गं विद्येश्वराभिधम् ।
सर्वा विद्याः प्रसन्नाः स्युस्तस्य लिङ्गस्य सेवनात् ॥

ब्रह्मवैवर्ते—

मणिकर्णीश्वरं लिङ्गं मोक्षद्वारमपावृतम् ।
यस्य दर्शनतः सम्यङ्मणिकर्णी समाप्यते ॥

स्कान्दे—यत्काश्यां दक्षिणद्वारमन्तर्गेहस्य कीर्त्यते ।
तत्र ब्रह्मेश्वरं दृष्ट्वा ब्रह्मलोके महीयते ॥
गोकर्णेशं महालिङ्गमन्तर्गेहस्य पश्चिमे ।
द्वारे समर्च्य वै काश्यां न विघ्नैरभिभूयते ॥
भारभूतेश्वरं लिङ्गं भारभूतगणार्चितम् ।
अन्तर्गेहोत्तरद्वारि ध्यात्वा शिवपुरे वसेत् ॥
अविमुक्तेश्वरात्पश्चान्मोक्षेशं वीक्ष्य मानवः ।
न पुनर्मानवे लोके यातायातं करोति हि ॥
त्रिसंध्येश्वरमालोक्य कृतसंध्यस्त्रिकालतः ।
त्रिवेदावर्तजं पुण्यं प्राप्नुयाच्छ्रद्धया द्विज ॥
गङ्गाकेशवसंज्ञं च सर्वपातकनाशनम् ।
तत्र मे शुभदां मूर्तिं मुने तत्तीर्थसंज्ञकम् ॥

संपूज्य श्रद्धया धीमान्मम लोके महीयते ।
तथा—शुक्रेश्वरस्य ये भक्ताः शुक्रलोके वसन्ति ते ।
विश्वेश्वराद्दक्षिणतः शुक्रेशोऽस्ति परंतप ॥
तस्य दर्शनमात्रेण शुक्रलोके महीयते ।
तथा—तव भक्ता भविष्यन्ति बहुशुक्रा बहुप्रजाः ।
तथा—ध्रुवेश्वरं समभ्यर्च्य ध्रुवकुण्डे कृतोदकः ।
ध्रुवलोकमवाप्नोति नरो भोगसमन्वितः ॥
तथाऽगस्त्यं प्रति स्कन्दः—
तव तत्र तु यत्कुण्डमगस्तीश्वरसंनिधौ ।
तत्र स्नात्वा च पीत्वा च कृतसर्वोदकक्रियः ॥
पितॄन्पिण्डैः समभ्यर्च्य श्रद्धाश्राद्धविधानतः ।
कृतकृत्यो भवेज्जन्तुर्वाराणस्याः फलं लभेत् ॥
ईशानेशं समभ्यर्च्य काश्यां देशान्तरेष्वपि ।
विपन्नास्तेन पुण्येन जायन्तेऽत्र पुरोहिताः ॥
अथ धर्मेशः । काशीखण्डे धर्मं प्रति वरप्रदाने शिवः—
त्वया यदेतन्मम भक्तिभाजा
लिङ्गं समाराधितमत्र धर्म ॥
तद्दर्शनस्पर्शनतोऽर्चनाच्च
सिद्धिर्भविष्यत्यचिरेण पुंसाम् ॥
धर्मेश्वरं यः सकृदेव मर्त्यो
विलोकयिष्यत्यवदातबुद्धिः ॥
स्नात्वा पुरस्तेऽत्र च धर्मतीर्थे
न तस्य दूरे पुरुषार्थसिद्धिः ॥
तथा—यो धर्मपीठं प्रतिलभ्य काश्यां
स्वश्रेयसे नो यततेऽत्र मर्त्यः ॥
कथं स धर्म त्वमिवातितेजाः
करिष्यति स्वं कृतकृत्यमेव ॥
तथा—यदत्र दास्यन्ति हि धर्मपीठे
नरा द्युनद्यां कृतमज्जनाश्च ॥
तदक्षयं भावि युगान्तरेष्वपि
कृतप्रणामास्तव धर्म लिङ्गे ॥

इत्याद्यष्टसप्तत्यध्याये ।

तथा—अनेकानीह पीठानि सन्ति काश्यां पदे पदे ।
परं धर्मेशपीठस्य काचिच्छक्तिरनुत्तमा ॥

इत्याद्येकोनाशीत्यध्यायेऽपि । ब्रह्मवैवर्ते—
धर्मेश्वरस्य ये भक्ता धर्मपूर्णा भवन्ति हि ।
काश्यां पापमतिस्तान्न बाधते धर्मवत्सलान् ॥

अथ धर्मकूपः—
यत्फलं तीर्थराजस्य स्नानेन परिकीर्त्यते ।
सहस्रगुणितं तत्स्याद्धर्माम्बुस्नानमात्रतः ॥

धर्माम्बु धर्मकूप इत्यादि ।

तथा—पिण्डप्रदानं यैरत्र विधिवत्तु कृतं भवेत् ॥
न गयागमने तेषां फलं किंचन विद्यते ।

अत्र न हि निन्दा निन्द्यं निन्दितुमिति धर्मकूपप्रशंसार्थत्वम्, गयागमनाशक्तविषयता वा ।

धर्मकूपे नरः स्नात्वा परितर्प्य पितामहान् ।
गयां गत्वा किमधिकं कर्ता पितृमुदावहम् ॥
यथा गयायां तृप्ताः स्युः पिण्डदाने पितामहाः ।
धर्मतीर्थे तथैव स्युर्न न्यूनं नैव वाऽधिकम् ॥
तत्कूपे स्वं निरीक्ष्यापि श्राद्धदानफलं लभेत् ।
तत्रापि काकिनीमात्रं यच्छेत्पितृमुदे नरः ॥
अक्षयं फलमाप्नोति धर्मपीठप्रभावतः ।
तत्र यो भोजयेद्विप्रान्यतिनोऽथ तपस्विनः ॥
सिक्थे सिक्थे लभेत्सोऽथ वाजपेयफलं स्फुटम् ।

इत्याद्येकाशीतितमेऽध्याये ।

वटः काञ्चनशाखाढ्यो यस्तपस्तापसंततिम् ।
दूरी चकार सुच्छायो बहुद्विजसमाश्रयः ॥

इति प्रसङ्गात्तत्रत्योऽक्षयवटोऽप्युक्तः ।

तथा—यो न विश्वभुजां देवीं वाराणस्यां नमेन्नरः ।
कुतो महोपसर्गेभ्यस्तस्य शान्तिर्दुरात्मनः ॥

तथा—त एव विश्वमोक्तारो विश्वमान्यास्त एव हि ।
ये त्वां विश्वभुजामत्र पूजयिष्यन्ति मानवाः ॥

विश्वभुजा विश्वबाहुकेति प्रसिद्धा । अविमुक्तेश्वरो ब्रह्मवैवर्ते—

अविमुक्तेश्वरं पूज्य ब्रह्मनारायणादिभिः ।
फलं प्राप्तं तदेवाऽऽद्यं सर्वसामर्थ्यलक्षणम् ॥

लिङ्गपुराणे—

अविमुक्तं सदा लिङ्गं योऽत्र द्रक्ष्यति मानवः ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥

स्कान्दे—अविमुक्तेश्वरं नाम तच्छ्मशानविमुक्तये ।
जैगीषव्येण मुनिना यत्र रुद्रोऽभिराधितः ॥
यत्र संध्यामुपासित्वा ब्राह्मणः सकृदेव तु ।
संध्यामुपास्तवांस्तु स्यात्पुमानृतुसमाः समाः ॥

लैङ्गे—अविमुक्तेश्वरं लिङ्गं मम दृष्ट्वेह मानवः ।
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ॥
अविमुक्तेश्वरं लिङ्गं दृष्ट्वा क्षेत्रेऽविमुक्तके ।
विमुक्त एव भवति सर्वस्मात्कर्मबन्धनात् ॥
अर्चन्ति विश्वे विश्वेशं विश्वेशोऽर्चति विश्वकृत् ।
अविमुक्तेश्वरं लिङ्गं भुक्तिमुक्तिप्रदायकम् ॥
पुरा न स्थापितं लिङ्गं कस्यचित्केनचित्क्वचित् ।
किमाकृति भवेल्लिङ्गं नैतद्वेत्त्यपि कश्चन ॥
आकारमविमुक्तस्य दृष्ट्वा ब्रह्माच्युतादयः ।
लिङ्गं संस्थापयामासुर्वसिष्ठाद्यास्तथर्षयः ॥
आदिलिङ्गमिदं प्रोक्तमविमुक्तेश्वरं महत् ।
ततो लिङ्गान्तराण्यत्र जातानि क्षितिमण्डले ॥
अविमुक्तेशनामापि श्रुत्वा जन्मार्जितादघात् ।
क्षणान्मुक्तो भवेन्मर्त्यो नात्र कार्या विचारणा ॥
अविमुक्तेश्वरं लिङ्गं स्मृत्वा दूरगतोऽपि वा ।
जन्मद्वयकृतात्पापात्तत्क्षणादेव मुच्यते ॥
अविमुक्ते महाक्षेत्रेऽविमुक्तमवलोक्य च ।
त्रिजन्मजनितं पापं हित्वा पुण्यमयो भवेत् ॥

यत्कृतं ज्ञानविभ्रंशादेनो जन्मसु पञ्चसु ।
अविमुक्तेशसंस्पर्शात्तत्क्षयेदेव नान्यथा ॥

तथा—स्तुत्वाऽर्चयित्वा नत्वा च यथाशक्ति यथामति ।
अविमुक्तेऽविमुक्तेशं स्तूयते नम्यतेऽर्च्यते ॥

तथा—त्रिसंध्यमविमुक्तेशं यो जपेन्नियतः शुचिः ।
दूरदेशविपन्नोऽपि काशीमृतिफलं लभेत् ॥
अविमुक्ते महालिङ्गं दृष्ट्वा ग्रामान्तरं व्रजेत् ।
लब्ध्वाऽऽशु कार्यसंसिद्धिं क्षेमेण प्रविशेद्गृहम् ॥

इत्याद्येकोनचत्वारिंशेऽध्याये । अथोंकारः । ब्रह्मवैवर्ते—
ओंकारेश्वरमभ्यर्च्य योगसांख्यादिसिद्धिभाक् ।

कौर्मे व्यासः—
इदं तद्विमलं लिङ्गमोंकारं नाम शोभनम् ।
अस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥
यदेतत्परमं ज्ञानं पञ्चायतनमुत्तमम् ।
सेवितं सूरिभिर्नित्यं वाराणस्यां विमोक्षदम् ॥

पञ्चायतनं च—
कृत्तिवासेश्वरं लिङ्गं मध्यमेश्वरमुत्तमम् ।
विश्वेश्वरं तथोंकारं कपर्दीश्वरमेव च ॥
एतानि गुह्यलिङ्गानि वाराणस्यां द्विजोत्तमाः ।
न कश्चिदिह जानाति विना शंभोरनुग्रहात् ॥

लैङ्गे—पूर्वामुखं तु तद्देवि सिद्धसंघैः प्रपूजितम् ।
ओंकारेश्वरनामानं देवानामपि दुर्लभम् ॥

लैङ्गे—अन्यच्च ते प्रवक्ष्यामि तस्मिन्स्थाने सुरेश्वरि ।
तिस्रो नद्यस्तु मध्यस्था वहन्ति च शुभोदकाः ॥
यासां दर्शनमात्रेण ब्रह्महत्या निवर्तते ।
एका पितामहस्रोता मन्दाकिनी तथाऽपरा ॥
मत्स्योदरी तृतीया च एतास्तिस्रस्तु पुण्यदाः ।
मन्दाकिनी तथा पुण्या मध्यमेश्वरसंस्थिता ॥
पितामहस्रोतिका च अविमुक्तेऽतिपुण्यदा ।
मत्स्योदरी च ओंकारे पूजिता सर्वदैवतैः ॥

तस्मिन्स्थाने यदा गङ्गा आगमिष्यति मामिनि ।
तदा पुण्यतमः कालो देवानामपि दुर्लभः ॥
वरणोत्सिक्तसलिले जाह्नवी जलमिश्रिते ।
तत्र नादेश्वरे पुण्ये स्नातः किमनुशोचति ॥
तस्मिन्काले च तत्रैव स्नानं तत्र कृतं मया ।
तेन हस्ततलाद्देवि कपालं पतितं क्षणात् ॥
कपालमोचनं नाम तत्रैव सुमहत्सरः ।
पावनं सर्वसत्त्वानां पुण्यदं सर्वदेहिनाम् ॥
ओंकारेश्वरनाम्ना च तत्र स्थानं कृतं मया ।
तेन मे रोचते देवि ओंकारेश्वरनामतः ॥
मत्स्योदरीजले स्नात्वा दृष्ट्वा चोंकारमीश्वरम् ।
शोको मोहो जरा मोहा(मृत्युः) न च तं स्पृशते पुनः ॥

तथा—तस्मिंस्तु यः शिवः साक्षादोंकारेश्वरसंज्ञितः ।
एतद्रहस्यमाख्यातं तव स्नेहान्महामुने ॥
ओं(अ)कारं च उकारं च मकारं च प्रकीर्तितम् ।
तस्मिँल्लिङ्गे तु संसिद्धो मुनिः कालिकवृक्षिकः ॥
अकारस्तत्र विज्ञेयो विष्णुलोकगतिप्रदः ।
तस्य दक्षिणपार्श्वे तु ओंकारः परिकीर्तितः ॥
तत्र सिद्धिं परां प्राप्तो देवाचार्यो बृहस्पतिः ।
ओंकारं तत्र विज्ञेयं ब्रह्मणः पदमव्ययम् ॥
तयोस्तथोत्तरे भागे मकारे विष्णुसंज्ञितम् ।
तस्मिँल्लिङ्गे तु संसिद्धः कपिलर्षिर्महामुनिः ॥

तथा—प्रणवाख्यं परं ब्रह्म यत्र नित्यं प्रकाशते ।
स पञ्चायतनोपेत ओंकारेशोऽयमद्भुतः ॥
एषा मत्स्योदरी रम्या यत्स्नातो मानवोत्तमः ।
मातुर्जातूदरदरीं न विशेदिति निश्चयः ॥

काशीखण्डे—

स्नात्वा मत्स्योदरीतीर्थे विलोक्योंकारमीश्वरम् ।
न जातु जायते जन्तुर्जननीजठरे क्वचित् ॥

इत्याद्योंकारप्रादुर्भावस्तन्माहिमा च त्रिसप्ततिचतुःसप्ततितमयोरध्याययोर्विस्तरेण ज्ञेयः ।

अथ त्रिलोचनः । काशीखण्डे—

यत्रास्ति तन्महालिङ्गं वाराणस्यां त्रिलोचनम् ।
तीर्थं पिलिप्पिलाख्यं तद्द्युनद्यम्मसि विश्रुतम् ॥
सर्वतीर्थमयं तीर्थं तत्काश्यां परिगीयते ।

तथा—विरजाख्यं हि तत्पीठं तत्र लिङ्गं त्रिविष्टपम् ।
तत्पीठदर्शनादेव विरजा जायते नरः ॥

तथा—स्नात्वा पिलिप्पिलातीर्थे त्रिविष्टपसमीपतः ।
दृष्ट्वा त्रिलोचनं लिङ्गं किं भूयः परिशोचति ॥
इत्यादिपञ्चसप्ततिषट्सप्ततितमयोरध्याययोः ।

ब्रह्मवैवर्ते—

त्रिलोचनेश्वरं लिङ्गं नागयज्ञोपवीतिनम् ।
दृष्ट्वा त्रैलोक्यविभवस्तृणी भवति नान्यथा ॥

अथ त्रिलोचनप्राच्यां महादेवः—

वाराणस्यां महादेवं समभ्यर्च्य सकृन्नरः ।
आभूतसंप्लवं यावच्छिवलोके वसेत्सदा ॥

तथा—महादेवमहापीठं मम साधकसिद्धिदम् ।
तत्पीठदर्शनादेव महापापैः प्रमुच्यते ॥

अथ कामेशः । लैङ्गे कामकुण्डं प्रकृत्य—

तस्मादन्येऽपि ये केचित्तीर्थे तस्मिञ्जनाः श्रिताः ।
आराधयन्तो देवेशं कामेशं चैव सर्वदा ॥
यो यस्य मनसा कामस्तं तमाप्नोति निश्चितम् ।
दक्षिणेन स्थितं लिङ्गं रुद्रावासस्य सुन्दरि ॥
कामेश्वरमिति ख्यातं सर्वकामफलप्रदम् ।
तप्तं तत्र तपस्तीव्रं कामदेवेन वै पुरा ॥
कुण्डं तदुद्भवं देवि पद्मोत्पलसमन्वितम् ।
कुण्डस्यैव तटे रम्ये उत्तमे वरवर्णिनि ॥
लिङ्गं तत्र स्थितं दिव्यं पश्चिमाभिमुखं प्रिये ।
गन्धधूपनमस्कारैर्मुखवाद्यैश्च सर्वशः ॥
यो मामर्चयते तत्र तस्य तुष्याम्यहं सदा ।
ददामि सर्वकामांश्च धर्मं मोक्षं तथैव च ॥

बहवोऽपि हि पाप्मानो बहुभिर्जन्मभिः कृताः ।
कामतीर्थानुसंस्नानाद्यास्यन्ति विलयं क्षणात् ॥
कामाः समृद्धिमाप्स्यन्ति कामेश्वरनिषेवणात् ।

इत्यादिपञ्चाशीत्यध्याये ।

अथ कपालमोचनम् । कौर्मे—

कपालमोचनं नाम देवदेवस्य शूलिनः ।
स्नात्वाऽभ्यर्च्य पितॄन्भक्त्या ब्रह्महत्यां व्यपोहति ॥
आगत्य तीर्थप्रवरं स्नानं कृत्वा विधानतः ।
तर्पयित्वा पितॄन्देवान्मुच्यते ब्रह्महत्यया ॥

ब्रह्मपुराणेऽपि कपालमोचनं प्रकृत्य—

तस्मिंस्तीर्थे तु ये गत्वा पिण्डदानेन वै पितॄन् ।
श्राद्धैस्तु प्रीणयिष्यन्ति तेषां लोकाक्षयो दिवि ॥

वाराहे—

कस्यचित्त्वथ कालस्य द्वादशाब्दे धराधरे ।
वाराणसीं गतो देवस्तत्र स्नानमसौ करोत् ॥
गङ्गायां तत्र देवेशो यावन्मज्जति मामिनि ।
तावत्कपालं पतितं यल्लग्नं ब्रह्मणः पुरा ॥
कपालमोचनं नाम ततस्तीर्थमनुत्तमम् ।
पृथिव्यां ख्यातिमगमद्वाराणस्यां धराधरे ॥

लैङ्गे—कोटीश्वरस्य देवस्य आग्नेय्यां दिशि संस्थितः ।
श्मशानस्तम्भसंज्ञोऽयं विख्यातः सुप्रतिष्ठितः ॥
मानवास्तत्र यान्त्येत इह यैर्दुष्कृतं कृतम् ।
यत्र स्तम्भे सदा देवि अहं तिष्ठामि मामिनि ॥
अत्र गत्वा तु यः पूजां महादेवि करिष्यति ।
सर्वपापविनिर्मुक्तो गच्छेच्च परमां गतिम् ॥

तथा—कपालमोचनं नाम त्रिषु लोकेषु विश्रुतम् ।
कपालं पतितं तत्र स्नातस्य मम सुन्दरि ॥
तस्मिन्स्नातो वरारोहे ब्रह्महत्यां व्यपोहति ।
कपालेश्वरनामा तु तस्मिंस्तीर्थे व्यवस्थितः ॥
अश्वमेधमवाप्नोति दर्शनात्तस्य सुन्दरि ।
तस्यैव चोत्तरे पार्श्वे तीर्थं त्रैलोक्यविश्रुतम् ॥

तत्र स्नात्वा वरारोहे ऋणैर्मुक्तो भवेन्नरः ।
ऋणमोचनकं नाम विख्यातं भुवि सुन्दरि ॥
त्रीणि लिङ्गानि तत्रैव तिष्ठन्ति मम सुन्दरि ।
तानि दृष्ट्वा तु सुश्रोणि नश्यते त्रिविधं ह्यृणम् ॥

काशीखण्डे—

कपालमोचनं काश्यां ये स्मरिष्यन्ति मानवाः ।
तेषां विनङ्क्ष्यति क्षिप्रमिहान्यत्रापि पातकम् ॥
आगत्य तीर्थप्रवरे स्नानं कृत्वा विधानतः ।
तर्पयित्वा पितॄन्देवान्मुच्यते ब्रह्महत्यया ॥

तथा—अयं हि स कुलस्तम्भो यत्र श्रीकालभैरवः ।
क्षेत्रपापकृतः शास्ति दर्शयंस्तीर्थयातनाम् ॥

तथा—ऋणत्रयाद्विमुच्यन्ते यत्र स्नाता नरोत्तमाः ।
तीर्थं विशुद्धिजनकं तदेतदृणमोचनम् ॥

लैङ्गे—गोप्रक्षेश्वरमागत्य दृष्ट्वाऽभ्यर्च्य च मानवः ।
न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते ॥

काशीखण्डे—

वरणायां कृतस्नानैः शैलेशो यैः समर्चितः ।
पितॄन्संतर्प्य च मुदा दत्त्वा दानानि शक्तितः ॥
न तेषां पुनरावृत्तिरत्र संसारवर्त्मनि ।
शैलेश्वरं ये द्रक्ष्यन्ति वरणायाः सुरोधसि ॥
तेषां काश्यां निवसतां दुःखं नाभिभविष्यति ।

लैङ्गे—पित्रा ते गिरिराजेन स्वयं हिमवता प्रिये ।
मम प्रियं तु तत्स्थानं ज्ञात्वा लिङ्गं प्रतिष्ठितम् ॥
शैलेश्वरमिति ख्यातं दृश्यतामिह मां स्थितम् ।
दृष्ट्वैनं मनुजो देवि न दुर्गतिमवाप्नुयात् ।

काशीखण्डे—

तत्र कर्कोटवापी च लिङ्गं कर्कोटकेश्वरम् ।
तस्यां वाप्यां नरः स्नात्वा कर्कोटेशं समर्च्य च ॥
कर्कोटनागमाराध्य नागलोके महीयते ।
कर्कोटनागो यैर्दृष्टस्तद्वाप्यां विहितोदकैः ॥
क्रमते न विषं तेषां देहे स्थावरजङ्गमम् ।

लैङ्गे—इन्द्रेश्वराद्दक्षिणतो वापी कर्कोटकस्य च ।
तत्र वीरजले स्नात्वा दृष्ट्वा कर्कोटकेश्वरम् ॥
नागानामाधिपत्यं तु जायते नात्र संशयः ।
कर्कोटकात्पश्चिमेन नातिदूरे व्यवस्थितम् ॥
दुमिचण्डेश्वरं नाम ब्रह्महत्यापहारकम् ।

अथ वृषभध्वजमहिमा तत्र सनत्कुमारसंहितायां देवीं प्रति भवः—

गयायां न्यासितः पादस्त्वयैव पितृमुक्तये ।
संनिधिः क्रियतेऽत्रापि यथोक्तं कृपया त्वया ॥
मत्पाददर्शनादेव तत्र यान्ति परां गतिम् ।
ज्ञातयोऽज्ञातयो वाऽपि यदर्थं वाऽपि यः स्पृशेत् ॥
पितृतीर्थोपनिषदं रुद्रपादं विदुर्बुधाः ।
ततोऽनन्तगुणं ज्ञेयं वृषध्वजमिदं प्रिये ॥

तथा—सरोरूपेण भगवान्नित्यं विष्णुरिह स्थितः ।
धर्मो यः सर्वशास्त्रेषु वृषोऽयं भगवानजः ॥
संपश्यन्प्राणिनां कर्म सदा संनिहितः प्रभुः ।
अतो नातः परं किंचित्पितॄणां तारणं प्रिये ॥
दक्षिणाध्वानमाश्रित्य येऽप्यधो रौरवाश्रयाः ।
निपातितेऽत्र वै पिण्डे यैः कैर्वा यत्र कारणात् ॥
अनुजानामि वै देवि तेषां च परमां गतिम् ।
आयातानां पुनस्तेषां क्षेत्रवासं च शाश्वतम् ॥
यो यत्र पितृरूपेण संतुष्टोऽस्मि न संशयः ।

लैङ्गे—कपिलाह्रदनामानं ख्यातं सर्वसुरासुरैः ।
तस्मिन्ह्रदे तु यः स्नानं कृत्वा भक्तिपरायणः ॥
वृषभध्वजं यो दद्याद्राजसूयफलं लभेत् ।

काशीखण्डे—

नरकस्थिता ये केचित्पितरः सपितामहाः ।
पितृलोकं तु गच्छन्ति तस्मिञ्श्राद्धे कृते तु वै ॥
गयातोऽष्टगुणं प्रोक्तं पुराणार्थविशारदैः ।
तस्मिञ्श्राद्धे कृते भद्रे पितॄणामनृणो भवेत् ॥

तथा—कपिलाह्रदतीर्थेऽस्मिन्स्नात्वा संयतमानसः ।
वृषध्वजमिमं दृष्ट्वा सर्वयज्ञफलं लभेत् ॥

भारते—

ततो वाराणसीं गत्वा देवमर्च्य वृषध्वजम् ।
कपिलाह्रद उपस्पृश्य राजसूयफलं लभेत् ॥

काशीखण्डे—

एतस्मिन्कापिले तीर्थे कापिलेयपयोभृते ।
ये पिण्डान्निर्वपिष्यन्ति श्रद्धया श्राद्धदानतः ॥
तेषां पितृणां संतृप्तिर्भविष्यति ममाऽऽज्ञया ।

तथा—श्राद्धे पितॄणां संतृप्त्यै दास्यन्ति कपिलां शुभाम् ।
येऽत्र तेषां पितृगणो वसेत्क्षीरोदरोधसि ॥
वृषोत्सर्गः कृतो यैस्तु तीर्थेऽस्मिन्नार्षभध्वजे ।
अश्वमेधपुरोडाशैः पितरस्तेन तर्पिताः ॥
गयातोऽष्टगुणं पुण्यमस्मिंस्तीर्थे पितामहाः ।
अमायां सोमयुक्तायां श्राद्धैः कापिलधारिके ॥
येषां गर्भे भवेत्स्रावो येऽदन्तजनना मृताः ।
तेषां तृप्तिर्भवेन्नूनं तीर्थे कापिलधारिके ॥

इत्यादि द्विषष्टितमेऽध्याये ।

तथा—सीमाबहिर्गतमपि ज्ञेयं तीर्थमिदं शुभम् ।
मध्येवाराणसि श्रेष्ठं मम सांनिध्यतो नरैः ॥

तथा मधुस्रवाघृतकुल्याक्षीरनीरधिवृषभध्वजपैतामहगदाधरपितृतीर्थकापिलधारसुधाखानिशिवगयारूपाणि दश नामान्यप्युक्त्वा तत्रोक्तम्—

एतानि दश नामानि तीर्थस्यास्य पितामहाः ।
भवतां तृप्तिकारीणि विनाऽपि श्राद्धतर्पणैः ॥ इति ।

अथ विष्णुपादोदकं काशीखण्डे—

तदाप्रभृति तत्तीर्थं पादोदकमितीरितम् ।
पादौ यदादौ शुभदौ क्षालितौ पीतवाससा ॥
तत्र पादोदके तीर्थे ये स्नास्यन्तीह मानवाः ।
तेषां विनश्यति क्षिप्रं पापं सप्तभवार्जितम् ॥

तत्र श्राद्धं नरः कृत्वा दत्त्वा चैव तिलोदकम् ।
सप्त सप्त तथा सप्त स्ववंश्यांस्तारयिष्यति ॥

एकविंशतिं वंश्यानित्यर्थः ।

गङ्गायां यादृशी प्रीतिर्लभ्यते प्रपितामहैः ।
तीर्थे पादोदके काश्यां तादृशी लभ्यते ध्रुवम् ॥
कृतपादोदकस्नानं पीतपादोदकोदकम् ।
दत्तपादोदपानीयं नरं न निरयः स्पृशेत् ।
काश्यां पादोदके तीर्थे यैः कृता नोदकक्रिया ॥
जन्मैव विफलं तेषां जलबुद्बुदसंनिमम् ॥ इत्यादि ।

तथा—संगमेशं महातीर्थं प्रतिष्ठाप्याऽऽदिकेशवः ।
दर्शनादघहं नृणां भुक्तिं मुक्तिं दिशेत्सदा ॥

तथा—संगमे तत्र संस्नातः संगमेशं समर्च्य च ।
नरो न जातु जननीगर्भसंभवमाप्नुयात् ॥

लैङ्गे—केशवस्य तु पूर्वेण विश्रुतं संगमेश्वरम् ।
तेन दृष्टेन सुश्रोणि इष्टैः सह समागमः ॥

स्कान्दे—स्थापितं संगमे चास्मिन्ब्रह्मणा लिङ्गमुत्तमम् ।
संगमेश्वरनामानं ख्यातं जगति विश्रुतम् ॥
संगमे देवनद्योश्च यः स्नात्वा मनुजः शुचिः ।
अर्चयेत्संगमेशानं तस्य जन्मभयं कुतः ॥ इत्यादि ।
शैलराजेन रत्नानि यानि पुञ्जीकृतान्यहो ॥
सर्वरत्नमयं लिङ्गं जातं तत्सुकृतात्मनः ।
सर्वेषामिह लिङ्गानां रत्नभूतमिदं परम् ॥
अतो रत्नेश्वरं नाम परं निर्वाणरत्नदम् ।

तथा—यानि ब्रह्माण्डमध्येऽत्र सन्ति लिङ्गानि पार्वति ।
तैरर्चितानि सर्वाणि रत्नेशो यैः समर्चितः ॥

इत्यादिप्रशंसा रत्नेश्वरप्रादुर्भावश्च षष्टितमेऽध्याये ।

तथा—रत्नेश्वरप्रसादेन भुक्त्वा रत्नान्यनेकशः ।
पुरुषार्थमहारत्नं निर्वाणं को न लब्धवान् ॥

तथा—रत्नेश्वरोऽर्चितो दद्यान्महारत्नानि भक्तितः ।
रत्नैः समर्च्य तल्लिङ्गं श्रीरत्नादि लभेन्नरः ॥

काशीखण्डे गजासुरं प्रतीश्वरः—

इदं पुण्यं शरीरं ते क्षेत्रेऽस्मिन्मुक्तिसाधने ।
मम लिङ्गं भवत्वत्र सर्वेषां मुक्तिदायकम् ॥
कृत्तिवासेश्वरं नाम महापातकनाशकम् ।

तथा—दृष्टेनानेन लिङ्गेन पूजितेन स्तुतेन च ।
कृतकृत्यो भवेन्मर्त्यः संसारं न विशेत्पुनः ॥

तथा—जन्मान्तरसहस्रेषु मोक्षोऽन्यत्र सुदुर्लभः ।
कृत्तिवासेश्वरे लिङ्गे लभ्यस्त्वेकेन जन्मना ॥

इत्याद्यष्टषष्टितमेऽध्याये ।

तथा हंसतीर्थं प्रकृत्य—

तस्मिन्कुण्डे नरः स्नात्वा कृत्वा च पितृतर्पणम् ।
कृत्तिवासेश्वरं दृष्ट्वा कृतकृत्यो नरो भवेत् ॥

ब्रह्मवैवर्ते—

कृत्तिवासं महालिङ्गं वाससौख्यकरं परम् ।
यस्य दर्शनमात्रेण न मोक्षादि सुदुर्लभम् ॥

कौर्मे कृत्तिवाससंज्ञानिमित्तमुक्तम्—

हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः ।
वासस्तस्याकरोत्कृत्तिं कृत्तिवासेश्वरस्ततः ॥

तथा—जन्मान्तरसहस्रेण मोक्षोऽन्यत्राऽऽप्यते न वा ।
एकेन जन्मना मोक्षः कृत्तिवासेऽत्र लभ्यते ॥

लिङ्गपुराणे—

रुद्राणां च शरीरं तु मध्यमेश्वरमीरितम् ।
कृत्तिवासं शिरः प्राहुरेतत्प्रियतरं मम ॥

तथा—पश्चिमाभिमुखश्चाहं तस्मिन्नायतने स्थितः ।

तथा—कृत्तिवासेश्वरं देवं ये नमन्ति शुभार्थिनः ॥
ते रुद्रस्य शरीरे तु प्रविष्टा अपुनर्भवाः ।
अनेनैव शरीरेण प्राप्ता निर्वाणमुत्तमम् ॥

कौर्मे—धन्यास्तु खलु ते विप्रा मन्दाकिन्यां कृतोदकाः ।
अर्चयन्ति महादेवं मध्यमेश्वरमीश्वरम् ॥
स्नानं दानं तपः श्राद्धं पिण्डनिर्वपणं त्विह ।
एकैकशः कृतं विप्राः पुनात्यासप्तमं कुलम् ॥

मन्दाकिनीमुपस्पृश्य राहुग्रस्ते दिवाकरे ।
यत्फलं लभते मर्त्यस्तस्माद्दशगुणं त्विह ॥

लिङ्गपुराणे—

मन्दाकिनीजले स्नात्वा दृष्ट्वा वै मध्यमेश्वरम् ।
एकविंशकुलोपेतो रुद्रलोके वसेच्चिरम् ॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
पिण्डनिर्वपणं चैव सर्वं भवति चाक्षयम् ॥

अथ वृद्धकालेश्वरः काशीखण्डे—

वृद्धकालेश्वरं नाम लिङ्गमेतन्महीपते ।
दर्शनात्स्पर्शनात्तस्य पूजनाच्छ्रवणान्नतेः ॥
वृद्धकालेशलिङ्गस्य सर्वं प्राप्नोति वाञ्छितम् ।
कूपः कालोदको नाम जराव्याधिविनाशकृत् ॥
तदीयजलपानेन न मातुः स्तनपानवान् ।
कृतकूपोदकस्नानः कृतैतल्लिङ्गपूजनः ॥
वर्षेण सिद्धिमाप्नोति मनोभिलषितां नरः ।
न कुष्ठं न च विस्फोटा न रन्ध्रा न विचर्चिका ॥
पीतात्स्पृष्टात्प्रतिष्ठन्ति कफः कालोदकोदकात् ।
नाग्निमान्द्यं न वै शूलं न मेहो न प्रवाहिका ॥
न मूत्रकृच्छ्रं नो पामा पानीयस्यास्य सेवनात् ।
भूतज्वराश्च ये केचिद्ये केचिद्विषमज्वराः ॥
ते क्षिप्रमुपशाम्यन्ति ह्येतत्कूपोदसेवनात् ।
वृद्धकालेश्वरे लिङ्गे सेविते न दरिद्रता ॥
नोपसर्गा न वा रोगा न पापं नाघजं फलम् ।
उत्तरे कृत्तिवासस्य वाराणस्यां प्रयत्नतः ॥
वृद्धकालेश्वरं लिङ्गं द्रष्टव्यं सिद्धिकामुकैः ।

लिङ्गपुराणे—

तत्र पूजा जपो होमः कालेशे क्रियते हि यत् ।

इत्युपक्रम्य—

बहुनाऽत्र किमुक्तेन कालेशे देवि यत्कृतम् ।
तत्सर्वमक्षयं तेषां पुनर्जन्म न विद्यते ॥

तथा—तस्य देवस्य चाग्रे तु कूपस्तिष्ठति वै शुभः ।
तत्र कालोदकं नाम उदकं देवि तिष्ठति ॥
तस्यैव प्राशनाद्देवि पूतो भवति मानवः ।

ब्रह्मवैवर्ते—

वृद्धकालेश्वरं लिङ्गं महाकालनिवारणम् ।
कलिकालमहाज्वालाज्वालं जीवनजीवनम् ॥

काशीखण्डे—

कालेश्वरसमीपे तु दक्षिणे वरवर्णिनि ।
मृत्युना स्थापितं लिङ्गं सर्वरोगविनाशनम् ॥

इदमपमृत्युहरेश्वरनाम्ना प्रसिद्धम् ।

तथा—घण्टाकर्णह्रदे स्नात्वा दृष्ट्वा व्यासेश्वरं शिवम् ।
यत्र कुत्र विपन्नोऽपि वाराणस्यां मृतो भवेत् ॥
घण्टाकर्णे महातीर्थे श्राद्धं कृत्वा विधानतः ।
अपि दुर्गतिमापन्नानुद्धरेत्सप्त पूर्वजान् ॥
यद्दृश्या मुनयः काश्यां घण्टाकर्णे महाह्रदे ।
कृतोदकक्रियाः प्राप्ताः परां सिद्धिं घटोद्भव ॥
व्यासेश्वरस्य पूर्वेण लिङ्गं पश्चान्मुखं स्थितम् ।
पराशरेण मुनिना स्थापितं मम भक्तितः ॥ इत्यादि ।

लैङ्गे—व्यासकुण्डे नरः स्नात्वा अर्चयित्वा सुरान्पितॄन् ।
अक्षयाँल्लभते लोकान्यत्र तत्राभिकाङ्क्षितान् ॥
व्यासतीर्थसमीपे तु पश्चिमेन यशस्विनि ।
घण्टाकर्णह्रदं नाम सर्वसौख्यप्रदायकम् ॥
स्नानं कृत्वा ह्रदे तस्मिन्व्यासेशस्य तु दर्शनात् ।
यत्र यत्र मृतो देवि वाराणस्यां मृतो भवेत् ॥
तत्र देवि तनुं त्यक्त्वा लभेद्गाणेश्वरीं गतिम् ।

तथा—व्याघ्रेश्वरेतिविख्यातं सर्वदेवैः स्तुतं शुभे ॥
तेन दृष्टेन लभत उत्तमं पदमव्ययम् ।

तथा जेष्ठेश्वरं प्रकृत्य—

तेन लिङ्गेन दृष्टेन पूजितेन स्तुतेन च ।
कृतकृत्यो भवेद्देवि संसारे न पुनर्विशेत् ॥

पूर्वामुखं तु तल्लिङ्गं ज्येष्ठस्थानमिदं शुभम् ।
मानवानां हितार्थाय तत्र स्थाने स्थितो ह्यहम् ॥

तथा समुद्रकूपं प्रकृत्य—

चतुःसमुद्रस्नाने तु यत्फलं लभते नरः ।
तत्फलं सकलं तस्य उदकस्पर्शनाच्छुभे ॥

तथा—कदाचिन्महादेवं प्रति कुपिता भवानी हिमाचलं प्रति प्रस्थिता तत्प्रतिबन्धार्थं दण्डकाष्ठं शिवेन क्षिप्तं तत्पातस्थले तडागं जातं तस्य दण्डेन खातत्वाद्दण्डखातमिति संज्ञा । दण्डश्च दण्डीश्वरो जात इति दण्डखातोत्पत्तिमभिधायोक्तम्—

तत्र स्नाने कृते देवि कृतकृत्यो भवेन्नरः ।
दण्डखाते नरः स्नात्वा तर्पयित्वा स्वकान्पितॄन् ॥
नरकस्थास्तु ये देवि पितृलोके वसन्ति ते ।
पिशाचत्वं गता ये च नराः पापेन कर्मणा ॥
तथा पिण्डप्रदानेन देहस्योद्धरणं स्मृतम् ।
दण्डखाते नरः स्नात्वा किं भूयः परिशोचति ।
यस्य स्मरणमात्रेण पापसंघातपञ्जरम् ।
नश्यते शतधा देवि दण्डखातस्य दर्शनात् ॥

काशीखण्डे तु दण्डखातोत्पत्तिरन्यथोक्ता विप्रा इति प्रक्रम्य—

खातं खातं च दण्डाग्रैर्भूमिं कन्दादिवृत्तयः ।
चक्रुः पुष्करिणीं रम्यां दण्डखाताभिधां मुने ॥

भूमिं खात्वा खात्वेत्यर्थः । कन्दादीति विप्रविशेषणम् ॥

लैङ्गे—जम्बुकोऽत्र हतो दैत्यो मयाऽतो जम्बुकेश्वरः ।
तमेनं मां यत्र दृष्ट्वा सर्वान्कामानवाप्नुयात् ॥

वासिष्ठलैङ्गे तु—

पुरा जम्बुकरूपेण असुरा देवकण्टकाः ।
निहता हिमवत्पुत्रि जम्बुकेशस्ततो ह्यहम् ॥

तथा—अग्नीश्वरेतिनामानं सर्वपापक्षयंकरम् ।
तं दृष्ट्वा मानवो देवि अग्निलोकं च गच्छति ॥

लैङ्गे जैगीषव्येश्वरं प्रकृत्य—

तस्मात्तत्संस्कृतं लिङ्गं पूजयिष्यन्ति ये नराः ।
ज्ञानं तेषां ध्रुवं देवि अचिराज्जायते दिवि ॥

त्रिरात्रं तत्र कृत्वा वै यो नरः पूजयिष्यति ।
गुहां प्रविशते चैव ज्ञानयुक्तो भवेन्नरः ॥

तथा—दृष्ट्वेदं मम लिङ्गं तु ज्येष्ठस्थाने समाश्रितम् ।
न शोचते पुनर्मर्त्यः सिद्धो जन्मनि जन्मनि ॥

तथा—ज्येष्ठवाप्यां नरः स्नात्वा तर्पयित्वा पितामहान् ।
ज्येष्ठेश्वरं समालोक्य न भूयो जायते भुवि ॥

तत्समीपे निवासेश्वरोऽपि ज्ञेयः ।

तथा—ज्येष्ठेश्वरोऽर्च्यः प्रथमं काश्यां श्रेयोर्थिभिर्नरैः ।
ज्येष्ठा गौरी ततोऽभ्यर्च्या सर्वज्यैष्ठ्यमभीप्सुभिः ॥

तथा—जैगीषव्येश्वरं नाम लिङ्गं काश्यां सुदुर्लभम् ।
त्रीणि वर्षाणि संसेव्य लभेद्योगं न संशयः ॥
जैगीषव्यगुहां प्राप्य योगाभ्यसनतत्परः ।
षण्मासेन लभेत्सिद्धिं वाञ्छितां मदनुग्रहात् ॥

काशीखण्डे चतुष्पञ्चाशेऽध्याये—
कपर्दी नाम गणपः शंभोरत्यन्तवल्लभः ।
पित्रीशादुत्तरे भागे लिङ्गं संस्थाप्य शांभवम् ॥
कुण्डं चकार तस्याग्रे विमलोदकसंज्ञकम् ।
यस्य तोयस्य संस्पर्शाद्विमलो जायते नरः ॥

इत्युपक्रम्य पैशाच्यान्मुक्तस्य कस्यचित्पिशाचस्य वचः—
पिशाचमोचनं तीर्थमद्यारभ्य ममाऽऽख्यया ।
अन्येषामपि पैशाच्यमिदं स्थानाद्धरिष्यति ॥
अस्मिंस्तीर्थे महापुण्ये ये स्नास्यन्तीह मानवाः ।
पिण्डांश्च निर्वपिष्यन्ति संध्यातर्पणपूर्वकम् ॥
दैवात्पैशाच्यमापन्नास्तेषां पितृपितामहाः ।
तेऽपि पैशाच्यमुत्सृज्य यास्यन्ति परमां गतिम् ॥

तथा—पिशाचमोचने स्नात्वा कपर्दीशं समर्च्य च ।
कृत्वा तत्रान्नदानं च नरोऽन्यत्रापि निर्भयः ॥

कूर्मपुराणे—इदं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम् ।
स्मृत्वैवाशेषपापौघं क्षिप्रमस्य विमुञ्चति ॥
कामक्रोधादयो दोषा वरणासीनिवासिनाम् ।
विघ्नाः सर्वे विनश्यन्ति कपर्दीश्वरपूजनात् ॥
पिशाचमोचने कुण्डे स्नातस्यात्र समीपतः ।

अत्र तपस्यतः शङ्कुकर्णाख्यान्मुनेरुपदेशं प्राप्य कश्चित्पिशाचः पिशाचमोचने स्नात्वा कपर्दीशं संपूज्य पैशाच्यान्मुक्तस्तच्च दृष्ट्वा शङ्कुकर्णेन ब्रह्मपारसंज्ञकं स्तोत्रं कृतमित्याद्यपि तत एव ज्ञेयम् । एवमन्यान्यपि लिङ्गपुराणकाशीखण्डादितो लिङ्गानि ज्ञेयानि ग्रन्थातिविस्तरप्रसङ्गात्तु नोच्यन्ते। तत्रापि परिगणनोद्देशमात्रार्था। साकल्येन तु काशीस्थलिङ्गानि वक्तुमेव न शक्यन्ते । तदुक्तं काशीखण्डे—

उद्देशमात्रं लिङ्गानि कथितानि मया मुने ।
द्वित्रिः कृत्वा स्थापितानि भक्त्या लिङ्गानि कानिचित् ॥
न तानि पुनरुक्तानि श्रद्धयाऽर्च्यानि सर्वशः ।
एतानि यानि लिङ्गानि यानि कुण्डानि येऽन्धवः ॥
या वाप्यस्तानि सर्वाणि श्रद्धेयानि मनीषिभिः ।
एतेषां दर्शनात्स्नानात्फलमत्रोत्तरोत्तरम् ॥

अन्धवः कूपाः ।

अगस्त्यानां च लिङ्गानां कूपानां सरसामपि ।
वापीनां चापि मूर्तीनां कः संख्यातुं प्रभुर्भवेत् ॥

तथा—यानि लिङ्गानि सन्तीह तानि सर्वाण्यसंशयम् ।
निर्वाणकरणान्येव स्वयंभूस्थापितान्यपि ॥

तथा—असंख्यातानि लिङ्गानि पार्वत्यानन्दकानने ।
स्थूलान्यपि च सूक्ष्माणि नानारत्नमयानि च ॥
नानाधातुमयानीशे दार्षदान्यप्यनेकशः ।
स्वयंभून्यप्यनेकानि देवर्षिस्थापितान्यपि ॥
सिद्धचारणगन्धर्वयक्षरक्षोर्चितान्यपि ।
असुरोरगमर्त्यैश्च दानवैरप्सरोगणैः ॥
दिग्गजैर्गिरिभिस्तीर्थैर्ऋक्षवानरकिंनरैः ।
पतत्रिप्रमुखैर्देवि स्वस्वनामाङ्कितानि वै ॥
प्रतिष्ठितानि यानीह मुक्तिहेतूनि तान्यपि ।
अदृश्यान्यपि दृश्यानि दुरवस्थान्यपि प्रिये ॥
भग्नान्यपि च कालेन तानि पूज्यानि सुन्दरि ।

दुरवस्थानि म्लेच्छादिस्पर्शव्यत्यासपातकुत्सितस्थानपातादिभिः ।

परार्धशतसंख्यानि गणितान्येकदा मया ।
गङ्गाम्भस्यपि तिष्ठन्ति षष्टिकोटिमितानि हि ॥
सिद्धलिङ्गानि तानीह तिष्ये दृश्यत्वमाययुः ।

तथा शिवशर्मयात्रायाम्—

तीर्थयात्रां प्रतिदिनं कुर्वन्नूनं स वत्सरम् ।
न प्राप सर्वतीर्थानि लिङ्गं काश्यां तिले तिले ॥

लैङ्गेऽपि तृतीयाध्यायात्षोडशान्तं लिङ्गान्युक्त्वोक्तम्—

अन्यानि देवि लिङ्गानि शतशोऽथ सहस्रशः ॥
न मया तानि चोक्तानि बहुत्वान्नाधिगच्छता ।
उद्देशमात्रं कथितं मया तुभ्यं वरानने ॥
न शक्यो विस्तरो वक्तुं वर्षकोटिशतैरपि ।
एतानि सिद्धलिङ्गानि कूपाः पुण्या ह्रदास्तथा ॥
वाप्यो नद्योऽथ कुण्डानि मया ते परिकीर्तिताः ।
एतेषु चैव ये स्नानं करिष्यन्ति समाहिताः ॥
लिङ्गानि स्पर्शयित्वा च संसारे न विशेत्पुनः ।
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ॥
तेषां मध्ये तु या श्रेष्ठा मया ते कथिता शुभे ।
तीर्थयात्रा वरारोहे कथिता पापनाशिनी ॥
येन चैषा कृता देवि सोऽवश्यं मुक्तिभाग्भवेत् ।

इति नाना तीर्थानि लिङ्गानि च संक्षेपेण ।

अथ विश्वेश्वरप्रादुर्भावकथनं पाद्मे—

तत्र कल्पादौ नारायणनाभिसरोजादुत्पन्नो ब्रह्मा यदा चक्षुर्दिक्षु विलोकयन्नान्यमपश्यत्तदाऽहंकारयुक्तोऽहमेव सर्वजगत्कारणीभूत इत्यादि मेने ।

एवमज्ञानसंभिन्नं विज्ञाय भगवान्हरिः ।
स्वरूपं दर्शयामास कोऽसीति द्रुहिणं ब्रुवन् ।

ब्रह्मोवाच—

अहं भूतेश्वरः साक्षाद्भवतः कारणं परम् ।
सर्वमेतन्मया सृष्टं किं मां वेत्सि न तत्त्वतः ॥

नारायण उवाच—

अहो अविद्यामाहात्म्यमयं मन्नाभिपद्मजः ।
ईश्वरं मां न जानाति विरञ्चिर्मूढमन्दधीः ॥
पद्मयोने पश्य हेतुं स्वीयं मन्नाभिपङ्कजम् ।
दृष्ट्वा पश्चान्निजगुरुं मामेव शरणं भज ॥

एवमहंपूर्वमहंपूर्वमिति वाग्युद्धं कृत्वा शस्त्रास्त्रैः शतवर्षपर्यन्तं युध्यतोस्तयोर्न कश्चित्पराजीयत ।

अपश्यतामथाभ्याशे लिङ्गं तेजोमयं परम् ।
शरच्चन्द्रायुतसमं प्रभाभास्वरमैश्वरम् ॥
वीक्ष्य तद्व्यापकं ज्योतिर्निष्प्रभौ विस्मितौ च तौ ।
कर्तव्यं नान्वपद्येतामीषदागतसाध्वसौ ॥
सौम्यमेतन्महाज्योतिः सौम्यमग्रे स्थितं पुनः ।
तर्कयन्तौ विधिहरी ददृशाते तदन्तरा ।
पुरुषं पिङ्गजटिलं दिग्वाससमलंकृतम् ॥
भुजगैर्नृकपालैश्च कुन्देन्दुविमलद्युतिम् ।
तं दृष्ट्वैव तयोरासीदयमेव परः पुमान् ॥
इति बुद्धिस्ततस्ताभ्यां संस्तुतो वैदिकैः स्तवैः ।

सदाशिव उवाच—

भवद्भ्यामिदमुद्भासि मल्लिङ्गं दृष्टमद्भुतम् ।
स्तुतं च तेन प्रीतोऽहं वृणीतां वरमादिजौ ॥

तावूचतुः—

सदाशिव प्रसन्नश्चेत्त्वयि नौ निश्चला मतिः ।
सदा भवतु भूतेश वरमन्यं वृणीमहे ॥
एकं पराकुरु विभो संशयं नौ हृदि स्थितम् ।
यद्भवांस्तैजसं लिङ्गमधितिष्ठति नित्यशः ॥
तत्किंसमाख्यं किंरूपं किंप्रभावं किमाश्रयम् ।
एतत्सर्वं महेशान वक्तुमर्हस्यशेषतः ॥

शिव उवाच—

यदेतत्परमं लिङ्गं पश्यतं पुरतः स्फुरत् ।
तद्विश्वेश्वरसंज्ञं हि सच्चिदानन्दविग्रहम् ॥
लयं लिङ्गशरीरस्य विश्लेषं गमयेत्परम् ।
तेन लिङ्गमिति ख्यातमपवर्गैकसाधनम् ॥
व्यापकत्वेऽपि चैतस्य निर्विकारस्य तत्त्वतः ।
परिच्छिन्नतयाऽवस्था साधारण्यापनुत्तये ॥
यथा व्योम परिच्छिन्नं शब्दहेतुतया समम् ।
स्वयमेव परिच्छेदं प्राप्नोतीदमपीदृशम् ॥

प्रभावः श्रूयतामस्य नित्यानन्दस्वरूपिणः ।
अत्र त्यक्तासवः सन्तः सच्चिदानन्दरूपताम् ॥
यथायोग्यं लभन्ते हि नात्र कार्या विचारणा ।

सनत्कुमारसंहिताचतुर्थाध्यायेऽप्येवं प्रादुर्भावः कथितः । विश्वेश्वरलिङ्गेऽस्पृश्यस्पर्शनिबन्धनो दोषो नास्ति प्रत्यहं तेनैव पूजया तन्निराकरणात् । तदुक्तं तत्रैव—

ब्राह्मे मुहूर्ते मणिकर्णिकायां
स्नात्वा समाराधयति स्वमेव ॥
अस्पृश्यसंस्पर्शविशोधनाय
कलौ नराणां कृपया हिताय ॥

इति विश्वेश्वरलिङ्गप्रादुर्भावकथनम् ।

अथास्यैव संक्षेपतो महिमा । तत्र स्कान्दे—

अस्मिन्ममाऽऽनन्दवने यदेत-
ल्लिङ्गं सुधाधाम सुधामधाम ॥
आ सप्तपातालतलात्स्वयंभु
समुत्थितं भक्तकृपावशेन ॥ इत्यादि ।

सुधाधामामृतास्पदम् । सुधामधाम सुधाम्नां सुतेजसां पदम् ।

पाद्मे—सुपर्वन्मणिकर्णिक्यां स्नात्वा विश्वेश्वरस्तु यैः ।
सकृद्दृष्टो न चैतेषां गर्भवासस्य संभवः ॥

तथा—तस्य लिङ्गं तत्र भाति दिव्यं विश्वेश्वराभिधम् ।
तस्य दर्शनमात्रेण तत्त्वज्ञानविधायकम् ॥
पापं क्षयमवाप्नोति सर्वथा नात्र संशयः ।
रागद्वेषविनिर्मुक्ताः कामक्रोधविवर्जिताः ॥
विश्वेश्वराभिधं लिङ्गं पश्यन्ति ज्ञानचक्षुषा ।

ब्रह्मवैवर्ते कलिं प्रति ब्रह्मवचः—

ये भजन्ति महात्म[illegible] शिवं चापि जनार्दनम् ।
न तेषां त्वत्कृतो द[illegible] काश्यां निवसतामपि ॥

तथा—लिङ्गं महानन्दकरं [illegible]वेशाख्यं सनातनम् ।
नमस्कृत्य विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥

तथा—वाराणसीं प्राप्य सुदुर्लभां सुरै-
रपीष्टदेवं जगतोऽवितारम् ॥
नित्यं न पश्यन्ति सुदुर्धियो नरा
व्यग्राः कलिग्रस्तधियो भवन्ति ॥

तथा—स्वयमेव भवो भावैः पूजयेच्छाश्वतं शिवम् ।
अत एव नृभिः काश्यां पूजनीयो भवः सदा ॥

सनत्कुमारसंहितायाम्—

इदं तत्परमं ज्योतिर्लिङ्गं देवि त्वदात्मकम् ।
शिवानन्दं परं धाम दुष्प्रापमकृतात्मभिः ॥
योगिनस्तत्प्रपश्यन्ति क्षीणपापा विमत्सराः ।

तथा—इदं माहेश्वरं ज्योतिरा पातालात्समुत्थितम् ।
अतीत्य सत्यलोकादीननन्तं दिव्यमैश्वरम् ॥

तथा—अन्येऽपि येऽर्थार्थमुपासते मां
तेभ्योऽप्यभीष्टानि विधाय सम्यक् ॥
मद्भक्तियोगेन नियोजयामि
नाथो व्रजेन्मां सकृदप्युपास्य ॥

तथा—स्नात्वा मुमुक्षुर्मणिकर्णिकायां
मृडानि गङ्गाहृदये त्वदास्ये ॥
विश्वेश्वरं पश्यति योऽपि कोऽपि
शिवत्वमायाति पुनर्न जन्म ॥

तथा—संप्राप्य काशीं शिवराजधानीं
मङ्क्त्वा तदग्रे मणिकर्णिकायाम् ॥
दृष्ट्वाऽथ विश्वेश्वरमेकदाऽऽर्यै
स्पृष्ट्वा प्रणामः परमो हि धर्मः ॥

लिङ्गपुराणे—

वाराणस्यां महादेवि तत्र स्थाने स्थितो ह्यहम्
तं दृष्ट्वा मनुजो देवि पशुपाशैः प्रमुच्यते ॥

काशीखण्डे—

यदि जातुचिदन्धकद्विष-
स्तव नामोष्ठपुटाद्विनिःसृतम् ॥
शिव शंकर चन्द्रशेखरे-
त्यसकृत्तस्य न संसृतिः पुनः ॥

तथा—ममेह परमं ज्योतिरा पातालाद्यवस्थितम् ।
अतीत्य सत्यलोकादीननन्तं लिङ्गरूपधृत् ॥
अस्मिन्क्षेत्रे तु येनाहं दृष्टः स्पृष्टः समर्चितः ।
संप्राप्य तारकं ज्ञानं न स भूयोऽभिजायते ॥
यो मामिह समभ्यर्च्य म्रियतेऽन्यत्र कुत्रचित् ।
जन्मान्तरेऽपि मां प्राप्य स विमुक्तो भविष्यति ॥

तथा—काश्यां यो राजधान्यां मे हित्वा मामन्यमर्चयेत् ।
स वराकोऽल्पधीर्मूढोऽल्पतुष्टिर्मुक्तिवर्जितः ॥

तथा—काश्यां लिङ्गान्यनेकानि काश्यां तीर्थान्यनेकशः ।
तथाऽपि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका ॥

तथा—सर्वलिङ्गार्चनात्पुण्यं यावज्जन्म यदर्च्यते ।
सकृद्विश्वेशमभ्यर्च्य श्रद्धया तदवाप्यते ॥
यज्जन्मनां सहस्रेण निर्मलं पुण्यमर्चितम् ।
तत्पुण्यपरिवर्तेन भवेद्विश्वेशदर्शनम् ॥
गवां कोटिप्रदानेन सम्यग्दत्तेन यत्फलम् ।
तत्फलं सम्यगाप्येत विश्वेश्वरविलोकनात् ॥

तथा—अयं विश्वेश्वरः साक्षात्स्थावरात्मा जगत्प्रभुः ।
सर्वेषां सर्वसिद्धीनां कर्ता भक्तिजुषामपि ॥

तथा—अनुग्रहाय सर्वेषां भक्तानामिह सर्वदा ।
स्थास्यामि लिङ्गरूपेण चिन्तितार्थफलप्रदः ॥
अहं सर्वेषु लिङ्गेषु तिष्ठाम्येव न संशयः ।
परं त्वियं परा मूर्तिर्मम लिङ्गस्वरूपिणी ॥

तथा—सर्वतीर्थेषु सस्नौ स सर्वयात्रां व्यधात्स च ।
मणिकर्ण्यां तु यः स्नातो यो विश्वेशं निरैक्षत ॥
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
द्रष्टव्यो विश्वेश्वरो नित्यं स्नातव्या मणिकर्णिका ॥

तथा—येन लिङ्गमिदं दृष्टं श्रद्धया शुद्धचक्षुषा ।
साक्षात्कारेण तेनाहं दृष्ट एव न संशयः ॥
श्रवणादस्य लिङ्गस्य पातकं जन्मसंचितम् ।
क्षणात्क्षयति शृण्वन्तु देवा ऋषिगणैः सह ॥

स्मरणादस्य लिङ्गस्य पापं जन्मद्वयार्जितम् ।
अवश्यं नश्यति क्षिप्रं मम वाक्यान्न संशयः ॥
एतल्लिङ्गं समुद्दिश्य गृहान्निष्क्रमणक्षणात् ।
विलीयते महापापमपि जन्मत्रयार्जितम् ॥
दर्शनादस्य लिङ्गस्य हयमेधशतोद्भवम् ।
पुण्यं लभेत नियतं ममानुग्रहतोऽमराः ॥
स्वयंभुवोऽस्य लिङ्गस्य मम विश्वेशितुः सुराः ।
राजसूयसहस्रस्य फलं स्यात्स्पर्शमात्रतः ॥
पुष्पमात्रप्रदानाच्च चुलुकोदकपूर्वकम् ।
शतसौवर्णिकं पुण्यं लभते भक्तियोगतः ॥
पूजामात्रं विधायास्य लिङ्गराजस्य भक्तितः ।
सहस्रहेमकमलपूजाफलमवाप्यते ॥
विधाय महतीं पूजां पञ्चामृतपुरःसरम् ।
अस्य लिङ्गस्य लभते पुरुषार्थचतुष्टयम् ॥
वस्त्रपूतजलैर्लिङ्गं स्नापयित्वा ममामराः ।
लक्षाश्वमेधजं पुण्यं नित्यं प्राप्नोति सत्तमः ॥
सुगन्धचन्दनरसैर्लिङ्गमालिप्य भक्तितः ।
आलिप्यते सुरस्त्रीभिः सुगन्धैर्यक्षकर्दमैः ॥
सामोदधूपदानैश्च दिव्यगन्धाश्रयो भवेत् ।
घृतदीपप्रबोधैश्च ज्योतीरूपविमानगः ॥
कर्पूरवर्तिदीपेन सकृद्दत्तेन भक्तितः ।
कर्पूरगौरदेहश्रीर्भवेद्भालविलोचनः ॥
दत्त्वा नैवेद्यमात्रं तु सिक्थे सिक्थे युगं युगम् ।
कैलासाद्रौ वसेद्धीमान्महाभोगसमन्वितः ॥
विश्वेशे परमान्नं यो दद्यात्साज्यं सशर्करम् ।
त्रैलोक्यं तर्पितं तेन सदेवपितृमानवम् ॥
मुखवासं तु यो दद्याद्दर्पणं चारुचामरम् ।
उल्लोचं सुखपर्यङ्कं तस्य पुण्यफलं महत् ॥

मुखवासस्ताम्बुलादिः । उल्लोचो वितानम् ।

पूजोपकरणं द्रव्यं यो घण्टागड्डुकादिकम् ।
भक्त्या मे भवने दद्यात् स वसेदत्र मेऽन्तिके ॥

यो गीतवाद्यनृत्यानामेकं मत्प्रीतये व्यधात् ।
तस्याग्रतो दिवारात्रं भवेत्तौर्यत्रिकं महत् ॥
चित्रलेखनकर्मादि प्रासादे मे प्रकारयेत् ।
यः सचित्रान्महाभोगान्भुङ्क्ते मत्पुरतः स्थितः ॥

तथा—यस्तु विश्वेश्वरं दृष्ट्वा ह्यन्यत्रापि विपद्यते ।
तस्य जन्मान्तरे मोक्षो भवत्येव न संशयः ॥
विश्वेशाख्या तु जिह्वाग्रे विश्वनाथकथाश्रुतौ ।
विश्वेशशीलनं चित्ते यस्य तस्य जनिः कुतः ॥

तथा—यैर्न विश्वेश्वरो दृष्टो यैर्न विश्वेश्वरः स्मृतः ।
कृतान्तदूतैस्ते दृष्टास्तैः स्मृता गर्भवेदना ॥
यैरिदं प्रणतं लिङ्गं प्रणतास्ते सुरासुरैः ।

तथा—यद्यद्धितं स्वस्य सदैव तत्त-
ल्लिङ्गेऽत्र देयं मम भक्तिभाग्भिः ॥
इहाप्यमुत्रापि न तस्य संक्षयो
यथेह पापस्य कृतस्य पापिभिः ॥
दूरे स्थितैरप्यधिबुद्धिभिर्यै-
र्लिङ्गं समाराधि ममेदमत्र ॥
मयैव दत्तैः शुभवस्तुजातै-
र्निश्रेयसश्रीर्वरयेत्सततस्तान् ॥

इत्यादिविस्तरः काशीखण्डशततमेऽध्याये ज्ञेयः ।

मात्स्ये—

सर्वदानानि यो दद्यात्सर्वयज्ञेषु दीक्षितः ।
सर्वतीर्थाभिषिक्तः स यः प्रपद्येत मामिह ॥

भारते दानधर्मेषु—

शक्रेण तु पुरा देवो वाराणस्यां जनार्दन ।
आराधितोऽभूद्भक्तेन दिग्वासा भस्मगुण्ठितः ॥
आराध्य स महादेवं देवदेवत्वमाप्तवान् ।

नारदीये—

काशीविश्वेश्वरं लिङ्गं ज्योतिर्लिङ्गं तदुच्यते ।
तद्दृष्ट्वा परमं ज्योतिराप्नोति मनुजोत्तमः ॥

तथा—काश्यां माहेश्वरं लिङ्गं पूजितं नमितं स्तुतम् ।
न तस्य विद्यते कृत्यं संसृतिर्नैव जायते ॥

शिवपुराणे—

काश्यां श्रीदेवदेवस्य विश्वनाथस्य पूजनम् ।
सर्वपापहरं पुंसामनन्ताभ्युदयावहम् ॥
संसारदावनिर्दग्धजीवभूरुहजीवनम् ।
दुःखार्णवौघपतितप्राणिनिर्वाणकारणम् ॥ इत्यादि ।

इति श्रीविश्वनाथमहिमा ।

अथ विश्वनाथप्रासादमहिमा । काशीखण्डे—

त्रैलोक्यनगरे चात्र काशी राजगृहं मम ।
तत्रापि भोगभवनमनर्घ्यमणिनिर्मितम् ॥
मोक्षलक्ष्मीविलासाख्यः प्रासादो मेऽतिशर्मभूः ।
पतत्त्रिणोऽपि मुच्यन्ते यं कुर्वाणाः प्रदक्षिणम् ॥
स्वेच्छया विचरन्तः खे खेचरा अपि देवताः ।
मोक्षलक्ष्मीविलासाख्यप्रासादस्य विलोकनात् ।
शरीराद्दूरतो याति ब्रह्महत्याऽपि नान्यथा ॥
मोक्षलक्ष्मीविलासस्य कलशो यैर्निरीक्षितः ।
निधानकलशास्तं तु न मुञ्चन्ति पदे पदे ॥
दूरतोऽपि पताकाऽपि मम प्रासादमूर्धगा ।
नेत्रातिथीकृता यैस्तु नित्यं तेऽतिथयो मम ॥
भूमिं भित्त्वा स्वयं जातस्तत्प्रासादमिषेण हि ।
आनन्दाख्यस्य कन्दस्य कोऽप्येष परमोऽङ्कुरः ॥

तथा—मम सर्वगतस्यापि प्रासादोऽयं परास्पदम् ।
परं ब्रह्म यदाम्नातं परमोपनिषद्गिरा ॥

अथ मुक्तिमण्डपाद्याः—

निःश्रेयस्याः श्रियो धाम तद्याम्यां मण्डपोऽस्ति मे ।
तत्राहं सततं तिष्ठे तत्सदोमण्डपं मम ॥
निमेषार्धप्रमाणं च कालं तिष्ठति निश्चलः ।
तत्र यस्तेन वै योगः समभ्यस्तः समाः शतम् ॥
निर्वाणण्डपं नाम तत्ख्यातं जगतीतले ।
तत्रचं संजपन्नेकां लभेत्सर्वश्रुतेः फलम् ॥

प्राणायामं तु यः कुर्यादप्येकं मुक्तिमण्डपे ।
तेनाष्टाङ्गः समभ्यस्तो योगोऽन्यत्रायुतं समाः ॥
निर्वाणमण्डपे यस्तु जपेदेकं षडक्षरम् ।
कोटिरुद्रेण जप्तेन यत्फलं तस्य तद्भवेत् ॥
शुचिर्गङ्गाम्भसि स्नातो यो जपेच्छतरुद्रियम् ।
निर्वाणमण्डपे ज्ञेयः स रुद्रो द्विजवेषभृत् ॥
ब्रह्मयज्ञं सकृत्कृत्वा मम दक्षिणमण्डपे ।
ब्रह्मलोकमवाप्याथ परं ब्रह्माधिगच्छति ॥
धर्मशास्त्रपुराणानि सेतिहासानि तत्र यः ।
पठेन्निरभिलाषः सन्स वसेन्मम वेश्मनि ॥
तिष्ठेदिन्द्रियचापल्यं यो निवार्य क्षणं कृती ।
निर्वाणमण्डपेऽन्यत्र तेन तप्तं महत्तपः ॥
वायुभक्षणतोऽन्यत्र यत्पुण्यं शरदां शतम् ।
तत्पुण्यं घटिकार्धेन मौने दक्षिणमण्डपे ॥
मुक्तिमण्डपिकायां तु कुर्यादनशनं बुधः ।
सर्वपापविनिर्मुक्तो नरो मोक्षमवाप्नुयात् ॥
मितं कृष्णलकेनापि यो दद्यान्मुक्तिमण्डपे ।
स्वर्णं सौवर्णयानेन स तु संचरते दिवि ॥
तत्रैकं जागरं कुर्याद्यस्मिन्कस्मिन्दिनेऽपि यः ।
उपोषितोऽर्चयेल्लिङ्गं स सर्वव्रतपुण्यभाक् ॥
तत्र दत्त्वा महादानं तत्र कृत्वा महाव्रतम् ।
तत्राधीत्याखिलं वेदं च्यवते न नरो दिवः ।
प्रयाणं कुर्वतो यस्य प्रणामे मुक्तिमण्डपे ।
समामनुप्रविष्टोऽत्र तिष्ठेद्यावदहं खलु ।
तथा—मुक्तिमण्डपिकायां तु निमेषार्धोपवेशनात् ॥
तत्र धर्मकथालापात्पुराणश्रवणादपि ।
काश्यां निवसतामेवं धर्मराशिः पदे पदे ॥
अत्र श्रुतं स्वर्गादिफलं क्षेत्रान्तरमृतविषयम् ।
तथा—स्मरन्ति ये मामपवर्गमण्डपे
किंचिद्यथाशक्ति ददत्यपि स्वम् ॥
शृण्वन्ति पुण्याश्च कथाः क्षणं स्थिरा-
स्ते कोटिगोदानफलं भजन्ते ॥ इत्यादि ।

तथा—तत्प्रासादपुरोभागे मम शृङ्गारमण्डपः ।

पुरोभागेऽग्रभागे तेन पश्चिमदिशि भैरवप्रदेशे पूर्वभागे ज्ञानमण्डपस्य वक्ष्यमाणत्वात् ।

श्रीपीठं तद्धि विज्ञेयं निःश्रीकश्रीसमर्पणम् ।
मदर्थं तत्र यो दद्याद्दुकूलानि शुचीन्यहो ॥
माल्यानि सुविचित्राणि यक्षकर्दमवन्ति च ।
नानानेपथ्यवस्तूनि पूजोपकरणान्यपि ॥
स श्रियाऽलंकृतस्तिष्ठेद्यत्र कुत्रापि सत्तमः ।

तथा—मोक्षलक्ष्मीविलासाख्यप्रासादस्योत्तरे मम ।
ऐश्वर्यमण्डपं रम्यं तत्रैश्वर्यं ददाम्यहम् ॥

तथा—मत्प्रासादादैन्द्रभागे ज्ञानमण्डपमस्ति यत् ।
ज्ञानं दिशामि सततं तत्र मां ध्यायतां सताम् ॥
भवानीराजसदने ममास्ति हि महानसम् ।
यत्तत्रोपहृतं पुण्यैर्निर्विशामि मुदैव तत् ॥
विशालाक्ष्या महासौधे मम विश्रामभूमिका ।
तत्र संसृतिखिन्नानां विश्रामं श्राणयाम्यहम् ॥
नियमस्नानतीर्थं च चक्रपुष्करणी मम ।
तत्र स्नानवतां पुंसां तन्नैर्मल्यं दिशाम्यहम् ॥
परं लिङ्गार्चनं स्थानमविमुक्तेश्वरं मम ।
तत्र पूजां सकृत्कृत्वा कृतकृत्यो नरो भवेत् ॥
सायं पाशुपतीं संध्यां कुर्यात्पाशुपतीश्वरे ।
विभूतिधारणात्तत्र पशुपाशैर्न बाध्यते ॥
प्रातःसंध्यां करोम्येव सदोंकारनिकेतने ।
तत्रैकाऽपि कृता संध्या सर्वपातककृन्तनी ॥ इत्यादि ।

इति मुक्तिमण्डपादि ।

अथ दण्डपाणिमाहिमा । तत्र काशीखण्डे द्वात्रिंशेऽध्याये कथा—गन्धमादनपर्वते रत्नभद्रनामा गन्धर्वः संपूर्णभद्राख्यं सुतं जनयित्वा दिष्टां गतिं लेभे । ततः पूर्णभद्रः सर्वाभीष्टविशिष्टोऽपि भूयस्यपि काले सुतमलब्ध्वा दुःखितः कनककुण्डलाख्यां पत्नीमाहूयोवाच । इयं समृद्धिः सुतं विना मां न सुखयति तद्यदि सुताप्तावुपायोऽस्ति तर्हि ब्रूहीति । ततः

सोवाच । कान्त सदाशिवभक्त्या न किंचिद्दुरापं ततः पुत्राप्तये स सेव्य इति । ततः स यक्षो गीतिविद्यया श्रीशिवमाराध्याल्पैरेवाहोभिस्तस्यां पत्न्यां सुतं लेभे । तस्य हरिकेश इति नामाकार्षीत् । स च बालोऽपि पूजननामग्रहणकथाश्रवणादिना शिवमतीव भेजे । पित्रा स पुत्रो गृहे दीयतां मन इत्यसकृच्छिक्षितोऽपि यदा भक्तिं न जहौ तदा पितरं क्रुद्धं समीक्ष्य गृहान्निर्गत्य क्षुत्तृड्भ्यां व्याकुलीभूय बाल्ये श्रुतं कस्यचिद्ब्राह्मणस्य वचः सस्मार—

पदे पदे समाक्रान्ता ये विपद्भिरहर्निशम् ।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥
पापराशिभिराक्रान्ता ये दारिद्र्यपराजिताः ।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥
संसारभयभीता ये ये बद्धाः कर्मबन्धनैः ।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ इत्यादि ।

एवं विचिन्त्य वाराणसीं गतः । तत्र च तपश्चचार । एतस्मिन्नेव काले शिवः शिवया सहाऽऽनन्दवनं पश्यंस्तत्राऽऽगतस्तपस्यन्तं हरिकेशं ददर्श । ततस्तमतीव कृशं दृष्ट्वा भवानी शिवं व्यजिज्ञपत् । अयं तव भक्तो वरोऽस्मै देय इति । ततो महादेवेन वृषादवतीर्य हस्तेन दयया संस्पृष्टः सन्महादेवं निरीक्ष्य तुष्टाव । तया स्तुत्या तुष्टो भवो वरान्ददौ ।

त्वं दण्डपाणिर्भव नामतोऽधुना
सर्वान्गणाञ्शाधि ममाऽऽज्ञयोत्कटान् ॥
गणाविमौ त्वामनुयायिनौ सदा
नाम्ना यथार्थौ नृपु संभ्रमोद्भ्रमौ ॥
त्वमन्नदः काशिनिवासिनां सदा
त्वं प्राणदो ज्ञानद एक एव हि ॥
त्वं मोक्षदो मन्मुखसूपदेशत-
स्त्वं निश्चलां सद्वसतिं विधास्यसि ॥
त्वं विघ्नपूगैः परिपीड्य पापिनः
संभ्रान्तिमुत्पाद्य विनेष्यसे बहिः ॥
आनीय भक्तान्क्षणतोऽपि दूरतो
मुक्तिं परां दापयिताऽसि पिङ्गल ॥
त्वत्सात्कृते क्षेत्रवरेऽथ यक्षराट्
कस्त्वामनाराध्य विमुक्तिभाजनम् ॥

यक्षराडिति संबोधनम् ।

> समाजनं पूर्वत एव ते चरे-
> त्ततः समर्चां मम भक्त आचरेत् ।

समाजनं पूजाम् ।

> पूर्णभद्रसुत दण्डनायक
> त्र्यक्ष यक्ष हरिकेश पिङ्गल ।
> काशिवासवसतां सदाऽन्नद
> ज्ञानमोक्षद गणाग्रणीर्भव ॥
> मद्भक्तियुक्तोऽपि विना त्वदीयां
> भक्तिं न काशीवसतिं लभेत ।
> गणेषु देवेषु हि मानवेषु
> तदग्रमान्यो भव दण्डपाणे ॥
> ज्ञानोदतीर्थे विहितोदकक्रियो
> यस्त्वां समाराधयिता गणेशम् ।
> स एव लोके कृतकृत्यतामगा-
> न्ममातुलानुग्रहतोऽत्र पुण्यवान् ॥
> त्वं दक्षिणस्यां दिशि दण्डपाणे
> सदैव मे नेत्रसमक्षमत्र ।
> इत्थं दण्डयन्प्राणभृतो निरीहा-
> निहाऽऽस्त्र नृन्स्वानभयं दिशन्वै ॥

यक्षराजाष्टकं स्तोत्रं तु नित्ययात्राप्रकरणे ज्ञेयम् । मत्स्यपुराणे श्रीमहादेव उवाच—

> जरामरणसंत्यक्तः सर्वरोगविवर्जितः ।
> भविष्यसि गणाध्यक्षो वरदः सर्वपूजितः ॥
> अजेयश्चापि सर्वेषां योगैश्वर्यसमन्वितः ।
> अन्नदश्चापि लोकेभ्यः क्षेत्रपालो भविष्यसि ॥
> महाबलो महासत्त्वो ब्रह्मण्यो मम च प्रियः ।
> त्र्यक्षश्च दण्डपाणिश्च महायोगी तथैव च ॥
> उद्भ्रमः संभ्रमश्चैव गणौ ते परिचारकौ ।
> तवाऽऽज्ञां च करिष्येते लोकस्योद्भ्रमसंभ्रमौ ॥

तथा—देवब्राह्मणविद्विष्टा देवभक्तिविनिन्दकाः ।
ब्रह्मघ्नाश्च कृतघ्नाश्च तथा वैकृतिकाश्च ये ॥
लोकद्विष्टा गुरुद्विष्टास्तीर्थायतनदूषकाः ।
सर्वपापरताश्चैव ये चान्ये कुत्सिता भुवि ॥
तेषां नास्तीह वासोऽत्र स्थितोऽसौ दण्डनायकः ।
रक्षणार्थं नियुक्तं वै दण्डनायकमुत्तमम् ॥
पूजयित्वा यथाशक्त्या गन्धपुष्पादिधूपनैः ।
ईश्वरानुगृहीता हि गतिं गाणेश्वरीं गताः ॥

इत्यादि । शैवेऽप्येवम् ।

अथ भैरवप्रादुर्भावः । तत्र काशीखण्डे त्रिंशेऽध्याये—
कोऽसौ भैरवनामाऽत्र काशीपुर्यां व्यवस्थितः ।
किं रूपमस्य किं कर्म कानि नामानि चास्य वै ॥
कथमाराधितश्चैव सिद्धिदः साधकस्य वै ।
आराधितः कुत्र काले क्षिप्रं सिध्यति भैरवः ॥

इत्यगस्त्येन पृष्टे स्कन्देनोक्तम्—

पूर्वं मेरावृषिभिः कः सकलश्रेष्ठ इति पितामहः पृष्टस्ततः स स्वात्मानमेवाहमेवेश्वरः सर्वश्रेष्ठ इति कथितवान् । तदसहमानेन विष्णुनोक्तमहं श्रेष्ठ इति । ततस्तावहंश्रेष्ठत्वे विवदमानौ चतुरोऽपि वेदान्पृष्टवन्तौ तैश्च शिवः श्रेष्ठ इत्युक्तेऽपि यदा ब्रह्मणो मायामोहितस्याभिमानो नापयातस्तदा सदाशिवः प्रादुर्भूय स्वकोपतः पुरुषान्तरमुत्पाद्यायं ब्रह्मा त्वया दण्ड्य इति तमूचे ।

किंच—कालवद्भ्राजसे साक्षात्कालराजस्ततो भवान् ।
विश्वं भर्तुं समर्थोऽसि भरणाद्भैरवः स्मृतः ॥
आमर्दयिष्यसि भवान्रुष्टो दुष्टात्मनो यतः ।
आमर्दक इति ख्यातिं ततः सर्वत्र यास्यसि ॥
यतः पापानि भक्तानां भक्षयिष्यसि तत्क्षणात् ।
पापभक्षण इत्येव तव नाम भविष्यति ॥
आधिपत्यं च काश्यां ते कालराज सदैव हि ।
तत्र ये पापकर्तारस्तेषां शास्ता त्वमेव हि ॥
शुभाशुभं न तत्कर्म चित्रगुप्तो लिखिष्यति ।

इति वराँल्लब्ध्वा सः—

वामाङ्गुष्ठनखाग्रेण चकर्त च शिरो विधेः ।

एवं निन्दाकारिवक्त्रयुते पञ्चमे शिरसि च्छिन्ने भवो ब्रह्महत्यासंज्ञामतिभीषणां स्त्रियमुत्पाद्य तां प्रत्युवाच । त्वया काशीप्रवेशावध्यस्मिन्स्थेयम् । त्वं च भैरवैतं कपालं धारयन्व्रतं चाऽऽराधयेति । ततः स त्रैलोक्ये विचरन्काशीं प्राप । प्रविष्टमात्रे च तस्मिन्कपालं हस्तात्पपात । हत्या च पातालं गता ।

ततः कपालमोचनं तीर्थं पुरस्कृत्य तु भैरवः ।
तत्रैव तस्थौ भक्तानां भक्षयन्नघसंततिम् ॥ इति ।

अथ भैरवमहिमा । तत्र पापभक्षामर्दकेश्वरौ तद्रूपावेवेति काशीखण्ड उक्तम्—

पापभक्षणमासाद्य कृत्वा पापशतान्यपि ।
कुतो बिभेति पापेभ्यः कालभैरवसेवकः ॥
आमर्दयति पापानि दुष्टानां च मनोरथान् ।
आमर्दक इति ख्यातस्ततोऽसौ कालभैरवः ॥
कलिं कालं कलयति सदा काशीनिवासिनाम् ।
अतः ख्यातिं परां प्राप्तः कालभैरवसंज्ञिताम् ॥
सदैव यस्य भक्तेभ्यो यमदूताः सुदारुणाः ।
परमां भीरुतां प्राप्तास्ततोऽसौ भैरवः स्मृतः ॥

तथा— यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिभिः ।
तत्सर्वं विलयं याति कालभैरवदर्शनात् ॥
विश्वेश्वरेऽपि ये भक्ता नो भक्ताः कालभैरवे ।
काश्यां ते विघ्नसंघातं लभन्ते तु पदे पदे ॥
तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः ।
विलोक्य कालराजं च निरयादुद्धरेत्पितॄन् ॥

तथा—आमर्दकेश्वरं दृष्ट्वा तस्मिन्पक्षे तु यत्कृतम् ।
तत्सर्वं नश्यते पापं कालभैरवरूपिणम् ॥
तस्मिन्नामर्दके पीठे जप्त्वाऽस्याभीष्टदेवताम् ।
षण्मासं सिद्धिमाप्नोति साधको भैरवाज्ञया ॥

तथा—यं यं चिन्तयते कामं पापभक्षणसेवया ।
बलिपूजोपहारैश्च ध्रुवं तं स समवाप्नुयात् ॥

तथा—तथैव भैरवाश्चाष्टौ दिक्ष्वष्टासु प्रतिष्ठिताः।
रक्षन्ति सततं काशीं निर्वाणश्रीनिकेतनम् ॥
रुरुश्चण्डोऽसिताङ्गश्च कपाली क्रोधनस्तथा।
उन्मत्तभैरवस्तद्वत्क्रमात्संहारभीषणौ ॥

विद्युज्जिह्वादयश्चतुष्षष्टिवेतालाश्च द्विसप्ततितमेऽध्याये ज्ञेयाः। अथ भवानीमहिमा। काशीखण्डे—

योगं क्षेमं सदा कुर्याद्भवानी काशिवासिनाम्।
तस्माद्भवानी संसेव्या सततं काशिवासिभिः ॥
गृहमेध्यत्र विश्वेशो भवानी तत्कुटुम्बिनी।
सर्वेभ्यः काशिसंस्थेभ्यो मोक्षभिक्षां प्रयच्छति ॥ इत्यादि।

सनत्कुमारसंहितायाम्—
ये येऽभिवाञ्छन्ति समस्तभोगा—
निहापि मुक्तिं परतोऽप्यविघ्नम् ॥
तेभ्यः समस्तं ददती भवानी
वसत्यजस्रं गृहिणी मृडस्य ॥

ब्रह्मवैवर्ते—
दीनं वदान्यं महदल्पकं वा
पुण्यं महापातकसंयुतं वा ॥
आराधिता समतां संविधत्ते
दयापरा भोगमोक्षैकहेतुः ॥

इत्यादिस्तुतिस्तु नित्ययात्रायां वक्ष्यते।
अथाऽऽदित्योद्देशः। काशीखण्डे—
लोलार्क उत्तरार्कश्च साम्बादित्यस्तथैवच।
चतुर्थो द्रुपदादित्यो मयूरवादित्य एव च ॥
खखोल्कश्चारुणादित्यो वृद्धकेशवसंज्ञकौ।
दशमो विमलादित्यो गङ्गादित्यस्तथैव च ॥
द्वादशश्च यमादित्यः काशिपुर्यां घटोद्भव।
तमोधिकेभ्यो दुष्टेभ्यः क्षेत्रं रक्षन्ति सर्वदा ॥
तत्रापि—लोलार्कस्त्वसिसंभेदे दक्षिणस्यां दिशि स्थितः।
योगक्षेमं सदा कुर्यात्काशीवासिजनस्य च ॥

तथा—तस्यार्कस्य मनो लोलं यदासीत्काशिदर्शने ।
अतो लोलार्क इत्याख्या काश्यां जाता विवस्वतः ॥

तथा—लोलार्कसंगमे स्नात्वा दानं होमः सुरार्चनम् ।
यत्किंचित्क्रियते कर्म तदानन्त्याय कल्पते ॥
नरः स्नात्वाऽसिसंभेदे संतर्प्य पितृदेवताः ।
श्राद्धं विधाय विधिना पित्रानृण्यमवाप्नुयात् ॥

तथा—न तस्य दुःखं नो पामा न दद्रूर्न च चर्चिका ।
लोलार्कमर्कं यः पश्येत्तत्पादोदकसेवकः ॥
वाराणस्यामुषित्वाऽपि यो लोलार्कं न सेवते ।
सेवन्ते तं नरं नूनं क्लेशाः क्षुद्व्याधिसंभवाः ॥
सर्वेषां काशितीर्थानां लोलार्कः प्रथमं शिरः ।
ततोऽङ्गान्यन्यतीर्थानि तज्जलप्लावितानि हि ॥
अथोत्तरस्यामाशायां कुण्डमर्काख्यमुत्तमम् ।
तत्र नाम्नोत्तरार्केण रश्मिमाली व्यवस्थितः ॥
तापयन्दुःखसंघातं साधूनाप्यायवन्रविः ।
उत्तरार्को महातेजाः काशीं रक्षति सर्वदा ॥

तथा बर्कर्या वरप्रस्तावे—

बर्करीकुण्डमित्याख्या बर्ककुण्डस्य जायताम् ।
एतस्याः प्रतिमा पूज्या भविष्यत्यत्र मानवैः ॥

एतस्या बर्कर्याः ।

साम्बो वाराणसीं प्राप्य समाराध्यांशुमालिनम् ।
कुण्डं तत्पृष्ठतः कृत्वा निजां प्रकृतिमाप्तवान् ॥

निजां प्रकृतिं कुष्ठरोगाभावम् ।

साम्बादित्यस्तदारभ्य सर्वव्याधिहरो रविः ।
ददाति सर्वभक्तेभ्योऽनामयाः सर्वसंपदः ॥

रविणा द्रौपद्यै वरप्रदाने—

विश्वेशाद्दक्षिणे भागे यो मां त्वत्पुरतः स्थितम् ।
आराधयिष्यति नरः क्षुद्बाधा तस्य नश्यति ॥
अन्यश्च मे वरो दत्तो विश्वेशेन पतिव्रते ।
तपसा परितुष्टेन तन्निशामय वच्मि ते ॥

प्राग्रवे त्वां समाराध्य यो मां द्रक्ष्यति मानवः।
तस्य त्वं दुःखतिमिरमपानुद निजैः करैः॥
ये मामत्र भजिष्यन्ति मानवाः श्रद्धयाऽन्विताः।
त्वद्धरोद्यतपाणिं च तेषां दास्यामि चिन्तितम्॥
भवतीं मत्समीपस्थां युधिष्ठिरपतिव्रताम्।
विश्वेशाद्दक्षिणे भागे दण्डपाणिसमीपतः॥
येऽर्चयिष्यन्ति भावेन पुरुषा वा स्त्रियोऽपि वा।
तेषां कदाचिन्नो भावि भयं प्रियवियोगजम्॥
न व्याधिजं भयं क्वापि न क्षुत्तृड्दोषसंभवम्।
द्रौपदीक्षणतः काश्यां तव धर्मप्रियेऽनघे॥

तथा शिवः—

मयूखा एव ते दृष्टा न च दृष्टं कलेवरम्।
मयूखादित्य इत्याख्या ततस्तेऽदितिनन्दन॥
त्वदर्चतां नृणां कश्चिन्न व्याधिः प्रभविष्यति।

तथा—खखोल्को नाम भगवानादित्यः परिकीर्तितः॥
त्रिविष्टपोत्तरे भागे सर्वव्याधिविघातकृत्।

त्रिविष्टपं त्रिलोचनस्थानम्।

तथा—काशीवासिजनानेकगदग्रामक्षयंकरः।
विनतादित्य इत्याख्यः खखोल्कस्तत्र संस्थितः॥
इत्थं खखोल्क आदित्यः काशीविघ्नतमोहरः।
तस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते॥
काश्यां पैशङ्गिले तीर्थे खखोल्कस्य विलोकनात्।
नरश्चिन्तितमाप्नोति नीरोगो जायते क्षणात्॥

पैशङ्गिले पिलिप्पिलातीर्थे। अथारुणं प्रत्यर्कवरप्रदानम्—

अत्र त्वत्स्थापितां मूर्तिं ये भजिष्यन्ति मानवाः।
वाराणस्यां महादेवोत्तरे तेषां कुतो भयम्॥
येऽर्चयिष्यन्ति सततमरुणादित्यसंज्ञकम्।
मामत्र तेषां नो दुःखं न दारिद्र्यं न पातकम्॥
व्याधिभिर्नाभिभूयन्ते नोपसर्गैश्च कैश्चन।
शोकाग्निना न दह्यन्ते ह्यरुणादित्यसेवनात्॥

तथा दक्षिणेन विशालाक्ष्या इत्युपक्रम्य—

वृद्धेनाऽऽराधितो यस्माद्धारीतेन तपस्विना ।
आदित्यो वार्धकहरो वृद्धादित्यस्ततः स्मृतः ॥
वृद्धादित्यं समाराध्य वाराणस्यां घटोद्भव ।
जरादुर्गतिरोगघ्नं बहवः सिद्धिमागताः ॥

तथोत्तरेणाऽऽदिकेशवादित्युक्त्वा—

अतः स केशवादित्यः काश्यां भक्ततमोनुदः ।
समर्चितः सदा देयान्मनसो वाञ्छितं फलम् ॥
केशवादित्यमाराध्य वाराणस्यां नरोत्तमः ।
परमं ज्ञानमाप्नोति येन निर्वाणभाग्भवेत् ॥
तत्र पादोदके तीर्थे कृतसर्वोदकक्रियः ।
विलोक्य केशवादित्यं मुच्यते जन्मपातकैः ॥

तथा—अतः परं शृणु मुने विमलादित्यमुत्तमम् ।
हरिकेशवने रम्ये वाराणस्यां व्यवस्थितम् ॥

इत्युपक्रम्य—

इत्थं स विमलादित्यो वाराणस्यां शुभप्रदः ।
तस्य दर्शनमात्रेण कुष्ठरोगः प्रशाम्यति ॥
गङ्गादित्योऽस्ति तत्रान्यो विश्वेशाद्दक्षिणेन वै ।
तस्य दर्शनमात्रेण नरः शुद्धिमियादिह ॥
गङ्गादित्यं समासाद्य वाराणस्यां नरोत्तमः ।
न जातु दुर्गतिं क्वापि लभते न च रोगभाक् ॥
यमेशात्पश्चिमे भागे वीरेशात्पूर्वतो मुने ।
यमादित्यं नरो दृष्ट्वा यमलोकं न पश्यति ॥
यमेशं च यमादित्यं यमेन स्थापितं नमन् ।
यमतीर्थे कृतस्नानो यमलोकं न पश्यति ॥

अत्रार्थक्रमेण पाठक्रमबाधात्स्नानानन्तरं नतिर्ज्ञेया । इति द्वादशाऽऽदित्याः ।

अथ षट्पञ्चाशद्गणेशाः । तत्र काशीखण्डश्लोकलेखनेऽतिविस्तरापातात्तदर्थ एवोच्यते । असीसंगमेऽर्कविनायकः १ । क्षेत्राद्दक्षिणे दुर्गाविनायकः २ । भीमचण्डीसमीपे भीमचण्डीविनायकः ३ । क्षेत्र-

पश्चिमे देहलिविनायकः ४। क्षेत्राद्वायव्ये उद्दण्डविनायकः ५। क्षेत्रोत्तरे पाशपाणिविनायकः ६। वरणासंगमे खर्वविनायकः ७। क्षेत्रप्राच्यां सिद्धिविनायकः ८। एतेऽष्टौ बाह्यावरणे। अर्कविनायकादुत्तरतो लम्बोदरविनायकः ९। दुर्गविनायकादुत्तरे कूटदन्तविनायकः १०। भीमचण्डीविनायकादीशाने शालकटंकटविनायकः ११। देहलिविनायकात्प्राच्यां कूष्माण्डविनायकः १२। उद्दण्डादाग्नेय्यां मुण्डविनायकः १३। पाशपाणेर्दक्षिणे विकटद्विजविनायकः १४। खर्वान्नैर्ऋत्यां राजपुत्रविनायकः १५। तस्माद्दक्षिणे प्रणवविनायकः १६। एतेऽष्टौ द्वितीयावरणे। लम्बोदरादुदीच्यां वक्रतुण्डविनायकः १७। कूटदन्तादुत्तर एकदन्तविनायकः १८। शालकटङ्कटादीशाने त्रिमुखविनायकः १९। कूष्माण्डात्पूर्वतः पञ्चास्यविनायकः २०। मुण्डादाग्नेय्यां हेरम्बविनायकः २१। विकटदन्ताद्दक्षिणतो विघ्नराजविनायकः २२। राजपुत्रान्नैर्ऋत्ये वरदविनायकः २३। प्रणवाद्याम्यां मोदकप्रियविनायकः २४। एतेऽष्टौ तृतीयावरणे। वक्रतुण्डादुत्तरेऽभयदविनायकः २५। एकदन्तादुत्तरे सिंहतुण्डविनायकः २६। त्रितुण्डादीशान्यां कूणिताक्षविनायकः २७। पञ्चास्यात्प्राच्यां क्षिप्रप्रसादनविनायकः २८। हेरम्बादाग्नेय्यां चिन्तामणिविनायकः २९। विघ्नराजाद्दक्षिणे दन्तहस्तविनायकः ३०। वरदान्नैर्ऋते पिचिण्डिलविनायकः ३१। मोदकप्रियाद्दक्षिण उद्दण्डमुण्डविनायकः ३२। एतेऽष्टौ चतुर्थावरणे। अभयदादुत्तरे स्थूलदन्तविनायकः ३३। सिंहतुण्डादुत्तरे कलिप्रियविनायकः ३४। कूणिताक्षादीशाने चतुर्दन्तविनायकः ३५। क्षिप्रप्रसादनात्प्राच्यां द्वितुण्डविनायकः ३६। चिन्तामणेराग्नेये ज्येष्ठविनायकः ३७। दन्तहस्ताद्याम्यां गजविनायकः ३८। पिचिण्डिलाद्दक्षिणे कालविनायकः ३९। उद्दण्डमुण्डाद्याम्यां नागेशविनायकः ४०। एतेऽष्टौ पञ्चमावरणे। प्राच्यां मणिकर्णिविनायकः ४१। आग्नेय आशाविनायकः ४२। दक्षिणे सृष्टिविनायकः ४३। नैर्ऋते यक्षविनायकः ४४। पश्चिमे गजकर्णविनायकः ४५। वायव्ये चित्रघण्टविनायकः। ४६। उत्तरे स्थूलजङ्घविनायकः ४७। ईशाने मङ्गलविनायकः ४८। एते षष्ठावरणे। मोदप्रमोदामोदसुमुखदुर्मुखज्ञानद्वाराविमुक्तविनायका अष्टौ प्रागादिक्रमेण सप्तमावरणे ५६।

षट्पञ्चाशद्गजमुखानेतान्यः संस्मरिष्यति।
दूरदेशान्तरस्थोऽपि स मृतो ज्ञानमाप्नुयात्॥

इमे गणेश्वराः सर्वे स्मर्तव्या यत्र कुत्रचित् ।
महाविपत्समुद्भ्रान्तः पतितं पान्ति मानवम् ॥ इति ।

भगीरथहरिश्चन्द्रकपर्दीचिन्दुविनायकाश्चत्वारोऽपरेऽपि सप्तपञ्चाशेऽध्याये ज्ञेयाः । सर्वसंपत्करं नाम ढुण्ढिस्तोत्रमपि तत्रैव ज्ञेयम् ।

अथात्र विष्णुमूर्तयः । काशीखण्ड एकषष्टितमेऽध्याये काश्चिद्विष्णुमूर्तीरुक्त्वाऽन्त उक्तम्—

नारायणाच्छतं पञ्चशतं च जलशायिनः ।
त्रिंशत्कमठरूपाणि मत्स्यरूपाणि विंशतिः ॥
गोपालाश्च शतं सार्द्धं बुद्धाः सन्ति सहस्रशः ।
त्रिंशत्परशुरामाश्च रामा एकोत्तरं शतम् ॥
विष्णुरूपोऽस्म्यहं चैको मुक्तिमण्डपमध्यतः । इति ।

अथाऽऽवश्यकतीर्थानि । ब्रह्मवैवर्ते सूतः—

आवश्यकानि तीर्थानि शृण्वन्तु द्विजसत्तमाः ।
अस्नानात्प्रत्यवायी स्यादविमुक्ते स्थितो नरः ॥
गङ्गास्नानं नित्यमेव प्रशस्तं
गङ्गास्नायी सर्वतीर्थेषु सस्नौ ॥
गङ्गास्नानोपेक्षयाऽन्यस्य यात्रा
नो कर्तव्या धर्मद्रुग्भिर्नृभिर्हि ॥
मध्याह्ने मणिकर्णिकामनुसरेत्सर्वाघहन्त्रीं पुन-
र्मोक्षार्थादिसमस्तसिद्धिदजलां विष्णोस्तपःसत्फलम् ॥
देवा देवमुनीश्वराश्च ऋषयो नागाः सुरा मानवाः
कृत्वा धर्मशतं महेशशरणा यां प्रार्थयन्तेऽनिशम् ॥
ततः पुनः पञ्चनदं रमापते-
र्निवासभूतं सकलार्थसिद्धिदम् ॥
स्नायान्नरः पापविनाशपूर्व-
मोक्षान्तसिद्धिप्रदमादरेण ॥
आदिकेशवपदं परं पदं
संगमं वरणया च गङ्गया ॥
स्नाति यः सुकृतपूरपूरितो
यत्र विष्णुपदभाक्स जायते ॥

शूलटङ्कपुरतः प्रजापते-
स्तीर्थमुत्तममतिप्रयागकम् ॥
गङ्गया यमुनया च संगमं
तत्र मज्जनकृतां न मज्जनम् ॥
गङ्गासिसंभेदवरे निमज्ज्य
नरो निमज्जेन्न भवाब्धितोये ॥
सुतीर्थकामस्य सुकामपूर्ति-
र्भवेदवश्यं खलु यत्र सिद्धाः ॥
गङ्गातीरे यानि तीर्थानि सन्ति
तेषु स्नानं गङ्गया सिध्यतीह ॥
लिङ्गं तीर्थं तिष्यकाले समेत-
सूत्रेण स्याज्ज्ञानमत्रत्यलोकैः ॥
नित्यानि तीर्थानि भवन्ति चैता-
न्यन्यानि यात्रादिवसेऽधिकानि ॥
तत्तद्दिने कार्यशतं विहाय
स्नानार्थमेव प्रयतोऽभिगच्छेत् ॥

गङ्गास्नानमिति । अत्र यद्यप्यविशेषेणोक्तं तथाऽपि पुनः पञ्चनद-मित्यग्र उक्तेः प्रातः पञ्चनदे स्नानमिति वचनाच्चेदं स्नानं पञ्चनदे प्रातश्च द्रष्टव्यम् । तत इति । इदं च मध्याह्ने मणिकर्णिकास्नानानन्तरम् । प्रत्यहं क्रमेण पञ्चनदादितीर्थचतुष्टये स्नानं क्षेत्रसंन्यासिविषयम् । अन्यस्य तु प्रातः पञ्चनदस्नानं मध्याह्ने मणिकर्णिकास्नानं चेति द्वयमेवाऽऽवश्यकम् । यद्वा नूतनागतविषयमेतत् । तस्यैतावन्त्यावश्यकानि, अस्नानात्प्रत्यवायी स्यादित्युक्तेः । तीर्थान्तरकरणे फलाधिक्यं न त्वकरणे काशीयात्रावैगुण्यम् । अविमुक्ते स्थित इत्यपि तत्परमेव । नूतनागतेऽपि स्थितत्वाद्भूमादिपरमत्वर्थीयाभावाच्च । एतेषां च नित्यानामपि सतां पापनाशादिफलं संयोगपृथक्त्वन्यायेन ज्ञेयम् । गङ्गातीर इति । गङ्गास्नानादेव तत्स्नानसिद्धिर्न तु तत्पृथक्कार्यम् । लिङ्गमिति । कलौ तीर्थपरिचायकान्तराभावाल्लिङ्गसमसूत्रेण तत्प्राच्यां तत्तीर्थमित्यर्थः । स्नानार्थमेवेति । अभिगच्छेदेवेत्येवकारो भिन्नक्रमस्तेन तत्तद्दिने तत्तद्यात्रा नित्येति सिध्यति ।

अथावश्यपूज्यदेवाः । तत्र ब्रह्मवैवर्ते—'अवश्यपूज्यं वद देववृन्दं पृच्छामि निर्विघ्ननिवासकामः' इति शिष्येण पृष्टे गुरुरुवाच—

ये काश्यां निवसन्ति शंकरहरिस्वाराधनातत्परा-
स्तेषां पापचयोऽपि याति विलयं मुक्तिं लभन्तेऽपि च ॥
ये काश्यां भवनाशनीं भगवतीं श्रीमद्भवानीं जनाः
सेवन्ते सततं सुपूजनपरिक्रामादिभिस्ते स्थिराः ॥

परिक्रामः प्रदक्षिणा ।

सर्वेषां विघ्नहर्तॄणां कर्तॄणामपि सेश्वरी ।
अतो भवान्यधीनं हि क्षेत्रं पूज्या ततः परा ॥

ये काश्यां प्रभजन्ति ढुण्ढिगणपं सर्वाघविघ्नापहं
तेषां ढुण्ढ्यसमस्तशास्त्रविहितान्भोगान्प्रयच्छत्यसौ ॥
ये नानाविधमोदकैः सुमधुरैर्विप्रान्सुपूज्याऽऽदरात्
स्तुत्वा मोदकदास्त एव सुखिनः काश्यामवश्यं जनाः ॥

ढुण्ढिराजः प्रियः पुत्रो भवान्याः शंकरस्य च ।
तस्य पूजनमात्रेण त्रयोऽपि वरदाः सदा ॥
गणेशः सर्वदेवानामादौ पूज्यः सदैव हि ।
सर्वैरपि महाविघ्ननाशकोऽन्यत्र किंत्विह ॥
ये कालराजं कलिराजभीषणं
ह्याराधयन्तो वटकाज्यभक्तैः ॥
भजन्ति काश्यामपवर्गहेतो-
स्त एव काश्यामपवर्गभाजः ॥
आराधितः कालराजो महेशः
पापानि सर्वाणि विनाशयत्यलम् ॥
मनःप्रशुद्धिं प्रकरोति येन
भजत्यजस्रं शिवमीशितारम् ॥
ये दण्डपाणिं द्विजभोजनाद्यै-
र्भजन्ति काश्यां सुखवासहेतोः ॥
ते विघ्नपूगान्परिहृत्य दूरा-
दारात्पदं शाश्वतमाप्नुवन्ति ॥
दण्डपाणिभजनं सुखावहं
संभ्रमोद्भ्रमविकारनाशनम् ॥
भक्ष्यभोज्यसुखमोक्षदं यत-
स्तद्विना भवति व्याकुलो यतः ॥

लोलार्कादिरवीन्रवौ सुमधुरैर्दुग्धादिभिः सुद्विजै-
नाराध्याऽऽश्रमवासिनोऽपि सततं भावैर्भजन्ते जनाः॥
तेषां शोकरजादिदोषनिवहान्दूरी करोत्येव य-
त्सर्वेषामभिवाञ्छितं च विदधात्याराधितो भास्करः॥

लिङ्गपुराणे—

अतः परं प्रवक्ष्यामि चण्डिकाः क्षेत्रसंस्थिताः।
दक्षिणे रक्षते दुर्गा उत्तरेश्वरी नैर्ऋते॥
अङ्गारेश्वरी पश्चिमे तु वायव्ये भद्रकालिका।
उत्तरे भीष्मचण्डी च महागुह्या तथेशतः॥
ऊर्ध्वकेशीसमायुक्ता शांकरी पूर्वतः स्मृता।
ऊर्ध्वकेशी तथाऽऽग्नेये चित्रघण्टा च मध्यतः॥
एतास्तु चण्डिका देवि योऽत्र द्रक्ष्यति मानवः।
तस्य तुष्टाश्च ताः सर्वाः क्षेत्रं रक्षन्ति तत्पराः॥
विघ्नं कुर्वन्ति सततं पापानां देवि सर्वदा।
तस्माच्चैव सदा पूज्याश्चण्डिकाः सविनायकाः॥
यदीच्छेत्सततं देवि वाराणस्यां शुभार्थिताम्।

इदं च पुराणद्वयोक्तमपि देवपूजनं क्षेत्रनिवासिनां निर्विघ्नताख्यफल-द्वाराऽध्ययनवदावश्यकम्। तत्फलकता च निर्विघ्ननिवासकामो विघ्नं कुर्वन्ति सततमित्यादिना गम्यते। तेन नूतनागतानामिदमावश्यकं न भवति। करणे तु फलातिशय इति। अत्रापि निर्विघ्नार्थत्वे सत्यपि फलान्तरार्थत्वमपि संयोगपृथक्त्वेन।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थली-सेतौ काशीप्रकरणे नानातीर्थनानादेवताकथनम्।

---

## अथ नित्ययात्रा।

---

ब्रह्मवैवर्ते ऋषिप्रश्नः—

नित्ययात्राविधानं तु वक्तुमर्हसि सत्तम।
यथा क्षेत्रकृतं पापं नित्यमेव प्रणश्यति॥

भगवानुवाच—

प्रातः प्रातः समुत्थाय ढुण्ढिराजं नमेत्पुनः ।
भवानीशंकरं पश्चात्कालभैरवमेव च ॥
दण्डपाणिगणेशांश्च केशवादित्यचण्डिकाः ।
ततः शौचादिकं कृत्वा दन्तधावनपूर्वकम् ॥
स्नानमुत्तरवाहिन्यां श्रुत्यादिषु यथोदितम् ।
ततः संध्यातर्पणादि विधाय स्वाधिकारतः ॥
विश्वेश्वरं स्मरन्गच्छेत्पूजासाधनसंयुतः ।
आदौ देव्या मण्डपं संप्रविश्य
तत्र स्थित्वा पूजयेद्वै भवानीम् ॥
साङ्गोपाङ्गामागमोक्तैर्विधानैः
स्तुत्वा नत्वा प्रार्थयेदन्नदात्रीम् ॥
सर्वेषां विघ्नहर्तॄणां कर्तॄणामपि सेश्वरी ।
अतो भवान्यधीनं हि क्षेत्रं पूज्या ततः परा ॥

तथा—श्रीमद्भवानीसदनं समाप्य
प्रदक्षिणीकृत्य तथाऽष्टवारम् ॥
स्तुतिं प्रकुर्वन्ति नरोत्तमा ये
प्रकृष्टगद्यादिभिरुत्तमास्ते ॥

तथा—प्रदक्षिणीकृता यैस्तु महापातकनाशिनी ।
अष्टवारं सुकृतिभिर्न तेषां भ्रमणं भवेत् ॥

भवानीं प्रक्रम्य काशीखण्डे—

अष्टौ प्रदक्षिणा देयाः प्रत्यहं तुष्टितत्परैः । इति ।

स्तुतिर्यथा—

त्वं ब्रह्मविद्या भजतां जनाना-
मभक्तिभाजां किल कालरात्रिः ॥
देहादिसंसक्तधियां विमोहिनी
माया परानन्दमयी ह्यतद्वि(?) ॥
शिवे सदानन्दमये ह्यधीश्वरि
श्रीपार्वति ज्ञानघनेऽम्बिके शिवे ॥
मातर्विशालाक्षि भवानि सुन्दरि
त्वामन्नपूर्णे शरणं प्रपद्ये ॥

जय जय जगज्जननि जगज्जम्बालजालनिवारिणि।
जाताजातविद्यमानजन्तुजातजीवातुलते॥
जय जय यज्ञादिसकलधर्मफलप्रदे।
जय जय महादेवि महादेवप्रिये॥
महाफलप्रदे महाक्षेत्रनिवासिनि।
महापातकौघतूलदहनकृपावलोके॥
जय जय भवानि भवप्रिये।
भावाभावितभक्तभवे॥
जय जय पार्वत्यपर्णे पर्णपुष्पफलदानदारितदारिद्र्यपञ्जरे।
जय जय उमे।
उत्तमोत्तमसेवितचरणकमलनखकिञ्जल्कप्रभे।
जय जय अन्नपूर्णे अन्नप्रदाननिरते॥
अन्नार्थिसंग्रहपरे।
अन्धबधिरपङ्गुपतितमहापापिशरणागतत्राणनिरते॥
मोक्षार्थिनां मोक्षदनामधेया
धर्मार्थिनां धर्मदचिन्तनाद्या॥
अर्थार्थिनामर्थदपादपद्मा
कामार्थिनां कामदकल्पवल्लि॥

उद्यद्भास्करसंनिभां त्रिनयनां माणिक्यवर्णां शिखां
पाशं चाङ्कुशमिक्षुचापमशनिं बाणं दधानां पराम्॥
ध्यात्वा कल्पलतां समस्तफलदां नित्यां नितान्तप्रियां
विश्वेशस्य विनायकस्य जननीं गौरीं नमेद्बोद्गुताम्॥

ये येऽविमुक्ते श्रुतिमातरं शिवां
शिवाङ्कगां साधितभक्तकार्याम्॥
आर्यां भजन्ते परमादरेण
दारिद्र्यबन्धादिभयं न तेषाम्॥

अत्र क्रमः—भवानीं यथोक्तविधानेन संपूज्याष्टवारं प्रदक्षिणीकृत्य स्तुत्वा नत्वा प्रार्थयेदिति। प्रार्थना यथा—

मातर्भवानि तव पादरजो भवानि
मातर्भवानि तव दासतरो भवानि॥

मातर्भवानि न भवानि यथा भवेऽस्मिं-
स्त्वद्भाग्भवान्यनुदिनं न पुनर्भवानि ॥ इति ।
तिष्ठता गच्छता वाऽपि स्वपता जाग्रताऽपि वा ।
अयं मन्त्रः सदा जप्यः सुखाप्त्यै काशिवासिना ॥

तदनन्तरम्—

ततो ढुण्ढिं गत्वा मधुरतरनैवेद्यविभवै-
रुपास्य स्तुत्वा तं विविधभयविघ्नाधिशमनम् ॥
अयं नित्यं प्रोक्तो विधिरतुलसौख्यैकसुखद-
श्चतुर्थ्यां नो यस्य प्रभवति स किं सौख्यनिलयः ॥

विविधविघ्ननिवारकस्य नित्यस्यापि गणेशपूजनस्य चतुर्थ्यामनुष्ठानात्सुखादिकमपि फलं भवति संयोगपृथक्त्वादिति भावः। मधुरनैवेद्यं मोदकाः। ढुण्ढिस्तुतिश्च काशीखण्डे सप्तपञ्चाशेऽध्याये द्रष्टव्या विस्तरभिया तु नोच्यते।

गच्छेत्ततो विश्वपतिं महामतिः
प्रदक्षिणीकृत्य सुतारतीर्थे ॥
स्नात्वा ततो दण्डपतिं प्रणम्य
संपूज्य निर्वाणगतं च पञ्चकम् ॥

सुतारतीर्थे ज्ञानवाप्यां स्नात्वा तां प्रदक्षिणीकृत्य दण्डपाणिं संपूज्य स्तुत्वा च प्रणमेदित्यर्थः। दण्डपाणिस्तुतिस्तु यक्षराजाष्टकरूपा काशीखण्डे।

यथा—रत्नभद्राङ्गजोद्भूतपूर्णभद्रसुतोत्तम।
निर्विघ्नं कुरु मे यक्ष काशीवासशिवाप्तये ॥ १ ॥
धन्यो यक्षः पूर्णभद्रो धन्या काञ्चनकुण्डला।
ययोर्जठरपीठेभूर्दण्डपाणे महामते ॥ २ ॥
जय यक्षपते धीर जय पिङ्गललोचन।
जय पिङ्गजटाभार जय दण्डमहायुध ॥ ३ ॥
अविमुक्तमहाक्षेत्रे सूत्रधारोग्रतापस।
दण्डनायक भीमास्य जय विश्वेश्वरप्रिय ॥ ४ ॥
सौम्यानां सौम्यवदन भीषणानां भयानक।
क्षेत्रपापधियां काल महाकाल महाप्रिय ॥ ५ ॥

जय प्राणद यक्षेन्द्र काशीवासान्नमोक्षद।
महारत्नस्फुरद्रश्मिचयचर्चितविग्रह ॥ ६ ॥
महासंभ्रान्तिजनक महद्भ्रान्तिप्रदायक।
अभक्तानां च भक्तानां संभ्रान्त्युद्भ्रान्तिनाशक ॥ ७ ॥
प्रान्त्यनेपथ्यचतुर जय ज्ञाननिधिप्रद।
जय गौरीपदाब्जाले मोक्षेक्षण विचक्षण ॥ ८ ॥
यक्षराजाष्टकं पुण्यमिदं नित्यं त्रिकालतः।
जपामि मैत्रावरुणे वाराणस्याप्तिकारणम् ॥
दण्डपाण्यष्टकं धीमाञ्जपन्विघ्नैर्न जातुचित्।
श्रद्धया परिभूयेत काशीवासफलं लभेत्। इति ॥

तदनन्तरं निर्वाणमण्डपगतं देवतापञ्चकं पूजयेत्। तच्च 'आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम्' इति काशीखण्डोक्तम्। क्रमेण नाममन्त्रैः पौराणमन्त्रैर्वा पूजयेत्। अनन्तरम्—

ततो विश्वेश्वरं गत्वा स्नापयेत्पञ्चकैः शुभैः।
स्नापयेच्च ततो गाङ्गैस्तोयै रुद्रपुरस्कृतैः ॥
गन्धपुष्पप्रधूपैश्च दीपैर्नैवेद्यकैरपि।
नानाविधैश्चोपचारैर्यथाविभवसत्कृतैः ॥
पूजयित्वा महादेवं काशीनाथं जगद्गुरुम्।
प्रदक्षिणत्रयं कृत्वा प्रणामान्दश पञ्च वा ॥

अत्रोपचाराननङ्गीकृतशैवदीक्षश्चेद्वैदिकैः पौराणमन्त्रैर्वा कुर्यात्। अङ्गीकृतदीक्षश्चेच्छैवागमोक्तमार्गेण वैदिकमन्त्रपौराणमन्त्रसमुच्चितेनैकैकसमुच्चितेन केवलेन वा कुर्यात्। देवस्यात्र नित्यसंनिहितत्वेऽप्युपचारत्वेनाऽऽवाहनाद्यप्यनुष्ठेयं विसर्जनं तूपचारानन्तर्गतत्वान्नानुष्ठेयमिति केचित्। अन्ये तु द्वयमपि नेच्छन्ति—

उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने।
अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम् ॥

उद्वासो विसर्जनमिति भागवतवचनात्। पञ्चकैरिति। पञ्चामृतैरा-प्यायस्वेत्यादिमन्त्रैः स्नापयेत्। रुद्रपुरस्कृतैरित्येतत्पञ्चामृतस्यापि विशेषणम्। ततश्च यथाविभवं प्रत्येकं समुच्चितैर्वा पञ्चामृतैस्तोयेन वा। 'अथातो रुद्रस्नानार्चनविधिं व्याख्यास्यामः' इति बौधायनसूत्रोक्तमार्गेण रूपरुद्रीरुद्रमहारुद्रातिरुद्रैरभिषेकं शक्त्या कुर्यादित्यर्थः। पूजा-

मन्त्रास्तु विस्तरभिया न लिख्यन्ते । ततो दश पञ्च वा साष्टाङ्गप्रणामान्कुर्यात् । ध्यानं तु पद्मपुराणे—

अकलङ्कशरत्पूर्णशशाङ्कायुतसप्रभः ।
सोमसूर्याग्निनयनो दशबाहुः शशाङ्कभृत् ॥
गौरीपरीरब्धतनुर्नानायुधसमुज्ज्वलः ।

तथा—तडित्कोटिसमप्रख्यं कोटिचन्द्रार्कसंनिभम् ।
इन्द्रियातीतममलं त्रैलोक्यव्यापकं परम् ॥
मोक्षाय यन्मया प्रोक्तं निरवद्यं निरञ्जनम् ।
यस्य भासा रविर्भाति चन्द्रः पावक एव च ॥
नक्षत्राणि ग्रहाश्चैव न तद्भासयते रविः ।
न पीयूषकरो नाग्निर्न तडिद्ग्रहतारकम् ॥
काश्यां विश्वेश्वराख्यं तल्लिङ्गं दृष्ट्वा विमुच्यते ।

एवं ध्यात्वा स्तुतिं कुर्यात् । यथा ब्रह्मवैवर्ते—

जय विश्वेश्वर विश्वाधार विश्वरूप विष्णुप्रिय वामदेव महादेव देवाधिदेव दिव्यरूप दीनानाथैकशरण शरणागतवज्रपञ्जर साधिताखिलकार्याकार्यातीत कारणकारण कामादितृणदहन दानवान्तकर दारिताखिलदारिद्र्य जितेन्द्रियप्रिय जितेन्द्रियैकगम्य काशीस्थस्थावरजङ्गमनिर्वाणदायक त्रिदशनायक काशिकाप्रिय नमस्ते नमस्ते ।

इत्यादिनामबहुलैः स्तोत्रैः स्तुत्वा पुनर्नमेत् ।

यद्वा महिम्नादिस्तुतिरन्या वा पौराणिकी वैदिकी वा समुच्चिता व्यस्ता वा ज्ञेया । अत्र यद्यपि विश्वेश्वरलिङ्गं किंचिदपनीयतेऽन्यदानीयते च कालवशात्पुरुषैस्तथाऽपि तत्स्थानस्थिते यस्मिन्कस्मिंश्चित्पूजादि कार्यम् । प्रथमोत्तमसाभिधेनीत्रित्वन्यायेन नियतस्थानस्थितधर्मत्वात्पूज्यादीनाम् । तेन विकृतौ प्रवोवाजीयातिरिक्तायामपि तत्स्थानपतितायां यथा त्रित्वं तथा मुख्यविश्वेश्वरज्योतिर्लिङ्गाभावेऽपि तत्स्थानस्थिते लिङ्गान्तरे पूजादि कार्यम् । यदाऽपि म्लेच्छादिदुष्टराजवशात्तस्मिन्स्थाने किंचिदपि लिङ्गं कदाचिन्न स्यात्तदाऽपि प्रदक्षिणानमस्काराद्याः स्थानधर्मा भवन्त्येव तावतैव च नित्ययात्रासिद्धिः । स्नापनादयस्तु साधिष्ठाना न भवन्तीति निर्णयः । एवं लिङ्गान्तरे प्रतिमान्तरे च सर्वत्र ज्ञेयम् । वीरेश्वरादिष्वप्ययमेव पूजाप्रकारो ज्ञेयो विशेषानुक्तौ । तदुक्तौ तु स एव ।

निर्वाणमण्डपे स्थित्वा विष्णुं नत्वा पुनः पुनः ।
देवस्य दक्षिणे भागे साक्षान्मुक्तिः करे स्थिता ॥

यदुच्यते तत्र शुभाशुभं वा
नरैः समस्तार्तिहरे सुमण्डपे ।
तदेव वृद्धिं सुतरां प्रयाति
तस्मान्न तत्राति वदेद्विपश्चित् ॥

ये स्मरन्ति महाविष्णुं ये स्मरन्ति सदाशिवम् ।
त एव तत्राधिकृता न ये विकृतवादिनः ॥
अन्यत्रापि वदन्ते किं जनाः सुकृतकारिणः ।
किं पुनः काशिकामध्ये अन्तर्गेहे ततोऽपि हि ॥
ततोऽपि मण्डपे देवि निर्वाणपदसंज्ञके ।
इति देवं समभ्यर्च्य गच्छेद्यत्र सुविश्रमेत् ।

देवदक्षिणभागस्थे मुक्तिमण्डपे स्थित्वा पूर्वोक्तां स्तुतिं कृत्वा नमस्कारं च कृत्वा विष्णुं च नत्वाऽभक्तिनिरासेन गायत्रीमुद्रागमोक्तमन्त्रादिजपं यथाशक्ति विष्णोः शिवस्य वा नामस्मरणं कथारूपं वा स्मरणं कृत्वा विश्रामार्थं गच्छेदिति प्रघट्टकार्थः । अत्र प्रदक्षिणाविषये विप्रतिपत्तिः । तत्र केचिदाहुः—

एकां चण्ड्यां रवेः सप्त तिस्रो दद्याद्विनायके ।
चतस्रो विष्णवे देयाः शिवस्यार्धप्रदक्षिणम् ॥

तथा—अपसव्यं यतीनां स्यात्सव्यं तु ब्रह्मचारिणाम् ।
सव्यापसव्यं गृहिणां शंभोर्नित्यं प्रदक्षिणम् ॥

तथा—शिवं प्रदक्षिणीकुर्वन्सोमसूत्रं न लङ्घयेत् ।
लङ्घने त्वेकमेकं स्यादलङ्घ्यान्नायुतत्रयम् ॥

अर्धप्रदक्षिणप्रकारश्च—

वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् ।
चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥
नवप्रदक्षिणोपेतं यस्तु कुर्यात्प्रदक्षिणम् ।
पदे पदेऽश्वमेधस्य फलं प्राप्नोति स ध्रुवम् ॥
सव्ये सव्यं विजानीयादपसव्येऽपसव्यकम् ॥ इति ।

सोमसूत्रपरिमाणं च—

प्रासादविस्तारसमानसूत्रं
सोमस्य सूत्रं दिशि सोमसूत्रम् ॥
सूत्राद्बहिर्लङ्घनतो न दोषः
सदोषमभ्यन्तरलङ्घनं तु ॥

अयमर्थः—मध्यस्थितं लिङ्गमवधीकृत्य भित्त्यवधिकं यावत्सूत्रं तावदेव भित्तेर्बहिः सोमस्य दिश्युत्तरस्यां सूत्रं सोमसूत्रं तन्न लङ्घयेत्। ततोऽग्रे न सोमसूत्रं तल्लङ्घने न दोषः । किंत्वेकमेकं प्रदक्षिणमेकप्रदक्षिणाफलं भवति । तदलङ्घने त्वयुतत्रयप्रदक्षिणाफलं स्यादित्यर्थः । यथाश्रुतव्याख्याने तु लङ्घने त्वेकमेकं स्यादिति नोपपद्यते तल्लङ्घनस्य निषिद्धत्वात् । सोमस्य दिशीत्युपलक्षणं तेन प्रणालीदिशीत्यर्थः । लिङ्गेऽपि—

प्रदक्षिणत्रयं कुर्याद्यः प्रासादसमन्ततः ।
सव्यापसव्यन्यायेन मृदुगत्या शुचिर्नरः ॥
पदे पदेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात् ।
न तिष्ठन्नापि धावंश्च शनैर्गच्छेत्प्रदक्षिणाम् ॥

नारदीये—

शिवं प्रदक्षिणी कुर्यात्सव्यासव्यविधानतः । इति ।

यत्र विशेषः—

सोमसूत्रद्वयं यत्र यत्र वा विष्णुमन्दिरम् ।
अपसव्यं न कुर्वीत कुर्यादेव प्रदक्षिणम् । इति ॥

एतस्यायं न विषयः । तस्माद्वृषादिक्रमेणैव विश्वेश्वरे प्रदक्षिणा कार्येति । अत्र केचित् । एवं विरुद्धवाक्यसमवाये सत्यपि—

'पूजयित्वा महादेवं काशीनाथं जगद्गुरुम् ।
प्रदक्षिणत्रयं कृत्वा प्रणमेद्दश पञ्च वा' ॥

इति ब्रह्मवैवर्तवाक्येन निर्णयः । तस्य विश्वनाथपूजाप्रकरणपाठात् । सव्यापसव्यवचनानां त्वनारभ्याधीतत्वेन यत्किंचित्प्राचीनमितिवदन्यविषयत्वेन सावकाशत्वात् । लिङ्गपुराणवचनेनास्योपसंहारोऽपि विकल्पासहत्वान्न संभवति । तथा हि—न चतुर्धाकरणवन्नापि चतुरवत्तवदुपसंहारः, तद्वदत्राऽऽकाङ्क्षाभावात् । नापि सप्तदश्यवदारभ्याधीतत्वाद्ब्रह्मवैवर्तवचनस्य । किंच—

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।
स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभवः ॥

इतिन्यायेनास्पष्टस्य स्पष्टेनोपसंहारो भवति । न चात्रास्पष्टताऽस्ति काशीनाथशब्देन विशेषपरत्वादिति । तदयुक्तम् । त्रित्वविशिष्टप्रदक्षिणाविधायकस्य प्रदक्षिणानुवादेन त्रित्वविधायकस्य वा ब्रह्मवैवर्तवचनस्य प्रदक्षिणाप्रकारानुक्तेरस्पष्टस्य प्रकाराकाङ्क्षस्याऽऽरभ्याधीतस्यापि प्रकारविशेषसमर्पकवचनैरनारभ्याधीतैरप्यारभ्याधीतजुहूविधायकवाक्यस्याऽऽकाङ्क्षितप्रकृतिद्रव्यसमर्पकपर्णमयीवाक्येनेव प्रकारसमर्पकत्वेनैकवाक्यत्वसंभवे बाधा(ध्य)बाधकभावासंभवाद्विरोधाभावाच्च । तस्मादेवमत्र वक्तव्यम्—

सर्वदिक्षु महाभाग विभोः कुर्यात्प्रदक्षिणम् ।
सोमसूत्रादिनियमो नास्ति विश्वेश्वरालये ॥

इत्यादित्यपुराणवचनान्न वृषादिक्रम इति । किंच—

विश्वेश्वरस्य यल्लिङ्गं ज्योतिर्लिङ्गं तदुच्यते ।
ज्योतिर्लिङ्गं तदेकं हि ज्ञेयं विश्वेश्वराभिधम् ॥

इतिवचनाज्ज्योतिर्लिङ्गत्वात् ।

स्वयंभुवोऽस्य लिङ्गस्य मम विश्वेशितुः सुराः ।
राजसूयसहस्रस्य फलं स्यात्स्पर्शमात्रतः ॥

इतिवचनाच्च स्वयंभुलिङ्गत्वात्सर्वप्रदक्षिणा ।

ज्योतिर्लिङ्गे रत्नलिङ्गे स्वयंभुवि तथैव च ।
वृषचण्डादिनियमः सुरेश्वरि न विद्यते ॥

इति सूतसंहितास्थवृद्धपठ्यमानवाक्यात् ।

तथा—काष्ठलोष्टादिभिश्छन्ने लङ्घने नैव दुष्यति । इति ।

तथा—पश्चिमाभिमुखं लिङ्गं लिङ्गं नन्दिविवर्जितम् ।
गिरिलिङ्गं स्थललिङ्गं जललिङ्गं तथैव च ॥
लिङ्गेष्वेतेषु सर्वेषु कुर्यात्पूर्णप्रदक्षिणाम् ।

इत्यादित्यपुराणीयत्वेन वचः पठन्ति । पश्चिमाभिमुखं विश्वेश्वरादि गिरिलिङ्गं त्र्यम्बकागिर्यादि । स्थललिङ्गं काश्यादि । जललिङ्गं वरुणेश्वरादि ।

किंच—अविमुक्तं महत्क्षेत्रं पञ्चक्रोशपरीमितम् ।
ज्योतिर्लिङ्गं तदेकं हि ज्ञेयं विश्वेश्वराभिधम् ॥

इतिवचनेन पञ्चक्रोशात्मकक्षेत्रस्थानापत्तिर्विश्वेश्वरलिङ्गस्यावगम्यते। पञ्चक्रोशात्मकक्षेत्रप्रदक्षिणा च साकल्येनैवेति पञ्चक्रोशयात्राप्रकरणेऽभिधास्यते। तेन नखानामुलूखलमुसलस्थानापत्त्या न तद्धर्मप्रोक्षणवदिहापि सकलप्रदक्षिणैव भवति। नन्वेवं सति काशीस्थसर्वलिङ्गानाम्—

देवि काशीस्थितं लिङ्गं सर्वं विश्वेश्वरात्मकम्।
स्वर्धुन्यपसमं सर्वं काशीतीर्थगतं जलम्॥

इतिवचनेन विश्वेश्वरस्थानापत्त्या तत्रापि सर्वा प्रदक्षिणैव स्यात्। मैवम्। एतस्यार्थवादत्वेन स्थानापत्तिपरत्वाभावात्। अत एव सनत्कुमारसंहितायां यक्षेश्वरमुपक्रम्य 'सव्यापसव्यन्यायेन चक्रे तत्र प्रदक्षिणम्' इति व्यासकृतार्धप्रदक्षिणेयं दर्शिता। तस्माद्विश्वेश्वरे सर्वप्रदक्षिणेति सिद्धम्। इयं च सर्वप्रदक्षिणा गर्भमन्दिरे न कार्या। यस्य कस्यापि देवस्य साक्षात्स्नानजललङ्घननिषेधात्। तर्हि प्रदक्षिणा गर्भ(र्भे) स्यादिति चेत्। न तदपि। 'नन्दिशंकरयोर्मध्ये न गन्तव्यं कदाचन' इत्यन्तरागमननिषेधात्। नमस्कारश्च मुक्तिमण्डपे कार्यः। ननु 'विश्वेश्वरस्य लिङ्गं तु ज्ञेयं पश्चान्मुखं बुधैः' इति वचनात् 'कालराजं च पुरतो विश्वेशस्य जगद्गुरोः' इति पञ्चक्रोशप्रकरणलिङ्गाच्चास्य लिङ्गस्य पश्चिमाभिमुखत्वावगमान्मुक्तिमण्डपे क्रियमाणो नमस्कारो देववामभागे स्यात्स च निषिद्धः—

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे।
जपहोमनमस्कारान्न कुर्याद्देवतालये॥
अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः।
वामभागे भवेन्नाशो दक्षिणे सर्वकामदः॥

इति स्मृतेः। मैवम्। देवतालयग्रहणाद्देवालयापेक्षया वामभागे निषेधात्। यद्वा—

इत्यादिनामबहुलैः स्तोत्रैः स्तुत्वा पुनर्नमेत्।
देवस्य दक्षिणे भागे स्थित्वा निर्वाणमण्डपे॥

इति विशेषवचनादेव न दोषः। ननु देवस्य पश्चान्मुखत्वे सति—

ब्रह्मयज्ञं सकृत्कृत्वा मम दक्षिणमण्डपे।
देवस्य दक्षिणे भागे वापी तिष्ठति शोभना॥
देवस्य दक्षिणे भागे स्थित्वा निर्वाणमण्डपे।

इत्याद्यनुपपन्नं स्यात् । एतदुपपत्तौ च देवस्य पश्चान्मुखत्वानुपपत्ति-रित्युभयतःपाशा रज्जुरिति चेत् । सत्यम् । किंतु ममशब्ददेव-शब्दयोर्देवसंबन्धिदेवालयलक्षकत्वान्न दोष इति कश्चित् । वयं तु देशपर्यायभागशब्देन दिश उक्तत्वात्संबन्धसामान्यपराया अपि पष्ठ्या-स्तद्विशेषापादानत्वरूपसंबन्धपरत्वाच्च देवदेवदक्षिणदिशीति निष्प्रति-योगिकसर्वसाधारणदक्षिणादिग्ग्रहणान्न दोष इति युक्तं पश्यामः । तस्मान्मुक्तिमण्डपे नमस्कारो न निषिद्धः । केचित्तु—

पशुः पशुपतेरग्रे दण्डवत्पतितो भुवि ।
पतन्ति पातकाः सर्वे नोत्तिष्ठन्ति तदा सह ॥

इति विशेषवचनं पठन्ति तन्मतेऽग्रे नमस्कारनिषेधाद्देवालयग्रहणा-त्सामान्यविषयं बाधित्वा प्रणमेद्दश पञ्च वेतिविहितो नमस्कारोऽग्र एव कार्यः ।

इत्यादिनामबहुलैः स्तोत्रैः स्तुत्वा पुनर्नमेत् ।
देवस्य दक्षिणे भागे स्थित्वा निर्वाणमण्डपे ॥

इत्येतत्तु स्तुत्यनन्तरभाविपुनर्नमस्कारविषयं पुनरिति ग्रहणात् । विश्वनाथस्नानोदकं च शिवनिर्माल्यत्वेऽपि मूर्ध्नि धारणीयम् ।

जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः ॥
एष जालंधरो बन्धः समस्तसुरवल्लभः ।

इति काशीखण्डवचनात् । मुख्यो हि योगः—

बध्नाति हि शिराजालमधोगामि नभोजलम् ।
एष जालंधरो बन्धः कण्ठे दुःखौघनाशनः ॥

इत्येवंलक्षणको जालंधरः । काश्यां त्वेष एवेत्यर्थः । तथा तत्रैव—

स्नापयित्वा विधानेन यो लिङ्गस्नपनोदकम् ।
त्रिः पिबेत्त्रिविधं पापं तस्येहाऽऽशु विनश्यति ॥
लिङ्गस्नपनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनम् ।
गङ्गास्नानफलं तस्य जायते च विपाप्मनः ॥

अत्र विश्वेश्वरस्याप्रकृतत्वेऽपि तद्विषयतैव पूर्ववाक्यसमानविषयत्वे लाघवादिति । केचित्काशीस्थसकललिङ्गविषयमिदम् । अत एव र[त्ने]श्वराख्याने काशीखण्डे—

तस्यास्तदैकया नीतं रत्नेशस्नपनोदकम् ।
तदुक्षणात्क्षणादेव तन्मूर्छा विरराम ह ॥

इत्युक्त्वोक्तम्—

श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि ।
नोपायान्तरमस्त्येव विनेशचरणोदकम् ॥
ये व्याधयो हि दुःसाध्या बहिरन्तःशरीरिणाम् ।
श्रद्धयेशोदकस्पर्शात्ते नश्यन्त्येव नान्यथा ॥

इति पद्यचतुष्टयम् । तथा च—

द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत्क्वचित् ।

इत्यादिनिषेधस्तदितिरिक्तविषय इत्यन्ये । अपरे तु शैवदीक्षावद्भिरेवैतद्ग्राह्यमित्याहुः । इदं च विश्वेश्वरदर्शनं नित्यम् ।

चक्रपुष्करिणीतीर्थे स्नातव्यं प्रतिवासरम् ।
पत्रैः पुष्पैः फलैस्तोयैरर्च्यो विश्वेश्वरः सदा ॥

तथा—यात्राद्वयं प्रयत्नेन कर्तव्यं प्रतिवासरम् ।
आदौ स्वर्गतरङ्गिण्यास्ततो विश्वेशितुर्ध्रुवम् ॥
स दष्टः कालसर्पेण स दष्टो मृत्युना ध्रुवम् ।
स मुष्टस्तत्र दिवसे विश्वेशो यत्र नेक्षितः ॥

इति ब्रह्मवैवर्तात् ।

शिवं शिवं प्रत्यहमर्चयेन्नरः
स्थित्वाऽविमुक्ते शिवदर्शनं नो ॥
कुर्वन्ति कुर्वन्ति बहूनि लोकाः
कार्याण्यकार्याणि भवन्ति तेषाम् ॥
तस्माच्छिवं प्रत्यहमर्चयेदिह ।

इति प्रत्यहशब्दश्रवणाच्च । काशीखण्डे—

मामनालोक्य यद्भुङ्क्ते तद्भुङ्क्ते केवलं त्वघम् ।
असमर्च्य च यो भुङ्क्ते पत्रपुष्पफलैरपि ॥
रेतोभक्षो भवेन्मर्त्यः स जन्मान्येकविंशतिम् ।

इत्यकरणे प्रत्यवायश्रवणाच्च । यत्तु फलश्रवणम्—

य स्नात्वोत्तरवाहिन्यां याति विश्वेशदर्शने ।
श्रद्धया परया तस्य श्रेयसोऽन्तो न विद्यते ॥
आलस्येनापि यो यायाद्गृहाद्विश्वेश्वरालयम् ।
अश्वमेधाधिको धर्मस्तस्य स्याच्च पदे पदे ॥

तथा—प्रातर्विश्वेश्वरं दृष्ट्वा नैशमेनो व्यपोहति ।

इत्यादि तत्खादिरतावन्नित्यस्यापि सतः संयोगपृथक्त्वन्यायेन द्रष्टव्यम् । काशीखण्डे तु क्रमान्तरमुक्तं यात्रायाम्—

आदित्यं द्रौ (द्रौं) पदीं विष्णुं दण्डपाणिं महेश्वरम् ।
नमस्कृत्य ततो गच्छेद्‌द्रष्टुं ढुण्ढिं विनायकम् ॥
ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततो व्रजेत् ।
तारकेशं ततोऽभ्यर्च्य महाकालेश्वरं ततः ॥
ततः पुनर्दण्डपाणिमित्येषा पञ्चतीर्थिका ।
दैनंदिनी विधातव्या महाफलममीप्सुभिः ॥
ततो वैश्वेश्वरी यात्रा कार्या सर्वार्थसिद्धिदा ।

इति । पद्मपुराणे पातालखण्डेऽप्यन्यथाक्रमः—

गङ्गायामाप्लुतिः प्रातर्मध्याह्ने मणिकर्णिकाम् ।
निषेवेत सदा पश्चाल्लिङ्गं वैश्वेश्वरं व्रजेत् ॥
भवानीं ढुण्ढिराजं च दण्डपाणिं च भैरवम् ।
पूजयेन्नित्यशः काश्यां सूक्ष्मपापाभिभूतये ॥ इति ।

अन्यत्रापि—

प्रातरुत्थाय धर्मात्मा कृतनित्यक्रियः शुचिः ।
अतीवश्रद्धया युक्तो गच्छेद्विश्वेशालयम् ॥
पश्चिमाभिमुखं देवमम्बिकासहितं प्रभुम् ।
प्रदक्षिणत्रयं कृत्वा नमस्कारैश्च पञ्चभिः ॥
निर्वाणमण्डपे स्थित्वा क्षणं ध्यात्वा महेश्वरम् ।
प्राणायामत्रयं कृत्वा उत्तराभिमुखः पुनः ।
बद्धाञ्जलिः प्रार्थयीत महादेवं महेश्वरम् ॥

सनत्कुमारसंहितायाम्—

स्नात्वा त्वदास्ये मणिकर्णिकायां
वाप्यामथाऽऽराध्य च विघ्नराजम् ॥
श्रीदण्डपाणिं सगणं च साक्षा-
द्विश्वेश्वरं जन्मजरादवाग्निम् ॥

इत्यादि । वाप्यामथेति । अथ मणिकर्णिकास्नानानन्तरं ज्ञानवाप्यां स्नात्वेत्यर्थः । अथान्यदपि प्रात्यहिकम् । तत्र ब्रह्मवैवर्ते नारायणः—

काश्यां स्थित्वा प्रातरेवात्र ढुण्ढि
मां विश्वेशं दण्डपाणिं रविं च ॥
सर्वान्नत्वा काशिसंस्थांस्तु नित्यं
ततः कुर्यान्नित्यनैमित्तिकानि ॥

तथा प्रत्यहं विष्णुः प्रार्थनीयः काश्या विष्णुक्षेत्रत्वात् । उक्तं च वामनपुराणे—

तमूचुर्मुनयः सूर्यं शृणु क्षेत्रमहाफलम् ।
सांप्रतं वासुदेवस्य गावि तच्छंकरस्य च ॥
योगशायिनमारभ्य यावत्केशवदर्शनात् ।
एतत्क्षेत्रं हरेः पुण्यं नाम्ना वाराणसी पुरी ॥

नारदीये काशीं प्रकृत्य—

आद्यं च वैष्णवं स्थानं पुराणे परिचक्षते ।
पुरीष्टसंस्थितो विष्णुरंशैः काश्यां स्वरूपतः ॥
काशीस्वरूपं विष्णोस्तु यत्र साक्षात्प्रकाशते ।
अन्यासु रमते देवो भक्तानुग्रहकातरः ॥
अधिष्ठानं महत्त्वत्र विष्णोः परपुरंजयः ।

तत्प्रार्थनामन्त्रश्च ब्रह्मवैवर्ते—

जय केशव देवेश जय काशीप्रियाच्युत ।
काश्यां रक्षस्व देवेश देहि श्रद्धां जनार्दन ॥
मन्त्रेणानेन देवेशं प्रार्थयेत्प्रत्यहं नरः । इति ।

तथा ब्रह्मवैवर्ते—

शिवं शिवां प्रत्यहमर्चयन्नर-
स्तथा गणेशादिगणान्धृतव्रतः ॥
वर्तेत यः काशिकायां सदा जनो
न तस्य दुःखं न च विघ्नपूगः ॥

तथा—स्ववर्णाश्रमधर्मश्च न त्यक्तव्यो मनागपि ।
प्रत्यहं क्षेत्रमहिमा श्रोतव्यः श्रद्धया सकृत् ॥
यात्राद्वयं प्रयत्नेन कर्तव्यं प्रतिवासरम् ।
आदौ स्वर्गतरङ्गिण्यास्ततो विश्वेशितुर्ध्रुवम् ॥
वसिष्ठवामदेवौ च द्रष्टव्यौ ।

मंवतोर्दर्शनं कुर्याद्यः स विघ्नविनाकृतः ।
स्वधर्मनिरतस्तिष्ठेत्सततं मत्परायणः ॥

इति पाद्मे भवेन वरदानात् । तथा मुक्तिमण्डपस्थं विष्णुं प्रति भवः—

आदावनाराध्य भवन्तमत्र
यो मां भजिष्यत्यथ भक्तियुक्तः ॥
समीहितं तस्य न सेत्स्यति ध्रुवं
वरात्परान्मेऽम्बुज चक्रपाणे ॥

अथ नूतनागतकृत्यम् । तत्र पञ्चक्रोशसीम्नि यानं परित्यज्य—

पञ्चक्रोश्याश्च सीमानं प्राप्य देवो जनार्दनः ।
वैनतेयादवारुह्य करे धृत्वा ध्रुवं ततः ॥
मणिकर्ण्यां. परिस्नाय विश्वेशमभिपूज्य च ।

इति काशीखण्डे विष्णुयात्रालिङ्गात् । तथा व्यासः—

निशामय महाभाग लोमहर्षण वच्मि ते ।
यथा प्रथमतो यात्रा कर्तव्या यात्रिकैर्मुदा ॥
सचैलमादौ स्नात्वा तु चक्रपुष्करिणीजले ।
संतर्प्य पितृदेवांश्च ब्राह्मणांश्च तथाऽर्थिनः ॥
आदित्यं द्रौपदीं विष्णुं दण्डपाणिं महेश्वरम् ।
नमस्कृत्य ततो गच्छेद्द्रष्टुं ढुण्ढिविनायकम् ॥
ज्ञानवापीमुपस्पृश्य नन्दिकेशं ततो व्रजेत् ।
तारकेशं ततोऽभ्यर्च्य महाकालेश्वरं ततः ॥
ततः पुनर्दण्डपाणिमित्येषा पञ्चतीर्थिका ।
ततो वैश्वेश्वरी यात्रा कार्या सर्वार्थसिद्धिदा ॥

शिवशर्मणः काशीप्रवेशे 'विधाय च द्राक्स हि पञ्चतीर्थिकाम्' इत्यत्राप्येषैव ज्ञानवाप्यादिः पञ्चतीर्थिका । स्नानानन्तरं च संध्यादेवार्चनादि कार्यम् ।

ततो वाराणसीं प्राप्य गीर्वाणाः समहर्षयः ।
अविलम्बं प्रथमतो मणिकर्ण्यां विधानतः ॥
सचैलमभिमज्ज्याथ कृतसंध्यादिकक्रियाः ।
संतर्प्य तर्प्यादिपितॄन्कुशगन्धतिलोदकैः ॥

इति काशीखण्डलिङ्गात् । तर्प्याश्च त आदिपितरश्चेति वि-ग्रहः । त्र्यहं पञ्चरात्रं वाऽत्र निवसेत् ‘ पञ्चरात्रमुषित्वा तु कृत्वा तीर्थान्यनेकशः ’ इति तल्लिङ्गात् । त्र्यहं पञ्चरात्रं वा निवसे-दिति देवलोक्तेश्च एतावदावश्यकम् । अवान्तरतीर्थानि तु याव-च्छक्ति कुर्वतां फलातिशयो न त्वावश्यकानि मानाभावात्फलश्रव-णाच्च । मुण्डनादि च प्रयट्टकोक्तं सर्वं ज्ञेयम् । तदयमत्र क्रमसंक्षेपः— क्षेत्रसीम्नि यानादवरुह्य तीर्थे दृष्टे साष्टाङ्गं प्रणम्य पद्भ्यामेव मणिकर्णि-कायामागत्य नालिकेरादि यथाशक्त्युपढौकनिकं दत्त्वा सचैलं स्नात्वा मुण्डनसविधिस्नानसंध्यादितर्पणतीर्थश्राद्धपिण्डदानादिसंकल्पपूर्वकं प्र-यट्टकोक्तविधिना विधाय ब्राह्मणेभ्यो यथाशक्ति हिरण्यादि दत्त्वाऽऽदि-त्यादीन्विश्वेश्वरान्तान्यथाशक्ति पूजयेन्नमेच्चेति । विशेषस्तु सर्वः प्रय-ट्टक एवोक्तः ।

इति श्रीभट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे नित्यकृत्यनिरूपणम् ।

---

अथ काश्यां निवसतां सतामुपकृतीच्छया ।
आब्दिकं कीर्त्यते कृत्यमृतुमासतिथिक्रमात् ॥

तत्राऽऽदावृतुयात्राः । तत्र ब्रह्मवैवर्ते सप्तपुरीणां स्थितिस्थानकथन-पूर्वकृतुविशेषे यात्राकथनम् । श्रीदेव्युवाच—

सप्त पुर्यः काशिकायां सन्ति शंकर शंकराः ।
श्रुतास्त्वत्तो महादेव तासां स्थानानि मे वद ॥
यात्रादिनानि च ब्रूहि फलं तासां विमुक्तिदम् ।

एवंप्रश्ने भववचः—

शृणु पार्वति वक्ष्यामि यद्गोप्यं मम सर्वदा ।
यत्र या पूः समुद्दिष्टा काश्यां तत्र वदामि ते ॥
शङ्खोद्धारप्रदेशे तु द्वारका परिकीर्तिता ।
बिन्दुमाधवपार्श्वस्था विष्णुकाञ्चीति विश्रुता ॥
उत्तरार्कादुत्तरतो मथुरा वरणावधि ।
अयोध्या वायुकोणे तु सोमेश्वरसमीपतः ॥
यत्र रामेश्वरं लिङ्गं वसेत्सीतापतिः स्वयम् ।
बिभीषणादिभिर्यत्र राक्षसैर्वानरैरपि ॥

स्थापितान्ययुतं सार्धं लिङ्गानि परितः पृथक् ।
असिसंभेदकोणे तु गङ्गाद्वारं प्रकीर्तितम् ॥
वृद्धकालात्पुरोभागे कृत्तिवासेश्वरावधि ।
महाकालपुरी ज्ञेया ह्यवन्ती सर्वपापहृत् ॥
एताः काश्यां पुरः पूर्वं देवैर्ब्रह्मादिभिः शिवे ।
कृताः प्रकाशिताः काशी जनित्री भोगमोक्षयोः ॥
प्रावृडृतौ द्वारवती तथा मोक्षकरी शुभा ।
शरत्काले विष्णुकाञ्ची गन्तव्या प्रत्यहं बुधैः ॥
मथुरा वसन्तसमये गन्तव्या भक्तिवर्धिनी ।
अयोध्या ग्रीष्मकाले तु तापत्रयविनाशिनी ॥
अवन्तिका हिमर्तौ तु महाजाड्यनिवारिणी ।
मायापुरी तु शिशिरे रजोगुणविनाशिनी ॥
काश्याः सर्वा निसृताः सृष्टिकाले
काश्यामेताः स्थितिकाले वसन्ति ॥
काश्यां लीनाः सर्वसंहारकाले
ज्ञातव्यास्ता मुक्तिपूर्यो भवानि ॥

इत्यृतुयात्राः ।

अथ मासयात्राः । तत्र लैङ्गे—

अतः परं प्रवक्ष्यामि यात्राकालं तु सर्वगम् ।
चैत्रमासे तु देवैस्तु यात्रेयं च कृता शुभे ॥
तस्यैव कामकुण्डे तु स्नानपूजनतत्परैः ।
वैशाखे दैत्यराजैस्तु यात्रेयं च कृता पुरा ॥
विमलेश्वरकुण्डे तु स्नानपूजनतत्परैः ।
ज्येष्ठमासे तु देवैस्तु यात्रेयं तु कृता पुरा ॥
रुद्रावासस्य कुण्डे तु स्नानपूजनतत्परैः ।
आषाढे चापि गन्धर्वैर्यात्रेयं च कृता मम ॥
श्रिया देव्याश्च कुण्डस्थैः स्नानपूजनतत्परैः ।
विद्याधरैस्तु यात्रेयं श्रावणे मासि तत्परैः ॥
तथा कुण्डेऽस्य संस्थैस्तु स्नानपूजनतत्परैः ।
पितृभिश्चापि यात्रेयमाश्विने मासि तत्परैः ॥
मार्कण्डेयह्रदस्थैश्च स्नानपूजनतत्परैः ।
विद्याधरैस्तु यात्रेयं मासि मार्गशिरे कृता ॥

कपालमोचनस्थैस्तु स्नानपूजनतत्परैः ।
गुह्यकैश्चैव यात्रेयं पुष्यमासे च तत्परैः ॥
धनदेश्वरकुण्डस्थैः स्नानपूजनतत्परैः ।
यक्षेशैश्चैव यात्रेयं माघमासे च तत्परैः ॥
कोटितीर्थकसंस्थैस्तु स्नानपूजनतत्परैः ।
पिशाचैश्चापि यात्रेयं फाल्गुने मासि तत्परैः ॥
गोकर्णकुण्डसंस्थैश्च स्नानपूजनतत्परैः ।
पैशाचैश्च यदा तस्मिन्फाल्गुनस्य चतुर्दशी ॥
तेन सा प्रोच्यते देवि पैशाचीनामविश्रुता । इति ।

अत्र सर्वत्र पुराकल्परूपार्थवादवशाद्विधिरुन्नीयतेऽन्यथाऽऽनर्थक्यप्रसङ्गात् । एताश्च मासयात्राः कर्तुमशक्तस्य तत्फलकामस्य प्रतिनिधिस्तत्रैवोक्तः—

अतः परं प्रवक्ष्यामि यात्राया निष्कृतिं पराम् ।
उदकुम्भास्तु दातव्या मिष्टान्नेन समन्विताः ॥
तेन देवि तदा प्राप्तं पूर्वोक्तं फलमेव च । इति ।

काशीखण्डे विष्णुः—

कार्तिके मासि मे यात्रा यैः कृता भक्तितत्परैः ।
बिन्दुतीर्थकृतस्नानैस्तेषां मुक्तिर्न दूरतः ॥

मे बिन्दुमाधवस्य । वचनान्तराणि च पञ्चनदप्रकरणे लिखितानि ।

तथा—काश्यां माघः प्रयागे यैर्न स्नातो मकरार्कगः ।
अरुणोदयमासाद्य तेषां निःश्रेयसं कुतः ॥
काश्युद्भवे प्रयागे ये तपसि स्नान्ति मानवाः ।
दशाश्वमेधजनितं फलं तेषां ध्रुवं भवेत् ॥
प्रयागमाधवं भक्त्या प्रयागेशं च कामदम् ।
प्रयागे तपसि स्नात्वा येऽर्चयन्त्यन्वहं सदा ॥
धनधान्यसुतादींस्ते लब्ध्वा भोगान्मनोरमान् ।
भुक्त्वेह परमानन्दं परं मोक्षमवाप्नुयुः ॥ इत्यादि ।

अथ तिथिकृत्यं निरूप्यते—

अथ काशीस्थकर्तव्यं पुराणाचारसंमतम् ।
नित्यं काम्यं च सकलं तिथिकार्यमिहेर्यते ॥

सामान्यतिथिकार्यं प्राक्पश्चाद्वारादियोगजम्।
चैत्रादिक्रमतः पश्चादेवमत्र निरूप्यते॥

तत्र प्रतिमासकृष्णप्रतिपत्सु शैलेशोंकारेशामृतेशांस्तत्तत्तीर्थस्नानपूर्वकं पूजयेत्। चैत्रादिमासत्रयकृष्णप्रतिपत्त्रये वा क्रमेणैतान्पूजयेच्छिष्टाचारादिति चतुर्दशलिङ्गयात्राप्रकरणेऽभिधास्यते। तथा चैत्रकृष्णप्रतिपदि दशाश्वमेधसमीपस्था योगिनीयात्रा कार्या। तदुक्तं काशीखण्डे—

चैत्रे कृष्णप्रतिपदि तत्र यात्रा प्रयत्नतः।
क्षेत्रविघ्नप्रशान्त्यर्थं कर्तव्या पुण्यकृज्जनैः॥
यात्रां च सांवत्सरिकीं यो न कुर्यादवज्ञया।
तस्य विघ्नं प्रयच्छन्ति योगिन्यः काशिवासिनाम्॥

तथा चैत्रनवरात्रे दुर्गायात्रेति शिष्टसंप्रदायः। तथा काशीखण्डे योगिनीः प्रकृत्य नवरात्रे यात्रा कार्येत्युक्तम्—

शरत्काले महापूजां तत्र कृत्वा विधानतः।
हवींषि हुत्वा मन्त्रज्ञो महतीं सिद्धिमाप्नुयात्॥
आरभ्याऽऽश्वयुजे शुक्लां तिथिं प्रतिपदं शुभाम्।
पूजयन्नवमीं यावन्नरश्चिन्तितमाप्नुयात्॥

तथा विशालाक्षीपुरस्थितविश्वभुजायात्रा नवरात्रे कार्या। तदुक्तं तामेव प्रकृत्य—

शारदं नवरात्रं च कार्या यात्रा प्रयत्नतः।
देव्या विश्वभुजाया वै सर्वकामसमृद्धये॥

विश्वभुजा विश्वबाहुकेति प्रसिद्धा। तथा दुर्गेति प्रकृत्य—

नवरात्रं प्रयत्नेन प्रत्यहं सा समर्चिता॥
नाशयिष्यति विघ्नौघान्सुमतिं च प्रदास्यति।
प्रतिसंवत्सरं तस्याः कार्या यात्रा प्रयत्नतः॥
शारदं नवरात्रं च सकुटुम्बैः शुभार्थिभिः।
यो न सांवत्सरीं यात्रां दुर्गायाः कुरुते कुधीः॥
काश्यां विघ्नसहस्राणि तस्य स्युश्च पदे पदे।

अथ द्वितीया। तत्र प्रतिमासकृष्णद्वितीयासु संगमेशत्रिलोचनतारकेशयात्राश्चैत्रादिमासत्रयकृष्णद्वितीयासु वा क्रमेण त्रिलोचनादियात्रा कार्येति वक्ष्यते। कार्तिक्यनन्तरमार्गकृष्णद्वितीयासु वा क्रमेण त्रिलो-

चनादियात्रा कार्येति वक्ष्यते । कार्तिक्यनन्तरमार्गकृष्णद्वितीयायां दण्डपाणिप्रादुर्भाव इति सा दण्डपाणिद्वितीयेत्युच्यते । तस्यां दण्डपाणिप्रीतय उपवासं तत्पूजां तत्संनिधौ जागरणं द्वितीयदिने दण्डपाणिप्रीतये ब्राह्मणभोजनं च कार्यमिति शिष्टाचारः सोऽपि प्रमाणमेव । श्रुतिस्मृत्यविरुद्धश्च सदाचारो धर्ममूलमिति स्मृतेः ।

अथ तृतीया । तत्र सर्वासु कृष्णतृतीयासु स्वर्लीनेशमहादेवज्ञानेश्वरयात्राश्चैत्रादिमासत्रयकृष्णतृतीयासु वा क्रमेणेति वक्ष्यते । काशीखण्डे सर्वासु शुक्लतृतीयासु मुखप्रेक्षणिकादियात्रा उक्ताः—

अतः परं प्रवक्ष्यामि गौरीयात्रामनुत्तमाम् ।
शुक्लपक्षे तृतीयायां या यात्रा विश्वगृद्धिदा ॥

सर्वसंपत्करीत्यर्थः ।

गोप्रेक्षतीर्थे सुस्नाय मुखनिर्मालिकां व्रजेत् ।

मुखनिर्मालिकां मुखप्रेक्षणिकाम् ॥

ज्येष्ठवाप्यां नरः स्नात्वा ज्येष्ठां गौरीं समर्चयेत् ।
सौभाग्यगौरीं संपूज्य ज्ञानवाप्यां कृतोदकः ॥
ततः शृङ्गारगौरीं च तत्रैव च कृतोदकः ।

तत्रैव ज्ञानवाप्यामेव ।

स्नात्वा विशालगङ्गायां विशालाक्षीं ततो व्रजेत् ॥
सुस्नातो ललितातीर्थे ललितामर्चयेन्नरः ।
स्नात्वा भवानीतीर्थे च भवानीं परिपूजयेत् ॥
मङ्गला च ततोऽभ्यर्च्या बिन्दुतीर्थकृतोदकैः ।
ततो गच्छेन्महालक्ष्मीं स्थिरलक्ष्मीसमृद्धये ॥
इमां यात्रां नरः कृत्वा क्षेत्रेऽस्मिन्मुक्तिजन्मनि ।
न दुःखैरभिभूयेत इहामुत्रापि कुत्रचित् ॥ इति ।

लैङ्गे तु—

अतः परं प्रवक्ष्यामि यात्रायां च वरानने ।
शुक्लपक्षे तृतीयायां तव यात्रा महाफला ॥
तत्र गौरी तु द्रष्टव्या तां च शृणु वरानने ।
स्नानं कृत्वा तु गन्तव्यं गोप्रेक्षे तु यशस्विनि ॥
मुखनिर्मालिका देवी अर्चितव्या प्रयत्नतः ।
ज्येष्ठास्थाने तथा गौरी अर्चितव्या प्रयत्नतः ॥

तस्याः स्थानं तु गन्तव्यमविमुक्तस्य चोत्तरे ।
तत्र देवी सदा गौरी अर्चितव्याऽतिभक्तितः ॥
अन्या चापि तत्र प्रोक्ता संवर्तललिता शुभा ।
द्रष्टव्या च सदा देवी सर्वकामफलप्रदा ॥
सर्वान्कामानवाप्नोति यदि ध्यायेत मानवः ।
ततस्तु भोजयेद्विप्राञ्शिवभक्ताञ्शुचिव्रतान् ॥
वासैः सदक्षिणैश्चैव नवैश्चाऽऽहृतपुष्करैः ।
पञ्चगौरीस्तु यः कृत्वा भक्त्या देवि समाहितः ॥
सर्वांश्चैव रसान्गन्धान्गौरीमुद्दिश्य ब्राह्मणे ।

दद्यादिति शेषः ।

उत्तमं श्रेय आप्नोति सौभाग्येन समन्वितम् ।

काशीखण्डे—

इमां च मङ्गलां गौरीं नारी वा पुरुषोऽपि वा ।
चैत्रशुक्लतृतीयायामुपोषणपरायणः ॥
महोपचारैः संपूज्य दुकूलाभरणादिभिः ।
रात्रौ जागरणं कृत्वा गीतनृत्यकथादिभिः ॥
प्रातः कुमारीः संपूज्य द्वादशाऽऽच्छादनादिभिः ।
संभोज्य परमान्नाद्यैर्दत्त्वाऽन्येभ्योऽपि दक्षिणाम् ॥
होमं कृत्वा विधानेन जातवेदस इत्यृचा ।
अष्टोत्तरशताभिश्च तिलाज्याहुतिभिः प्रगे ॥
एकं गोमिथुनं दत्त्वा ब्राह्मणाय कुटुम्बिने ।
श्रद्धया समलंकृत्य भूषणैर्द्विजदंपती ॥
भोजयित्वा महाहारैः प्रीयेतां मङ्गलेश्वरी ।
इति मन्त्रं समुच्चार्य प्रातः कृत्वाऽथ पारणम् ॥
न दुर्भगत्वमाप्नोति न दारिद्र्यं कदाचन ।
न वै संतानविच्छित्तिं भोगोच्छित्तिं न जातुचित् ॥
स्त्रीवैधव्यं न चाऽऽप्नोति न ना योषिद्वियोगभाक् ।
अपि वन्ध्या प्रसूयेत कृत्वैतन्मङ्गलाव्रतम् ॥
एतद्व्रतस्य करणात्कुरूपत्वं न जातुचित् ।
कुमारी विन्दतेऽत्यन्तं गुणरूपयुतं पतिम् ॥
कुमारोऽपि व्रतं कृत्वा विन्दति स्त्रियमुत्तमाम् । इत्यादि ॥

तथा—कर्तव्या चाऽऽब्दिकी यात्रा मधौ तस्यां तिथौ नरैः ।
सर्वविघ्नप्रशान्त्यर्थं सदा काशिनिवासिभिः ॥

मधौ चैत्रे । तस्यां तिथौ शुक्लतृतीयायाम् । तथा चैत्रशुक्लतृतीयायामेव मनोरथव्रतं कार्यम् । तदुक्तं काशीखण्डे

भवः—मनोरथतृतीयायां यस्ते भक्तिं विधास्यति ।
तन्मनोरथसंसिद्धिर्भवित्री मदनुग्रहात् ॥
नारी वा पुरुषो वाऽथ त्वद्व्रताचरणात्प्रिये ।
मनोरथानिह प्राप्य ज्ञानमन्ते च लप्स्यते ॥

मनोरथतृतीया चैत्रशुक्लतृतीया । देव्युवाच—
मनोरथतृतीयायां व्रतं कीदृक्कथा कथम् ।
किं फलं कैः कृतं नाथ कथयैतत्कृपां कुरु ॥

ईश्वर उवाच—
शृणु देवि यथा पृष्टं भवत्या भवतारिणि ।
मनोरथव्रतं चैतद्गुह्याद्गुह्यतरं परम् ॥
पुलोमतनया पूर्वं तताप परमं तपः ।
कंचिन्मनोरथं प्राप्तुं न चाऽऽप तपसः फलम् ॥
अपूपुजत्ततो मां सा भक्त्या परमया मुदा ।
गीतेन सरहस्येन कलकण्ठीकलेन हि ॥
तद्गानेनातिसंतुष्टो मृदुना मधुरेण च ।
सुतालेन सुरङ्गेण धातुमात्राकलावता ॥
प्रावोचं च वरं ब्रूहि प्रसन्नोऽस्मि पुलोमजे ।
अनेन च सुगीतेन त्वनया लिङ्गपूजया ॥

पुलोमजोवाच—
यदि प्रसन्नो देवेश तदा यो मे मनोरथः ।
तं पूरय महादेव महादेवि महाप्रिये ॥
सर्वदेवेषु यो मान्यः सर्वदेवेषु सुन्दरः ।
यायजूकेषु सर्वेषु यः श्रेष्ठः सोऽस्तु मे पतिः ॥
यथाभिलषितं रूपं यथाभिलषितं सुखम् ।
यथाभिलषितं चाऽऽयुः प्रसन्नो देहि मे भव ॥
यदा यदा च पत्या मे सङ्गः स्याद्रतसुखेच्छया ।
तदा तदा च तं देहं त्यक्त्वाऽन्यं देहमाप्नुयाम् ॥

सदा च लिङ्गपूजायां मम भक्तिरनुत्तमा ।
भव भूयाद्भवहर जरामरणहारिणी ॥
भर्तृव्ययेऽपि वैधव्यं क्षणमात्रमपीह न ।
मम भावि महादेव पातिव्रत्यं च यातु माम् ॥

स्कन्द उवाच—

इमं मनोरथं तस्याः पौलोम्याः पुरसूदनः ।
समाकर्ण्य क्षणं स्मित्वा प्राहेशो विस्मयान्वितः ॥

ईश्वर उवाच—

पुलोमकन्ये यश्चैष त्वयाऽकारि मनोरथः ।
लप्स्यसे व्रतचर्यातस्तत्कुरुष्व जितेन्द्रिये ॥
मनोरथतृतीयायाश्चरणेन भविष्यति ।
तत्प्राप्तये व्रतं वक्ष्ये तद्विधेहि यथोदितम् ॥
तेन व्रतेन चीर्णेन महासौभाग्यदेन तु ।
अवश्यं भविता बाले तव चैव मनोरथः ॥

पुलोमजोवाच—

कारुण्यवारिधे शंभो प्रणतत्राण सर्वदा ।
किंनामा वाऽथ का भक्तिः का पूज्या तत्र देवता ॥
कदा च तद्विधातव्यमितिकर्तव्यता च का ।
इत्याकर्ण्य शिवो वाक्यं तां तु प्रणिजगाद ह ॥

ईश्वर उवाच—

मनोरथतृतीयायां व्रतं पौलोमि तच्छुभम् ।
पूज्या विश्वभुजा गौरी भुजविंशतिशालिनी ॥
वरदोऽभयहस्तश्च साक्षसूत्रः समोदकः ।
देव्याः पुरस्ताद्व्रतिना पूज्य आशाविनायकः ॥
चैत्रशुक्लतृतीयायां कृत्वा वै दन्तधावनम् ।
सायंतनीं च निर्वर्त्य नातितृप्त्या भुजिक्रियाम् ॥
नियमं चेति गृह्णीयाज्जितक्रोधो जितेन्द्रियः ।
संत्यक्तास्पृश्यसंस्पर्शः शुचिस्तद्गतमानसः ॥
प्रातर्व्रतं चरिष्यामि मातर्विश्वभुजेऽनघे ।
विधेहि तत्र सांनिध्यं मन्मनोरथसिद्धये ॥

नियमं चेति संगृह्य स्वपेद्रात्रौ शुभं स्मरन् ।
प्रातरुत्थाय मेधावी विधायाऽऽवश्यकं विधिम् ॥
शौचमाचमनं कृत्वा दन्तकाष्ठं समाददेत् ।
अशोकवृक्षस्य शुभं सर्वशोकविशातनम् ॥
नित्यंतनं च निष्पाद्य विधिं विधिविदां वरः ।
स्नात्वा शुद्धाम्बरः सायं गौरीपूजां समाचरेत् ॥
आदौ विनायकं पूज्य घृतपूरान्निवेद्य च ।
ततोऽर्चयेद्विश्वभुजामशोककुसुमैः शुभैः ॥
अशोकवर्तिनैवेद्यं धूपैश्चागुरुसंभवैः ।
कुङ्कुमेनानुलिप्याऽऽदावेकभक्तं ततश्चरेत् ॥
अशोकदीपसहितैर्घृतपूरैर्मनोहरैः ।
एवं चैत्रतृतीयायां व्यतीतायां पुलोमजे ॥
राधादिफाल्गुनान्तासु तृतीयासु व्रतं चरेत् ।
क्रमेण दन्तकाष्ठानि कथयामि तवानघे ॥
अनुलेपनवस्तूनि कुसुमानि तथैव च ।
नैवेद्यानि गजास्यस्य देव्याश्चापि शुभव्रते ॥
अन्नानि चैकभक्तस्य शृणु तानि फलाप्तये ।
जम्ब्वपामार्गखदिरजातीचूतकदम्बकाः ॥
प्लक्षोदुम्बरखर्जुरीबीजपूरीसदाडिमाः ।
दन्तकाष्ठद्रुमा एते व्रतिनः समुदाहृताः ॥
सिन्दूरागुरुकस्तुरीचन्दनं रक्तचन्दनम् ।
गोरोचना देवदारु पद्माक्षं च निशाद्वयम् ॥
प्रीत्याऽनुलेपनं बाले यक्षकर्दमसंभवम् ।
सर्वेषामप्यलाभे च प्रशस्तो यक्षकर्दमः ॥
कस्तुरीकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च ।
चन्दनस्य त्रयो भागाः शशिनस्त्वेक एव हि ॥
यक्षकर्दम इत्येष समस्तसुरवल्लभः ।
अनुलिप्याथ कुसुमैरर्चयेद्वच्मि तान्यपि ॥
पाटलामल्लिकापद्मकेतकीकरवीरकैः ।
उत्पलै राजचम्पैश्च नन्द्यावर्तैश्च जातिभिः ॥
कुमारीभिः कर्णिकारैरलाभे तच्छदैः सह ।
सुगन्धिभिः प्रसूनाद्यैः सर्वालाभेऽपि पूजयेत् ॥

करम्भो दधिभक्तं च सचूतरसमण्डकाः ।
फेणिका वटकाश्चैव पायसं च सशर्करम् ॥
समुद्गं सघृतं नक्तं कार्तिके विनिवेदयेत् ।
इण्डेरिकाश्च लड्डूका माघे लपसिका शुभा ॥
मुष्टिकाः शर्करागर्भाः सर्पिषा परिसाधिताः ।
निवेद्याः फाल्गुने देव्यै सार्धं विघ्नजिता मुदा ॥
निवेदयेद्यदन्नं हि एकभक्तेऽपि तत्स्मृतम् ।
अन्यन्निवेद्य संमूढो भुञ्जानोऽन्यत्पतेदधः ॥
प्रतिमासं तृतीयायामेवमाराध्य वत्सरम् ।
व्रतसंपूर्तये कुर्यात्स्थण्डिलेऽग्निसमर्चनम् ॥
जातवेदसमन्त्रेण तिलाज्यद्रविणेन च ।
शतमष्टाधिकं होमं कारयेद्विधिना व्रती ॥
सदैव नक्ते पूजोक्ता सदा नक्तं तु भोजनम् ।
नक्त एव हि होमोऽयं नक्त एव क्षमापनम् ॥
गृहाण पूजां मे भक्त्या मातर्विघ्नजिता सह ।
नमोऽस्तु ते विश्वभुजे पूरयाऽऽशु मनोरथम् ॥
नमो विघ्नकृते तुभ्यं नम आशाविनायक ।
त्वं विश्वभुजया सार्धं मम देहि मनोरथम् ॥
एतौ मन्त्रौ समुच्चार्य पूज्यौ गौरीविनायकौ ।
व्रतक्षमापने देयः पर्यङ्कस्तूलिकान्वितः ॥
उपधान्यसमायुक्तो दीपो दर्पणसंयुतः ।
आचार्यं च सपत्नीकं पर्यङ्क उपवेश्य च ॥
व्रती समर्चयेद्वस्त्रैः करकर्णविभूषणैः ।
सुगन्धचन्दनैर्माल्यैर्दक्षिणाभिर्मुदाऽन्वितः ॥
दद्यात्पयस्विनीं गां च व्रतस्य परिपूर्तये ।
तथोपभोगवस्तूनि च्छत्रोपानत्कमण्डलुम् ॥
मनोरथतृतीयाया व्रतमेतन्मया कृतम् ।
न्यूनातिरिक्तसंपूर्णमेतदस्तु भवद्गिरा ॥
इत्याचार्यं समापृच्छ्य तथेत्युक्तश्च तेन वै ।
आसीमान्तमनुव्रज्य दत्त्वाऽन्येभ्योऽपि शक्तितः ॥
नक्तं समाचरेत्पोष्यैः सार्धं सुप्रीतमानसः ।
प्रातश्चतुर्थ्यां संभोज्य चतुरश्च कुमारकान् ॥

अभ्यर्च्य गन्धमाल्याद्यैर्द्वादशापि कुमारिकाः ।
एवं संपूर्णतां याति व्रतमेतत्सुनिर्मलम् ॥
कार्यं मनोरथावाप्त्यै सर्वैरेतद्व्रतं शुभम् ।
पत्नीं मनोरमां कुल्यां मनोवृत्त्यनुसारिणीम् ॥
तारिणीं दुःखसंसारसागरस्य पतिव्रताम् ।
कुर्वन्नेतद्व्रतं वर्षं कुमारः प्राप्नुयात्स्फुटम् ॥
कुमारी पतिमाप्नोति स्वाढ्यं सर्वगुणाधिकम् ।
सुवासिनी लभेत्पुत्रान्पत्युः सौख्यमखण्डितम् ॥
दुर्भगा सुभगा स्याच्च धनाढ्या स्याद्दरिद्रिणी ।
विधवाऽपि न वैधव्यं पुनराप्नोति कुत्रचित् ॥
गुर्विणी च शुभं पुत्रं लभते सुचिरायुषम् ।
ब्राह्मणो लभते विद्यां सर्वसौभाग्यदायिनीम् ॥
राज्यभ्रष्टो लभेद्राज्यं वैश्यो लाभं च विन्दति ।
चिन्तितं लभते शूद्रो व्रतस्यास्य निषेवणात् ॥
धर्मार्थी धर्ममाप्नोति धनार्थी धनमाप्नुयात् ।
कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥
यो यो मनोरथो यस्य स तं तं विन्दते ध्रुवम् ।
मनोरथतृतीयायां व्रतस्य चरणाद्व्रती ॥

ततः—अन्यत्र ये व्रतं चैतत्करिष्यन्ति सदाशिव ।
ते कथं पूजयिष्यन्ति मां तथाऽऽशाविनायकम् ॥

इति भवान्या पृष्टे भवः—

वाराणस्यां समभ्यर्च्या विश्वे त्वं सर्वरूपिणी ।
आशाविघ्नजिता सार्धं सर्वाशापूर्तिकारिणी ॥
अन्यत्र मतिभिर्विश्वे काञ्चनी प्रतिमा तव ।
एककृष्णलकादूर्ध्वं कार्या विघ्नहृतोऽपि च ॥
आचार्याय व्रती दद्याद्व्रतान्ते प्रतिमाद्वयम् ।
सकृत्कृते व्रते चास्मिन्कृतकृत्यो व्रती भवेत् ॥
ततः पुलोमजा देवी श्रुत्वैतद्व्रतमुत्तमम् ।
कृत्वा मनोरथं प्राप्य यथाऽभिवाञ्छितं हृदि ॥ इत्यादि ।

इति मनोरथव्रतम् । अस्यामेव तृतीयायां पार्वतीशयात्रा कार्या । तदुक्तम्—

चैत्रशुक्लतृतीयायां पार्वतीशसमर्चनात्।
इह सौभाग्यमाप्नोति परत्र च शुभां गतिम्॥

तथाऽत्रैव चित्रघण्टायात्रा तदुक्तं चित्रघण्टां प्रकृत्य—

चैत्रशुक्लतृतीयायां कार्या यात्रा प्रयत्नतः।
महामहोत्सवः कार्यो निशि जागरणं तथा॥
महापूजोपकरणैश्चित्रघण्टां समर्च्य च।
शृणोति नान्तकस्येह घण्टां महिषकण्ठगाम्॥

तथा वैशाखशुक्लतृतीयायां त्रिलोचनपूजादि तदुक्तम्—

राधशुक्लतृतीयायां स्नात्वा पैलिप्पिले ह्रदे।
उपोषणपरो भक्त्या रात्रौ जागरणान्वितः॥
त्रिलोचनं पूजयित्वा प्रातः स्नात्वा तु तत्र वै।
पुनर्लिङ्गं समभ्यर्च्य दत्त्वा धर्मघटानपि॥
सान्नान्सदक्षिणान्देवि पितॄनुद्दिश्य हर्षितः।
विधाय पारणं पश्चाच्छिवभक्तजनैः सह॥
विसृज्य पार्थिवं देहं तेन पुण्येन नोदितः।
भवेच्च देवि नियतं गणो मम पुरोगमः॥

राधो वैशाखः। भाद्रकृष्णतृतीयायां विशालाक्षीयात्रा। उक्तं काशीखण्डे—

भाद्रकृष्णतृतीयायामुपोषणपरैर्नृभिः।
कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः॥
प्रातर्भोज्याः प्रयत्नेन चतुर्दश कुमारिकाः।
अलंकृता यथाशक्ति स्रगम्बरविभूषणैः॥
विधाय पारणं पश्चात्पुत्रभृत्यसमन्वितः।
सम्यग्वाराणसीवासफलं लभ्येत कुम्भज॥
तस्यां तिथौ महायात्रा कार्या क्षेत्रनिवासिभिः।
उपसर्गप्रशान्त्यर्थं निर्वाणकमलाप्तये॥

मोक्षलक्ष्मीप्राप्तय इत्यर्थः। आश्विनकृष्णतृतीयायां ललितादेव्या यात्रा। तदुक्तम्—

इषे कृष्णतृतीयायां ललितां परिपूज्य वै।
नारी वा पुरुषो वाऽपि लभते वाञ्छितं पदम्॥

इष आश्विने ।

अथ चतुर्थी । सर्वासु कृष्णचतुर्थीषु मध्यमेशकृत्तिवासेशकरुणेश्वर-यात्रा चैत्रादिमासत्रयकृष्णचतुर्थीषु वा क्रमेण कार्या शिष्टाचारादिति चतुर्दशलिङ्गयात्राप्रक्रमेऽभिधास्यामः । तथा सर्वासु चतुर्थीषु ढुण्ढि-यात्रा कार्या । तदुक्तं काशीखण्डे—

कुर्यात्प्रतिचतुर्थीह यात्रां विघ्नेशितुः सदा ।
ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदे ॥

लैङ्गे तु पञ्चविनायकविशेषाणां यात्रोक्ता । यथा—

विनायकान्प्रवक्ष्यामि अस्य क्षेत्रस्य विघ्नदान् ।
ढौण्ढं तु प्रथमं नत्वा तथा कोणविनायकम् ॥
देव्या विनायकं चैव गोप्रेक्षे हस्तिदन्तिकम् ।
विनायकं तथैवान्यं सिंहयानामविश्रुतम् ॥
चतुर्थ्यां देवि द्रष्टव्या एते पञ्च विनायकाः ।
लड्डुकाश्चैव दातव्या एतानुद्दिश्य ब्राह्मणे ॥
एतेनैव क्रमेणेह सिद्धिमाप्नुयते नरः ।

अत्र चतुर्थ्यामित्यविशेषात्सर्वमासशुक्लकृष्णचतुर्थीविषयता काशी-खण्डे—

ये त्वामिह प्रतिचतुर्थि समर्चयन्ति
ढुण्ढे विगाढमतयः कृतिनस्त एव ॥
सर्वापदां शिरसि वामपदं निधाय
सम्यग्गजानन गजाननतां लभन्ते ॥

अङ्गारवारयुक्तायां यस्यां कस्यांचिच्छुक्लकृष्णचतुर्थ्यां मोदकप्राधा-न्येन ढुण्ढिपूजा कार्या तदुक्तं काशीखण्डे—

प्रथमं ढुण्ढिराजोऽसि मम दक्षिणतो मनाक् ।
आढुण्ढ्य सर्वभक्तेभ्यः सर्वार्थान्संप्रयच्छसि ॥
अङ्गारवासरवतीमिह यैश्चतुर्थीं
संप्राप्य मोदकभरैः परिमोदवद्भिः ॥
पूजा व्यधायि विविधा तव गन्धमाल्यै-
स्तानत्र पुत्र विदधामि गणान्गणेश ॥

तथा—अङ्गारकचतुर्थ्यां तु पुरा जज्ञे गणेश्वरः ।
एकभक्तव्रती तत्र संपूज्य गणनायकम् ॥
किंचिद्दत्त्वा तमुद्दिश्य न विघ्नैरभिभूयते ।

अङ्गारकचतुर्थ्यामेवाङ्गारककुण्डे स्नात्वाऽङ्गारकेशपूजा कार्या पीडानिवृत्तये । तदुक्तमङ्गारकुण्डं प्रकृत्य—

अङ्गारवारयुक्तायां चतुर्थ्यां स्नाति यो नरः ।
व्याधिभिर्नाभिभूयेत न च दुःखी कदाचन ॥

तथा—अङ्गारतीर्थं तत्रैव अङ्गारेश्वरसंनिधौ ।
तत्राङ्गारचतुर्थ्यां तु स्नात्वा निष्पापतामियात् ॥

एतद्वाक्यात्पापाभावोऽपि फलम् । लैङ्गेऽप्यङ्गारककुण्डमेवाधिकृत्य—

अङ्गारेण यदा योगश्चतुर्थ्यामष्टमीषु वा ।
तीर्थे तस्मिन्नरः स्नात्वा दृष्ट्वा वै मङ्गलेश्वरम् ॥
व्याधिभिश्च विनिर्मुक्तो यत्र तत्राभिजायते ।

ग्रहपीडाभावकामस्तु गङ्गायां स्नात्वाऽङ्गारकेशमर्चयेत् । तदुक्तम्—

अङ्गारकचतुर्थ्यां ये स्नात्वोत्तरवहाम्भसि ।
अभ्यर्च्याङ्गारकेशानं नमस्यन्ति नरोत्तमाः ॥
न तेषां ग्रहपीडा च कदाचित्क्वापि जायते ।

श्रावणभाद्रपदशुक्लचतुर्थ्यां ढुण्ढियात्रेति शिष्टाचारः । माघशुक्लचतुर्थ्यां मूखप्रेक्षणिकापूजोपवासादि कार्यम् । तदुक्तं लैङ्गे तां प्रकृत्य—

माघमासे चतुर्थ्यां तु तस्मिन्काल उपोषितः ।
अर्चयित्वा तु यो देवि जागरं तत्र कारयेत् ॥
तस्यर्द्धिमत्कुलं देवि त्रैलोक्ये चातिदुर्लभम् । इति ।

तथैतस्यामेव गणेशप्रीतये व्रतं कार्यं वक्ष्यमाणप्रकारेण तदुक्तं काशीखण्डे—

माघशुक्लचतुर्थ्यां च नक्तव्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम् ।
शुक्लां शुक्लतिलान्बध्वा प्राश्नीया(यें)ल्लडुकान्व्रती ॥

तापसीं माघीम् ।

कार्या यात्रा प्रयत्नेन क्षेत्रसिद्धिमभीप्सुभिः ।
तस्यां चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे सर्वोपसर्गहृत् ॥
तां यात्रां नात्र यः कुर्यान्नैवेद्यं तिललड्डुकैः ।

नैवेद्यं च न कुर्यादित्यन्वयः ॥

उपसर्गसहस्रैस्तु स हन्तव्यो ममाऽऽज्ञया ।
होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः ॥
तस्यां चतुर्थ्यां मन्त्रज्ञस्तस्य मन्त्रः प्रसेत्स्यति ।
वैदिकोऽवैदिको वाऽपि यो मन्त्रस्ते गजानन ॥
जप्तस्त्वत्संनिधौ ढुण्ढे सिद्धिं दास्यति वाञ्छिताम् ॥ इति।

अथ पञ्चमी । तत्र सर्वासु कृष्णपक्षपञ्चमीषु हिरण्यगर्भेशरत्नेश्वर-मोक्षद्वारेश्वरयात्रा चैत्रादिमासत्रयकृष्णपञ्चमीषु वा क्रमेणेति वक्ष्यते। श्रावणमासशुक्लपञ्चम्यां कर्कोटवापीसमीपस्थवासुकिकुण्डे स्नात्वा वासुकिं पूजयेत् । तदुक्तं काशीखण्डे—

यः स्नातो नागपञ्चम्यां कुण्डे वासुकिसंज्ञके ।
न तस्य विषसंसर्गो भवेत्सर्पसमुद्भवः ॥
कर्तव्या नागपञ्चम्यां यात्रा वर्षासु तत्र वै ।
नागाः प्रसन्ना जायन्ते कुले तस्यापि सर्वदा ॥

अस्यामेव कर्कोटवाप्यां यात्रेति शिष्टसमाचारः ।

अथ षष्ठी । सर्वासु कृष्णषष्ठीष्वीशानेशचन्द्रेश्वरस्वर्गद्वारेश्वरयात्रा चैत्रादिमासत्रयकृष्णषष्ठीषु चेति वक्ष्यते । तथा रविवासरयुक्तायां यस्यां कस्यांचिच्छष्ठ्यां लोलार्कयात्रा । तदुक्तं काशीखण्डे—

कृतानि यानि पापानि नरैः संवत्सरादपि ।
नश्यन्ति क्षणतस्तानि षष्ठ्यर्के लोलदर्शनात् ॥

लोलो लोलार्को नाभिकदेशे नामग्रहणात् । तथा रवियुक्तायामेव सर्वस्यां षष्ठ्यां सामान्यतो रवियात्रा 'रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि ' इतिवचनात् । तथा भाद्रपदशुक्लषष्ठ्यां लोलार्कयात्रेति शिष्टाचारः । मार्गशीर्षशुक्लषष्ठ्यां यदा रविवारस्तदाऽपि य(त)त्र यात्रा—

मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवासरे ।
विधाय वार्षिकीं यात्रां नरः पापात्प्रमुच्यते ॥

इति काशीखण्डवचनात् ।

अथ सप्तमी । तत्र सर्वासु कृष्णसप्तमीषु गोप्रेक्षेशकेदारेशब्रह्मेशयात्रा चैत्रादित्रयकृष्णसप्तमीषु वा क्रमेणेति वक्ष्यते । तथा रविसप्तम्यां सर्वस्यां रवियात्रा । तदुक्तम्—

रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि ।
तथैव रविसप्तम्यां सर्वविघ्नोपशान्तये ॥

मार्गशीर्षस्य सप्तम्यां रवियुतायां लोलार्कयात्रा । तदुक्तं [तं] प्रकृत्य—

मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवासरे ।
विधाय वार्षिकीं यात्रां नरः पापात्प्रमुच्यते ॥

माघशुक्लसप्तम्यां च तत्र यात्रा । तदुक्तम्—

लोलार्के रथसप्तम्यां स्नात्वा गङ्गासिसंगमे ।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ॥

अस्यामेव यदा रविवारस्तदा साम्बादित्ययात्रा कार्या । तदुक्तम्—

शुक्लायां द्विजसप्तम्यां माघे मासि रवेर्दिने ।
महापर्व समाख्यातं रविपर्वसमं शुभम् ॥
महारोगात्प्रमुच्येत तत्र स्नात्वाऽरुणोदये ।
साम्बादित्यं प्रपूज्यापि धर्ममक्षयमाप्नुयात् ॥
संनिहत्यां कुरुक्षेत्रे यत्पुण्यं राहुदर्शने ।
तत्पुण्यं रविसप्तम्यां माघे काश्यां न संशयः ॥

प्रकरणात्काश्यां साम्बकुण्डे । साम्बकुण्डं सूर्यकुण्डमिति प्रसिद्धम् । तथा पूर्वोक्तायामेव सप्तम्यां रविविशिष्टायां विशिष्टेतिकर्तव्यताकामा- दिकेशवयात्रां कुर्यात् । तदुक्तम्—

अगस्तेरथ सप्तम्यां रविवारो यदाऽऽप्यते ।
तदा पादोदके तीर्थ आदिकेशवसंनिधौ ॥
स्नात्वोषसि नरो मौनी केशवादित्यपूजनात् ।
सप्तजन्मकृतात्पापान्मुक्तो भवति तत्क्षणात् ॥
यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ॥
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ।
एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् ॥
मनोवाक्कायजं यच्च ज्ञाताज्ञातं च यत्पुनः ।
इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके ॥
सर्वव्याधिसमायुक्तं हर माकरि सप्तमि ।
एतन्मन्त्रत्रयं जप्त्वा स्नात्वा पादोदके नरः ॥
केशवादित्यमालोक्य क्षणान्निष्कलुषो भवेत् ।

मौनीति स्नात्वा मौनिनैव केशवादित्यः पूजनीयो नान्तरा वदेदि- त्यर्थः। पादोदके स्नानमुक्तं तस्यैवेतिकर्तव्यतामाह यद्यादित्यादिना न तु पूजा। पूजानन्तरमिदं स्नानान्तरं विधीयते वाक्यभेदप्रसङ्गाददृष्टान्त- रकल्पनापत्तेश्च।

अथाष्टमी। तत्र सर्वासु कृष्णाष्टमीषु, चैत्रादित्रयकृष्णाष्टमीषु वा वृषमध्वजेशधर्मेशलाङ्गलीशयात्रेति वक्ष्यते। तथा सर्वास्वष्टमीषु भैरव- यात्रा कार्या। तदुक्तम्—

अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे।
यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते॥

तथा—कालराजं न यः काश्यां प्रतिभूताष्टमीकुजम्।
भजेत्तस्य क्षयेत्पुण्यं कृष्णपक्षे यथा शशी॥

न भजेदित्यन्वयः। तथा सर्वाष्टमीषु दुर्गायात्रा कार्या। तदुक्तम्—

अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः।
संपूज्या सततं काश्यां दुर्गा दुर्गार्तिनाशिनी॥
नवम्यामथ वाऽष्टम्यां चण्डीयात्रा शुभावहा॥ इति च।

सर्वाष्टमीष्वीशानेशयात्राऽपि कार्या।

अष्टम्यां च चतुर्दश्यामीशानेशं यजन्ति ये॥
त एव रुद्रा विज्ञेया इहामुत्राप्यसंशयम्।

तथा—सर्वाष्टमीषु चन्द्रेश्वरसमीपस्था पिङ्गला पूज्या। तदुक्तम्—

ये तु प्रत्यष्टमि जनास्तथा प्रतिचतुर्दशि।
सिद्धयोगीश्वरीपीठे पूजयिष्यन्ति भावतः॥
अदृष्टरूपां सुभगां पिङ्गलां सर्वसिद्धिदाम्।
धूपनैवेद्यदीपाद्यैस्तेषामाविर्भविष्यति॥

प्रत्यक्षी भविष्यतीत्यर्थः। सिद्धयोगीश्वरीपीठं चन्द्रेश्वरप्रदेशः। असिसंगमस्था स्वप्नेश्वर्यपि सर्वाष्टमीषु पूज्या। तदुक्तं तां प्रस्तुत्य—

अष्टम्यां च चतुर्दश्यां नवम्यां निशि वा दिवा।
प्रयत्नतः समर्च्या सा काश्यां ज्ञानार्थिभिर्नरैः॥

त्रिलोचनयात्राऽपि सर्वाष्टमीषु कार्या। तदुक्तम्—

प्रतिमासं सदाऽष्टम्यां चतुर्दश्यां च भामिनि।
आयान्ति सर्वतीर्थानि द्रष्टुं देवं त्रिविष्टपम्॥

त्रिविष्टपस्त्रिलोचनः । तस्मात्तत्र पूजादि कार्यमिति भावः । मत्स्योदर्यामपि सर्वाष्टमीषु यात्रा । तदुक्तम्—

अष्टम्यां च चतुर्दश्यां तीर्थानि सह सागरैः ।
षष्टिकोटिसहस्राणि मत्स्योदर्यां विशन्ति हि ॥

उक्त एव भावः । तथाऽष्टम्यामुपोष्य ज्ञानवापीयात्रा कार्या । तदुक्तम्—

अष्टम्यां च चतुर्दश्यामुपवासी नरोत्तमः ।
प्रातः स्नात्वाऽथ पीत्वाऽम्भस्त्वन्तर्लिङ्गमयो भवेत् ॥

इदं प्रक्रमाज्ज्ञानवापीविषयम् । यदा तु भौमवासरयुक्ताऽष्टमी तदा गङ्गास्थे भैरवतीर्थे स्नात्वा तत्समीपस्थं भैरवं पूजयेत्—

तदुक्तं तदेव प्रकृत्य—

भौमाष्टम्यां तत्र नरः स्नात्वा संतर्पयेत्पितॄन् ।
दृष्ट्वा च भैरवं कालं कलिं कालं च संजयेत् ॥

कालमिति भैरवविशेषणं तेन कालभैरवं दृष्ट्वेत्यर्थः । अङ्गाराष्टम्यामङ्गारकुण्डे स्नात्वा मङ्गलेशो द्रष्टव्यः ।

अत्र लैङ्गं वाक्यं चतुर्थप्रकरण उक्तम् । यदा तु यस्यां कस्यांचित्कृष्णाष्टम्यां गुरुपुष्यव्यतीपाता भवन्ति तदा ज्ञानवाप्यां श्राद्धमतिशस्तम् । तदुक्तं तामेव प्रस्तुत्य—

गुरुपुष्यासिताष्टम्यां व्यतीपातो यदा भवेत् ।
तदाऽत्र श्राद्धकरणाद्गयाकोटिगुणं भवेत् ॥

चैत्रशुक्लाष्टम्यां भवानीयात्रा । तदुक्तम्—

चैत्राष्टम्यां महायात्रां भवान्याः कारयेत्सुधीः ।
अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रदक्षिणाः ॥
प्रदक्षिणीकृताऽनेन सप्तद्वीपवती मही ।

अस्यामेवाष्टम्यां मध्यमेश्वरयात्रा । तदुक्तं तमेव प्रकृत्य—

तत्र जागरणं कृत्वाऽशोकाष्टम्यां मधौ नरः ।
न जातु शोकं लभते सदाऽऽनन्दमयो भवेत् ॥

मधौ चैत्रेऽशोकाष्टम्यां शुक्लाष्टम्याम् । ज्येष्ठसिताष्टम्यां सौभाग्याय स्त्रीभिर्ज्येष्ठागौरीयात्रा कार्या । तदुक्तम्—

ज्येष्ठे मासि सिताष्टम्यां तत्र कार्यो महोत्सवः ।
तत्र जागरणं कार्यं सर्वसंपत्समृद्धये ॥

ज्येष्ठां गौरीं नमस्कृत्य ज्येष्ठवापीपरिप्लुता ।
सौभाग्यभाजनं भूयाद्योषा सौभाग्यभागपि ।

आदौ परिप्लुता सती पश्चान्नमस्कृत्येत्यन्वयः । ज्येष्ठा गौरी ज्येष्ठेश्वरसमीपे । भाद्रपदकृष्णाष्टम्यां गङ्गातीरस्थमहालक्ष्मीयात्रा । तदुक्तं तामेव प्रस्तुत्य——

नभस्य बहुलाष्टम्यां कृत्वा जागरणं निशि ।
समर्च्य च महालक्ष्मीं व्रती व्रतफलं लभेत् ॥

नभस्यो भाद्रपदः । व्रती, उपवासवान् । भाद्रस्यैव शुक्लाष्टम्यां सूर्यकुण्डसमीपस्थमहालक्ष्मीयात्रा तदुक्तं तां प्रकृत्य——

महालक्ष्म्यष्टमीं प्राप्य तत्र यात्रा कृता नृणाम् ।
संपूजितेह विधिवत्पद्मा सद्म न मुञ्चति ॥

महालक्ष्म्यष्टमीं भाद्रशुक्लाष्टमीम् । महालक्ष्मीव्रतवन्तस्त्वेतदारभ्याग्रिमाष्टमीपर्यन्तं षोडशदिनानि यात्रां कुर्वन्तीति संप्रदायः । आश्विनशुक्लाष्टम्यामुपवासी भवानीपूजापूर्वकं तत्र जागरणं कृत्वा प्रातरपि भवानीं पूजयेत् ।

तदुक्तं तामेव प्रकृत्य—

कुर्याज्जागरणं रात्रौ महाष्टम्यां व्रती नरः ।
प्रातर्भवानीमभ्यर्च्य प्राप्नुयाद्वाञ्छितं फलम् ॥

महाष्टम्यामाश्विनशुक्लायाम् । व्रती, उपवासवान् । अत्रैव महामुण्डाख्यचण्डीयात्रा । तदुक्तं तां प्रकृत्य—

तस्या यात्रां तु यः कुर्यान्महाष्टम्यां नरोत्तमः ।
यशस्वी पुत्रपौत्राढ्यो लक्ष्मीवांश्चापि जायते ॥

अस्यामेव वृषभध्वजदक्षिणस्थच्छागेश्वरीयात्रा । तदुक्तं तामेव प्रकृत्य—

तस्या देव्याः प्रसादेन काशीवासः प्रलभ्यते ।
अतश्छागेश्वरीं देवीं महाष्टम्यां प्रपूजयेत् ॥

कार्तिकसिताष्टम्यां धर्मेश्वरयात्रा । तदुक्तम्—

ये कार्तिके मासि सिताष्टमीतिथौ
यात्रां करिष्यन्ति नरा उपोषिताः ॥
रात्रौ च वै जागरणं महोत्सवै-
र्धर्मेश्वरे ते न पुनर्भवा भुवि ॥

मार्गासिताष्टमी कालाष्टमीति प्रसिद्धा तस्यां कालभैरवपूजोपवासादि कार्यम् । तदुक्तम्—

मार्गशीर्षासिताष्टम्यां कालभैरवसंनिधौ ।
उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते ॥

तथा—कृत्वा च विविधां पूजां महासंभारविस्तरैः ।
नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥

अत्र कार्तिक्यनन्तराऽष्टमी मार्गकृष्णाष्टमी ग्राह्या गौणचान्द्रमानेन न तु मुख्यचान्द्रमानेन । अत्र च शिवरहस्ये सायं भैरवप्रादुर्भावस्योक्तत्वात्तद्व्यापिन्यां पूजोपवासादि कार्यम् ।

अथ नवमी । सर्वासु कृष्णनवमीषु चैत्रादिमासत्रयकृष्णनवमीषु वा क्रमेणोपशान्तशिववीरेश्वरवृद्धकालेश्वराणां यात्रा । तथा सर्वनवमीषु चण्डीयात्रा कार्या 'नवम्यामथ वाऽष्टम्यां चण्डीयात्रा शुभावहा' इति वचनात् । तथा कुलस्तम्भपूजाऽपि सर्वनवमीषु कार्या । तदुक्तम्—

नवम्यां पञ्चदश्यां च कुलस्तम्भं समर्चयेत् ।
दुःखं रुद्रपिशाचत्वे न भवेत्तस्य पूजनात् ।

सर्वनवमीषूपोष्य जागरणपूजादि कृत्वा प्रातर्व्यासेश्वरदर्शनं कार्यम् । तदुक्तं सनत्कुमारसंहितायाम्—

दृष्ट्वा व्यासपुरीमेतां नवम्यां चापि पर्वणि ।
उपवासीह जागर्ति व्यासमाराध्य संनिधौ ॥
प्रातर्व्यासेश्वरं दृष्ट्वा मुच्यते सर्वपातकैः ।

अत्रैवासिसंगमस्था स्वप्नेश्वरी पूज्या । वचनं त्वष्टमीप्रकरणे दर्शितम् ।

अथ दशमी । तत्र सर्वासु कृष्णदशमीषु ज्येष्ठेशकाभेशवृषेशानां यात्रा चैत्रादिमासत्रयकृष्णदशमीषु वा । तथा ज्येष्ठशुक्लदशम्यां वक्ष्यमाणविधिना दशाश्वमेधे गङ्गां संपूज्य स्तोत्रपाठः कार्यः । तदुक्तं भविष्यपुराणे—

ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ।
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः ॥
निशायां जागरं कृत्वा गङ्गादशविधैस्तथा ।

दशमीजागरं कृत्वेत्यर्थः ।

पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च दशसंख्यया ।
तथैव दीपैस्ताम्बूलैः पूजयेच्छ्रद्धयाऽन्वितः ॥
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः ।
दशप्रसृतिकृष्णांश्च तिलान्सर्पिश्च वै जले ॥
सक्तुपिण्डान्गुडपिण्डान्दद्याच्च दशसंख्यया ।
ततो गङ्गातटे रम्ये हेम्ना रौप्येण वा तथा ॥
गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् ।
पद्मस्वस्तिकचिह्नस्य पूर्णकुम्भस्य चोपरि ॥
संस्थाप्य पूजयेद्देवीं तदलाभे मृदाऽपि वा ।
अथ तत्राप्यशक्तश्चेल्लिखेत्पिष्टेन वै भुवि ॥
चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ।
रत्नकुम्भसिताम्भोजवरदाभयसत्कराम् ॥
सितवस्त्रपरीधानां मुक्तामणिविभूपिताम् ।
एवं ध्यायेत्सुसौम्यां च चन्द्रायुतसमप्रभाम् ॥
चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ।
सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम् ॥
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ।
त्रैलोक्यनमितां गङ्गां सर्वैर्देवैराधिष्ठिताम् ॥
दिव्यरत्नपरीतां च दिव्यमाल्यविभूपणाम् ।
ध्यात्वा जले यथा प्रोक्तं तथाऽर्चायां च पूजयेत् ॥

अर्चायां प्रतिमायाम् ।

वक्ष्यमाणेन मन्त्रेण कुर्यात्पूजामशेषतः ।
पञ्चामृतेन च स्नानमर्चायां तु विशिष्यते ॥
प्रतिमाग्रे स्थण्डिले तु गोमयेनोपलेपयेत् ।
नारायणं महेशं च ब्रह्माणं भास्करं तथा ॥
भगीरथं च नृपतिं हिमवन्तं नगेश्वरम् ।
गन्धपुष्पादिभिः सम्यग्यथाशक्ति प्रपूजयेत् ॥
दश प्रस्थांस्तिलान्दद्याद्दशविप्रेभ्य एव च ।
दश प्रस्थान्यवान्दद्याद्दशसंख्यगवीस्तथा ॥

प्रस्थः षोडश पलानि ।

मत्स्यकच्छपमण्डूकमकरादिजलेचरान् ।
कारयित्वा यथाशक्ति सुवर्णरजतेन वा ॥

तदलाभे पिष्टमयानभ्यर्च्य कुसुमादिभिः ।
गङ्गायां प्रक्षिपेदाज्यं दीपांश्चैव प्रवाहिषु ॥
रथयात्रां दिने तस्मिन्विभवे सति कारयेत् ।
तथाऽऽरूढप्रतिकृतेर्गङ्गायास्तूत्तरामुखम् ॥
भ्रमन्त्या दुर्लभं लोके दर्शनं पापकर्मणाम् ।
एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः ॥
दशपापैर्वक्ष्यमाणैः सद्य एव विमुच्यते ।
पुष्पाद्यैः पूजयेद्गङ्गां मन्त्रेणानेन भक्तितः ॥

'ॐ नमः शिवायै नारायण्यै दशहरायै गङ्गायै नमो नमः'

इति मन्त्रेण यो मर्त्यो दिने तस्मिन्दिवानिशम् ।
जपेत्पञ्चसहस्राणि दशधर्मफलं लभेत् ॥
उद्धरेद्दश पूर्वांश्च कुलं चैवं भवार्णवात् ।
वक्ष्यमाणमिदं स्तोत्रं विधिना प्रतिगृह्य च ॥
गङ्गाग्रे तद्दिने जप्यं तत्पूजायां प्रवर्तते ।

अत्र चतुर्भुजामित्यादिमाल्यविभूषणामित्यन्तं ध्यानं पठित्वा 'ॐ नमो भगवत्यै ऐं हिलि हिलि मिलि मिलि गङ्गे मां पावय पावय स्वाहा' इत्यागमोक्तमन्त्रेण पञ्च पुष्पाञ्जलीन्गङ्गायै दत्त्वा—

दशाङ्गं गुग्गुलुं धूपं सुगन्धं च मनोहरम् ।
गृहाण मङ्गलं दीपं घृतवर्तिसमन्वितम् ॥
रुद्ररूपे नमस्तेऽस्तु गृहाण वरदा भव ।
परदारपरद्रव्यपरद्रोहपराङ्मुखः ॥
गङ्गा ब्रूते कदाऽऽगत्य मामयं पावयिष्यति ।

इति पठित्वाऽनन्तरं गङ्गाजले स्थित्वा स्तोत्रं जपेत् ।

ॐ नमः शिवायै गङ्गायै वरदायै नमो नमः ।
नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ॥
नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमो नमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥
सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमो नमः ।
स्थास्नुजङ्गमसंभूतविषहन्त्र्यै नमो नमः ॥
संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ।
तापत्रितयसंहर्त्र्यै प्राणेश्यै ते नमो नमः ॥

शान्तिसंतानकारिण्यै नमस्ते शुद्धमूर्तये ।
सर्वसंसिद्धिकारिण्यै नमः पापारिमूर्तये ॥
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमोऽस्तु ते ।
भोगोपभोगदायिन्यै भोगवत्यै नमो नमः ॥
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ।
नमस्त्रैलोक्यभूषायै त्रिपथायै नमोऽस्तु ते ॥
नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः ।
त्रिहुताशनसंस्थायै तेजोवत्यै नमो नमः ॥
नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः ।
नमस्ते विश्वमित्रायै रेवत्यै ते नमो नमः ॥
बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमोऽस्तु ते ।
नमस्ते विश्वमुख्यायै नन्दिन्यै ते नमो नमः ॥
पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ।
परापरशताढ्यायै तारायै च नमोऽस्तु ते ॥
पाशजालनिकृन्तिन्या अभिन्नायै नमो नमः ।
शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥
उस्रायै सुखजग्ध्यै च संजीविन्यै नमो नमः ।
ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमोऽस्तु ते ॥
प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमो नमः ।
सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ॥
शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥
निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ।
परापरपरे तुभ्यं नमस्ते मोक्षदे सदा ॥
गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः।
गङ्गे मे पार्श्वयोरेधि त्वयि गङ्गेऽस्तु मे स्थितिः ॥
आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे ।
त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥
गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ।
य इदं पठते स्तोत्रं भक्त्या नित्यं नरोऽपि यः ॥
शृणोति श्रद्धया युक्तः कायवाक्चित्तसंभवैः ।
दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ॥

रोगस्थो मुच्यते रोगादापद्भ्यश्च प्रमुच्यते।
द्विपद्वचो बन्धनाद्यैश्च भयेभ्यश्च [विमुच्यते]॥
सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते।
इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत्॥
नाग्निचौरभयं तत्र पापेभ्योऽपि भयं न हि।
ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता॥
संहरेत्त्रिविधं पापं बुधवारेण संयुता।
तस्माद्दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः॥
यः पठेद्दशकृत्वस्तु दरिद्रो वाऽपि चाक्षमः।
सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः॥
पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितम्।
यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने॥
विधिर्यो विहितः सम्यक्सोऽपि गङ्गाप्रपूजने।
यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा ह्युमा॥
उमा यथा तथा गङ्गा चतूरूपं न भिद्यते।
विष्णुरुद्रान्तरं यच्च श्रीगौर्योरन्तरं तथा॥
गङ्गागौर्यन्तरं यच्च यो ब्रूते मूढधीस्तु सः।
रौरवादिषु घोरेषु नरकेषु पतत्यधः॥

दश पापान्याह—

अदत्तानामुपादानं हिंसा चैवाविधानतः।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्॥
पारुष्यमनृतं चैवं पैशुन्यं चापि सर्वशः।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्॥
एतानि दश पापानि हर त्वं मम जाह्नवि।
दशपापहरा यस्मात्तस्माद्दशहरा स्मृता॥
एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः।
मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा॥
दशत्रिंशच्छतान्सर्वान्पितॄनथ पितामहान्।
उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता॥

ॐ नमो भगवत्यै दशपापहरायै गङ्गायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै विश्वमुख्यायै नन्दिन्यै ते नमो नमः। अनेन मन्त्रेण जलेन तर्पयेदिति शिष्टाः।

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते।

गराख्यं करणम्। दशयोगसत्त्वेऽधिकं फलम्। कतिपययोगेष्वपि पूर्वोक्तं सर्वं कार्यमेव।

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम् ॥
विधिहरिहररूपां सेन्दुकोटीरजूटां
कलितसितदुकूलां जाह्नवीं तां नमामि ॥

इति भविष्योक्तं गङ्गास्तोत्रम्। इदं पूजास्तोत्रपाठादि ज्येष्ठशुक्लदशम्यां कार्यमिति काशीखण्ड उक्तम्। तत्र यद्यपि बहु भविष्यसमानमेवास्ति तथाऽपि पाठभेदबाहुल्यात्कतिपयवचनानां चाधिकत्वात्सर्वं पुनर्लिख्यते। प्रयोगादि तु वक्ष्यते—

ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते।
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः ॥
निशायां जागरं कुर्याद्गङ्गां दशविधैर्हरे।
पुष्पैः सुगन्धैर्नैवेद्यैः फलैर्दशदशोन्मितैः ॥
प्रदीपैर्दशभिर्धूपैर्दशाङ्गैर्गरुडध्वज।
पूजयेच्छ्रद्धया धीमान्दशकृत्वो विधानतः ॥
साज्यांस्तिलान्क्षिपेत्तोये गङ्गायाः प्रसृतीर्दश।
गुडसक्तुमयान्पिण्डान्दद्याच्च दश मन्त्रतः ॥
नमः शिवायै प्रथमं नारायण्यै पदं ततः।
दशहरायै पदमिति गङ्गायै मन्त्र एष वै ॥
स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः।
पूजा दानं जपो होमोऽनेनैव मनुना स्मृतः ॥
हेम्ना रूप्येण वा शक्त्या गङ्गामूर्तिं विधाय च।
वस्त्राच्छादितवक्त्रस्य पूर्णकुम्भस्य चोपरि ॥
प्रतिष्ठाप्यार्चयेद्देवीं पञ्चामृतविशोधिताम् ॥

ध्यानमाह सार्धश्लोकत्रयेण—

चतुर्भुजां त्रिनेत्रां च नदीनदनिषेविताम् ।
लावण्यामृतनिष्पन्दसंशीलद्गात्रयष्टिकाम् ॥
पूर्णकुम्भसिताम्भोजवरदाभयसत्कराम् ।
ततो ध्यायेत्सुसौम्यां च चन्द्रायुतसमप्रभाम् ॥
चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ।
सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ॥
त्रैलोक्यपूजितपदां देवर्षिभिरभिष्टुताम् ।
ध्यात्वा समर्च्य मन्त्रेण धूपदीपोपहारतः ॥
मां च त्वां च विधिं व्रध्नं हिमवन्तं भगीरथम् ।
प्रतिमाग्रे समभ्यर्च्य चन्दनाक्षतनिर्मितान् ॥

मां शिवं त्वां विष्णुं विधिं ब्रह्माणं व्रध्नं सूर्यम् ।

दशप्रस्थतिलान्दद्याद्दशविप्रेभ्य आदरात् ।
पलं च कुडवप्रस्थआढका द्रोण एव च ॥
धान्यमानेन बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ।
मत्स्यं कच्छं च मण्डूकमकरादिजलेचरान् ॥
हंसकारण्डवबकचक्रटिट्टिभसारसान् ।
यथाशक्ति स्वर्णरूप्यताम्रपिष्टविनिर्मितान् ॥
अभ्यर्च्य गन्धकुसुमैर्गङ्गायां प्रक्षिपेद्व्रती ।

सुवर्णादिचतुष्टयस्य शक्त्या विकल्पः ।

एवं कृत्वा विधानेन वित्तशाठ्यविवर्जितः ।
उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते ॥

दशपापप्रतिपादकमदत्तानामुपादानमित्यादिश्लोकत्रयं पूर्ववत् ।

एतैर्दशविधैः पापैर्दशजन्मसमुद्भवैः ।
मुच्यते नात्र संदेहः सत्यं सत्यं गदाधर ॥
उद्धरेन्नरकाद्घोराद्दश पूर्वान्दशापरान् ।
वक्ष्यमाणमिदं स्तोत्रं गङ्गाग्रे सर्वदा जपेत् ॥

'ॐ नमः शिवायै' इत्यादि 'नमः शिवे' इत्यन्तं पूर्ववत् ।

य इदं पठते स्तोत्रं शृणुयाच्छ्रद्धयाऽपि यः ।
दशधा मुच्यते पापैः कायवाक्चित्तसंभवैः ॥

रोगस्थो मुच्यते रोगाद्विपद्भ्यश्च विपद्युतः ।
मुच्यते बन्धनाद्बद्धो भीतो भीतेः प्रमुच्यते ॥
सर्वान्कामानवाप्नोति प्रेत्य च त्रिदिवं व्रजेत् ।
दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितम् ॥
गृहेऽपि लिखितं यस्य सदा तिष्ठति धारितम् ।
नाग्निचोरभयं तस्य न सर्पादिभयं क्वचित् ॥

ज्येष्ठे मासीत्यादि गङ्गाप्रपूजन इत्यन्तं पद्यचतुष्कं प्राग्वत् ।

यथाऽहं त्वं तथा विष्णो यथा त्वं तु तथा ह्युमा ।

उमा यथेत्यादि मूढधीस्तु स इत्यन्तं पूर्ववदिति । अत्र यद्यपि दशमीमात्रं प्रक्रम्येदमुक्तं तथाऽपि काशीखण्ड एव द्विपञ्चाशेऽध्याये ज्येष्ठशुक्लप्रतिपदो दशम्यवधि दशाश्वमेधे स्नानाद्युक्तम्—

ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् ।
दशाश्वमेधिके स्नात्वा मुच्यते जन्मपातकैः ॥
ज्येष्ठशुक्लद्वितीयायां स्नात्वा रुद्रसरोवरे ।
जन्मद्वयकृतं पापं तत्क्षणादेव नश्यति ॥
एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः ।
आशुक्लपक्षदशमि प्रतिजन्माघमुत्सृजेत् ॥
तिथिं दशहरां प्राप्य दशजन्माघहारिणीम् ।
दशाश्वमेधिके स्नातो यामीं पश्येन्न यातनाम् ॥
लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ ।
दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ॥
स्नातो दशहरायां यः पूजयेल्लिङ्गमुत्तमम् ।
भक्त्या दशाश्वमेधेशं न तं गर्भदशा स्पृशेत् ॥
ज्येष्ठे मासि सिते पक्षे स्नात्वा रुद्रसरे नरः ।
कुर्वन्वै वार्षिकीं यात्रां न विघ्नैरभिभूयते ॥
दशाश्वमेधावभृथे यत्फलं सम्यगाप्यते ।
दशाश्वमेधे तन्नूनं स्नात्वा दशहरातिथौ ॥
स्वर्धुन्याः पश्चिमे तीरे नत्वा दशहरेश्वरम् ।
न दुर्दशामवाप्नोति पुमान्पुण्यतमः क्वचित् ॥ इति ।

अत्र द्वित्रादिजन्मीयपापनाशः काश्युत्पन्नविषय इति प्रपञ्चितं प्रवेशप्रस्तावे । अत्रापि यद्यपि प्रतिपदादि स्नानमेवोक्तं तथाऽपि प्रतिपदादिदशम्यन्तमुत्तरोत्तरदिनवृद्धिसंख्यया स्तोत्रपाठः कार्यः । पूजादि चोपवासव्यतिरिक्तं यथाशक्ति प्रत्यहं कार्यमिति शिष्टाचारः । तथा चैवं प्रयोगः—तिथ्यन्तं स्मृत्वाऽद्य प्रतिपद्येकजन्मार्जितदशविधपापनाशार्थं स्नानमहं करिष्ये । एवमेकवारं स्तोत्रपाठमहं करिष्य इति । एवं द्वितीयायां जन्मद्वयार्जितदशविधपापनाशार्थमित्यादि द्विवारं स्तोत्रपाठमित्यादि च यावद्दशमि ज्ञेयम् । दशम्यां तु दशजन्मीयदशविधपापक्षयार्थमित्यादि । इदं च यद्यपि पुराणद्वयेऽपि गङ्गातीरमात्र उक्तं तथाऽपि काश्यां प्रतिपदादिदशम्यन्तदशाश्वमेधस्नानप्रतिपादकप्रदर्शितवचनानुरोधेन दशाश्वमेधावच्छिन्ने तीरे कार्यम् । अन्यक्षेत्रे तु गङ्गातीरमात्रे । यत्र तु गङ्गाया अप्यसंनिधिस्तत्रापि तीर्थान्तरे जलाशयान्तरे वा यथासंभवं कार्यम् ।

दशम्यां शुक्लपक्षे तु ज्येष्ठे मासे कुजेऽहनि ।
अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा ॥
हरते दश पापानि तस्माद्दशहरा स्मृता ।
तस्मात्स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥

इति वराहपुराणेऽविशेषश्रवणात् । अत्र कुजयोग उक्तः स्कान्दभविष्ययोस्तु बुधयोगः । एवं विरोधे कस्मिंश्चित्कल्पे भौमयुक्तदशम्यां कस्मिंश्चिच्च बुधयुक्तदशम्यां गङ्गाऽवतीर्णेति कल्पभेदाश्रयणेन परिहारः । तथा स्कान्दे—

ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता ।
तस्यां दानं प्रकुर्वीत स्नानं चैव विशेषतः ॥
यां कांचित्सरितं प्राप्य दद्याद्दर्भतिलोदकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैः ॥ इति ।

ब्रह्मपुराणेऽपि—

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥

तथा—ज्येष्ठशुक्लदशम्यां च भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥

तस्मादन्यत्रापि पूजादि कार्यम् । अत्रोपवासः काशीखण्डोक्तो दशम्यां कार्यः । जागरणमपि तस्यामेव । कश्चित्तु नवम्यां जागरणमित्याह । तदु(दयु)क्तम् । पूजोपवासयोर्जागरस्य च भिन्नकालताप्रसङ्गात् । उपवासोऽपि नवम्यामेवास्त्विति चेत् । न । एवं कृत्वा विधानेनेत्यनन्तरम् 'उपवासी वक्ष्यमाणैर्दशपापैः प्रमुच्यते' इति पूजान्तरोपदिष्टोपवासविरोधात् । 'इति मन्त्रेण यो मर्त्यो दिने तस्मिन्दिवानिशम् । जपेत्पञ्चसहस्राणि' इत्युक्तजपस्याहोरात्रविहितस्य विशेषवचनाभावे भोजनानन्तरानुष्ठानस्यायुक्तत्वाच्च । जागरणे तु ज्येष्ठे मासीत्युक्त्वा निशायां जागरं कुर्यादिति विधानात्प्रक्रमविरोधोऽपि। तस्माद्दशम्यामेवोपवासजागरादीत्यलं बहुना । इयं च दशमी यत्रैव योगबाहुल्यं सैव कार्या योगाधिक्ये फलाधिक्यात् । यदा तु ज्येष्ठे कदाचिन्मलमासस्तदा मलमास एव दशहरोत्सवो न तु शुद्धे । तदुक्तमृष्यशृङ्गेण—

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्मणि चोत्सर्गे ह्येतदिष्टं वृषादितः ॥ इति ।

इति दशहराकृत्यम् । अस्यामेव दशम्यां गङ्गेशः पूज्यः । तदुक्तम्—

तिथौ दशहरायां च यो गङ्गेशं समर्चयेत् ।
तस्य जन्मसहस्रस्य पापं संक्षीयते क्षणात् ॥

अथैकादशी । सर्वासु कृष्णैकादशीषु चैत्रादिमासत्रयगासु वा निवासेशविश्वकर्मेशचण्डीशाः पूज्या इति वक्ष्यते । तथा सर्वैकादशीषु मुक्तिमण्डपगो विष्णुः पूज्यः । विशेषस्तु शयनीबोधिन्योः । तदुक्तम्—

यः प्रत्येकादशीं प्राप्य शयनीं बोधिनीं तथा ।
कुर्याज्जागरणं रात्रौ मम मूर्तिसमीपतः ॥
प्रातः समर्च्य मां भक्त्या पूजयित्वा द्विजानपि ।
दत्त्वा गाः काञ्चनं भूमिं न भूयो भूमिभाग्भवेत् ॥
कृत्वा तत्र व्रतोत्सर्गं वित्तशाठ्यविवर्जितः ॥
सम्यग्व्रतफलं धीमान्प्राप्नोत्येव ममाऽऽज्ञया ।

व्रतोत्सर्गमेकादशीव्रतोद्यापनम् । कार्तिकशुक्लैकादशीतः पूर्णिमावधि पञ्चनदे स्नानादि कार्यम् । तदुक्तम्—

एकादशीं समासाद्य प्रबोधकरणीं मम।
बिन्दुतीर्थकृतस्नानो रात्रौ जागरणान्वितः॥
दीपान्प्रबोध्य बहुशो मामलंकृत्य शक्तितः।
तौर्यत्रिकं विनोदेन पुराणश्रवणादिभिः॥
महामहोत्सवं कृत्वा यावत्पूर्णा तिथिर्भवेत्।
तत्रान्नदानं बहुशः कृत्वा मत्प्रीतये नरः॥
महापातकयुक्तोऽपि न विशेत्प्रमदोदरम्।

मार्गशुक्लैकादशी(श्यां) कालभैरवसमीपस्थः कालमाधवः पूज्यः। तदुक्तं तत्प्रस्तावे—

मार्गशीर्षस्य शुक्लायामेकादश्यामुपोषितः।
तत्र जागरणं कृत्वा यमं नाऽऽलोकयेत्क्वचित्॥

अथ द्वादशी। सर्वासु कृष्णद्वादशीषु चैत्रादिमासत्रयगासु वा शुक्लेशमणिकर्णिकेशनन्दिकेशानां यात्रा। तथा सर्वद्वादशीषु गङ्गाकेशवसंनिधिस्था काशीमूर्तिः पूज्या। तदुक्तं ब्रह्मवैवर्ते—

द्वादश्यां प्रातरेवाद्यां काशीं यः पूजयेत्सुधीः।
तस्य पापे न रमते बुद्धिर्धर्मे प्रवर्तते॥

ज्ञानवापीं प्रक्रम्य काशीखण्डे—

एकादश्यामुपोष्याथ प्राश्नाति चुलकत्रयम्।
हृदये तस्य जायन्ते त्रीणि लिङ्गान्यसंशयम्॥

अत्रोपोष्याथेतिपदद्वयाद्द्वादश्यामिति गम्यते।

तथा—क्षोणीं प्रदक्षिणीकृत्य यत्फलं सम्यगाप्यते।
प्रदोषे तत्फलं काश्यां सप्तकृत्वस्त्रिलोचने॥

अत्र प्रदोष इत्यविशेषोक्तावपि किंचिद्द्वादशीयुक्तत्रयोदशीप्रदोषे शनियुक्त एव तत्र यात्रेति शिष्टाचारः।

लैङ्गे—अतः परं तु संवेद्यं गङ्गावरणसंगमम्।
श्रवणद्वादशीयोगे बुधवारो यदा भवेत्॥
तदा तस्मिन्नरः स्नात्वा संनिहत्याः फलं लभेत्।
श्राद्धं कुर्यात्तु यस्तत्र तस्मिंस्तीर्थे यशस्विनि॥
तारयित्वा पितॄन्सर्वान्विष्णुलोकं स गच्छति।

अयं योगो भाद्रशुक्लद्वादश्यां प्रायो भवतीति तदैव शिष्टास्तत्र यात्रां कुर्वन्ति। बुधाभावेऽपीयं यात्रा कार्या तत्सत्त्वे त्वधिकं फलम्। अत एव भविष्योत्तरे तद्योगो नोक्तः—

द्वादशी श्रवणोपेता यदा भवति भारत।
संगमे सरितां स्नात्वा जाह्नवीस्नानजं फलम्॥
सोपवासः समाप्नोति नात्र कार्या विचारणा। इति।

अथ त्रयोदशी। कृष्णत्रयोदशीयात्रे चैत्रादित्रयगे व्याघ्रेशाविमुक्तेशमहेश्वराणां यात्रेति वक्ष्यते। तथा शनिवासरयुक्ते त्रयोदशीप्रदोषे कामेशयात्रा। तदुक्तं काशीखण्डे दुर्वाससं प्रति शिवेन—

यः प्रदोषे त्रयोदश्यां शनिवासरसंयुजि।
संस्नास्यति नरो धीमान्कामकुण्डे त्वदास्पदे॥
त्वत्स्थापितं च कामेशं लिङ्गं द्रक्ष्यति मानवः।
स वै कामकृताद्दोषाद्यामीं नाऽऽप्स्यति यातनाम्॥

तथा चैत्रशुक्लत्रयोदश्यां तद्यात्रया सौन्दर्यम्। तदुक्तम्—

चैत्रमासे सिते पक्षे त्रयोदश्यां तु मानवाः।
स्नानं येऽत्र प्रकुर्वन्ति ते कामसदृशा नराः॥

तथा तदेव प्रकृत्य—

चैत्रशुक्लत्रयोदश्यां तत्र यात्रा च कामदा। इति।

अथ चतुर्दशी। तत्र सर्वकृष्णचतुर्दशीषु चैत्रादिमासत्रयकृष्णचतुर्दशीषु वा जम्बुकेशविश्वेश्वरज्योतीरूपेशानां यात्रेति वक्ष्यते। तथा सर्वासु चतुर्दशीषु कृत्तिवास उपवासपूर्वकं जागरणं कार्यम्। तदुक्तम्—

वसामि कृत्तिवासेऽहं सदा प्रतिचतुर्दशि।
अत्र जागरणं कृत्वा चतुर्दश्यां न गर्भभाक्॥

तथाऽत्रैव वीरेशेऽप्युपवासपूर्वकं जागरणं कार्यम्। तदुक्तम्—

विधायैकं जागरणं नरो वीरेशमर्चयेत्।
मृतायां नैव गृह्णाति शरीरं पाञ्चभौतिकम्॥

ईशानेश्वरस्याप्येवमेव पूजा चतुर्दश्यां कार्या। तदुक्तम्—

कृत्वा जागरणं रात्रावीशानेश्वरसंनिधौ।
उपोष्य भूतां यां कांचिन्न नरो गर्भभाग्भवेत्॥

प्रतिचतुर्दशि पापक्षयार्थमन्तर्गृहयात्राऽपि कार्या। तदुक्तं पद्मपुराणे—

प्रामादिकावलोपाय प्रतिभूतं विमोर्गृहम्।
कुर्यात्प्रदक्षिणं नित्यं तत्कलमपजिहीर्षया॥

यदा तु प्रतिपदादिषु त्रिचतुर्दशलिङ्गानां प्रतिमासं यात्रा न कृता तदा प्रतिचतुर्दशि सर्वाः कार्याः। तदुक्तं तत्रैव—

त्रिचतुर्दशलिङ्गानां भूते पूजापरो भवेत्।
चतुर्दशानामपि च भूते भूतेऽर्चको भवेत्॥

तथा प्रतिपदादिपक्षमभिधायाऽऽह—

अथ वा प्रतिभूतं च क्षेत्रसिद्धिमभीप्सुभिः॥ इति।

तथा सर्वचतुर्दशीषु कालभैरवदुर्गेशानेशपिङ्गलास्वप्नेश्वरीत्रिलोचन-मत्स्योदरीज्ञानवापीनां यात्रा तत्तद्विधिना कार्या। अत्र वचनान्यष्टमी-प्रकरण उक्तानि। सर्वासु कृष्णचतुर्दशीषु रत्नेश्वर उपोष्य जागरणं कार्यम्। तदुक्तम्—

असितायां चतुर्दश्यामुपोष्य निशि जागृयात्।
रत्नेशसंनिधौ देवि मम सांनिध्यमाप्नुयात्॥

तथा कृष्णपक्षचतुर्दशीषु दुर्गासमीपस्थयोगिनीनां काशीखण्डोक्त-विधिना पूजादि कार्यम्। तदुक्तं ताः प्रकृत्य—

कृष्णपक्षस्य भूतायामुपवासी नरोत्तमः।
तत्र जागरणं कृत्वा महतीं सिद्धिमाप्नुयात्॥
प्रणवादिचतुर्थ्यन्तैर्नामभिः शक्तिमान्नरः।
प्रत्येकं हवनं कृत्वा शतमष्टोत्तरं निशि॥
ससर्पिषा गुग्गुलुना लघुकोलिप्रमाणतः।
यां यां सिद्धिमभीप्सेत तां तां प्राप्नोति मानवः॥

नामभिश्चतुःषष्टिसंख्याकैर्योगिन्युद्देशे कथितैः। लघुकोलिः सूक्ष्मब-दरीफलम्। यदा तु भौमवारयुक्ता या काचिच्चतुर्दशी स्यात्तस्यां यमे-श्वरयात्रा। तदुक्तम्—

यमतीर्थे नरः स्नात्वा भूतायां भौमवासरे।
यमेश्वरं विलोक्याऽऽशु सर्वपापैः प्रमुच्यते॥

यदि तु भौमचतुर्दश्यामेव भरणीयोगोऽधिकस्तदा यमतीर्थे तर्पण-पिण्डदानश्राद्धादि विशिष्टफलदम्। तदुक्तम्—

यमतीर्थे चतुर्दश्यां भरण्यां भौमवासरे।
तर्पणं पिण्डदानं च कृत्वा पितॄनृणी भवेत्॥
अभिलष्यन्ति सततं पितरो नरकौकसः।
भौमे भरण्यां भूतायां यदि योगोऽयमुत्तमः॥
काश्यां कश्चिद्यमे तीर्थे कृत्वा स्नानं महामतिः।
अपि यस्तर्पणं कुर्यात्सलिलं नो विमुक्तये॥
किं गयागमनैः पुंसां किं श्राद्धैर्भूरिदक्षिणैः।
यदि काश्यां यमे तीर्थे योगेऽस्मिञ्श्राद्धमाप्यते॥
श्राद्धं कृत्वा यमे तीर्थे पूजयित्वा यमेश्वरम्।
यमादित्यं नमस्कृत्य पितॄणामनृणो भवेत्॥

भौमचतुर्दश्यां कलशेश्वरेऽपि यात्रा कार्या। तदुक्तं कलशेशं प्रकृत्य—

तत्र भौमचतुर्दश्यां यस्तु यात्रां करिष्यति।
अपि पातकयुक्तः स यमयात्रां न यास्यति॥

यदा कस्यांचिच्चतुर्दश्यामार्द्रानक्षत्रयोगस्तदा रुद्रकुण्डे स्नानं महाफलम्। तदुक्तं लिङ्गपुराणे रुद्रकुण्डं प्रकृत्य—

चतुर्दश्यां यदा योग आर्द्रार्क्षेण संयुतः।
तदा पुण्यतमे काले तास्मिन्स्नाने महाफलम्॥

काशीखण्डे तदेव प्रकृत्य—

चतुर्दशी यदाऽपर्णे रुद्रनक्षत्रसंयुता।
तदा पुण्यतमः कालस्तस्मिन्कुण्डे महाफलः॥

चैत्रकृष्णचतुर्दश्यामुपोष्यामायां केदारकुण्डे स्नात्वा तदुदकस्य गण्डूषत्रयपानाद्धृदये लिङ्गोत्पत्तिर्भवति तदुक्तं केदारं प्रकृत्य—

चैत्रकृष्णचतुर्दश्यामुपवासं विधाय च।
त्रिगण्डूषीं पिब प्रातर्हृल्लिङ्गमधितिष्ठति॥
केदारोदकपानेन यथा तत्र फलं लभेत्।
तथाऽत्र जायते पुंसां स्त्रीणां चापि न संशयः॥

चैत्रशुक्लचतुर्दश्यामुपोष्य पशुपतीश्वरे जागरणं पूजादि कार्यम् । तदुक्तं पशुपतीश्वरमेव प्रकृत्य—

तत्र चैत्रचतुर्दश्यां शुक्लायां शुचिमानसैः ।
कार्या यात्रा प्रयत्नेन रात्रौ जागरणं तथा ॥
पूजयित्वा पशुपतिमुपोषणपरायणः ॥
पशुपाशैर्न बध्यन्ते दर्शे विहितपारणाः ।

अत्र पद्यद्वयैकवाक्यतामानेऽपि शुक्लपक्षे दर्शे पारणासंभवात्प्रतिमासकृष्णचतुर्दशीविषयमुत्तरपद्यं व्याख्येयम् । वैशाखशुक्लचतुर्दश्यामोंकारेशयात्रा । तदुक्तं पुराकल्पार्थवादमुखेनोंकारं प्रकृत्य—

राधशुक्लचतुर्दश्यामद्यापि क्षेत्रवासिनः ।
तत्र यात्रां प्रकुर्वन्ति महोत्सवपुरःसराः ॥
तत्र जागरणं कृत्वा चतुर्दश्यामुपोषिताः ।
प्राप्नुवन्ति परं ज्ञानं यत्र कुत्रापि ते मृताः ॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सर्वतः ।
तानि वैशाखभूतायामायान्त्योंकृतिदर्शने ॥ इति ।

राधो वैशाखः ।

ज्येष्ठशुक्लचतुर्दश्यां संपूज्यो ज्येष्ठतासये ।

अस्यामेव सोमवारानुराधायोगे जैगीषव्यगुहायात्रा । तदुक्तं तामेव प्रकृत्य—

ज्येष्ठशुक्लचतुर्दश्यां सोमवारानुराधयोः ।
तत्पर्वणि महायात्रा कर्तव्या तत्र मानवैः ॥

श्रावणशुक्लचतुर्दश्यां त्रिलोचनसमीपस्थमहादेवे पवित्रारोपणं महाफलम् । तदुक्तम्—

पवित्रपर्वणि सदा श्रावणे मासि यत्नतः ।
लिङ्गे पवित्रमारोप्य महादेवे न गर्भभाक् ॥

कार्तिके दीपावलिचतुर्दश्यां मानससरोवरे यात्रेति शिष्टाचारः । कार्तिकशुक्लचतुर्दशी विश्वेश्वरप्रतिष्ठादिनमतस्तस्यां विश्वेश्वरपूजादि विशेषतः कार्यम् । तदुक्तं सनत्कुमारसंहितायाम्—

कस्मिन्वर्षे कदा मासे तिथौ कस्यां मुहूर्तके ।
विश्वेश्वरो महादेव्या विश्वेश्वरमपूजयत् ।
संक्षेपं ज्योतिषरतस्य प्रतिष्ठाख्यं कदाऽकरोत् ।

देव्येति सहार्थे तृतीया । नन्दिकेश्वर उवाच—

वर्षे वै हेमलम्बाख्ये मासे श्रीमति कार्तिके ।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ॥
महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ।
निवासस्थानतोऽभ्येत्य सार्धं विश्वगणेश्वरैः ॥
स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् ।
संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाऽकरोत् ॥
स्वयमेव स्वमात्मानं चरन्पाशुपतं व्रतम् । इत्यादि ।

मणिकर्णिके स्नात्वेत्यन्वयः ।

ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम् ।
समस्तसारमेकस्थं कृत्वेवाद्भुतदर्शनम् ॥
दण्डपाणेर्महाधाम्नि वनेऽस्मिन्कृतपारणः ।
श्रीमद्भवानीसदनं संप्रविश्येदनुत्तमम् ॥ इत्यादि ।

काशीखण्डे—

कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् ।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः ॥

मार्गशुक्लचतुर्दश्यां पिशाचमोचनयात्रा कार्या । तदुक्तं तदेव प्रकृत्य—

अद्य शुक्लचतुर्दश्यां मार्गे मासि तपोनिधे ।
अत्र स्नानादिकं कार्यं पैशाच्यपरिमोचनम् ॥

तथा—मार्गशुक्लचतुर्दश्यां कपर्दीश्वरसंनिधौ ।
स्नात्वाऽन्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः ॥
इमां सांवत्सरीं यात्रां ये करिष्यन्ति मानवाः ।
तीर्थप्रतिग्रहात्पापान्निस्तरिष्यन्ति ते नराः ॥

माघकृष्णचतुर्दश्यां शिवरात्र्याख्यायां प्रीतिकेशे जागरणं गणतासंपादकम्—

एकं जागरणं कृत्वा प्रीतिकेश उपोषितः ।
गणत्वपदवी तस्य निश्चिता मम पर्वणि ॥

प्रीतिकेशो नकुलीशसमीपे । मम पर्वणि शिवरात्रौ । अस्यामेवाविमुक्तेश्वरे पूजाजागरणादि महाफलदम् । तदुक्तम्—

सन्ति लिङ्गान्यनेकानि पुण्येष्वायतनेषु च।
आयान्ति तानि लिङ्गानि माघीं प्राप्य चतुर्दशीम्॥
कृष्णायां माघभूतायामविमुक्तेशजागरात्।
सदाविगतनिद्रस्य योगिनो गतिमाप्नुयात्॥
नानायतनलिङ्गानि चतुर्वर्गशतान्यपि।
माघकृष्णचतुर्दश्यामविमुक्तमुपासते॥

तथाऽस्यामेव चतुर्दश्यामुपोष्य कृत्तिवासेश्वरे पूजाजागरणादि कार्यम्। तदुक्तम्—

माघकृष्णचतुर्दश्यामुपोष्य निशि जागृयात्।
कृत्तिवासेशमभ्यर्च्य यः स यायात्परां गतिम्॥

एषु सर्वेषु वचनेष्वमावास्यान्तमासाभिप्रायेण माघकृष्णचतुर्दशी शिवरात्रिर्गृह्यते। अस्यां चतुर्दश्यामन्तर्गृहयात्रा कार्येति शिष्टाचारः। तथा लैङ्गे शिवराञ्यादिसर्वकृष्णचतुर्दशीषु कृत्तिवासेश्वरयात्रोक्ता। तथा हि—

न सा गतिः प्राप्यते यज्ञ दानै-
स्तीर्थाभिषेकैर्न तपोभिरुग्रैः॥
अन्यैश्च कर्मै(?)र्विविधैः शुभैश्च
या कृत्तिवासे तु जितेन्द्रियैश्च॥

इति प्रकृत्य—

फाल्गुनस्य चतुर्दश्यां कृष्णपक्षे समाहितः।
पुष्पैः फलैस्तथाऽन्नैश्च भक्ष्यैरुच्चावचैस्तथा॥
क्षीरेण मधुना चैव तिलतैलेन सर्पिषा।
तर्पयन्ति परं लिङ्गमर्चयन्ति शिवं शुभम्॥
ओंकारैश्च नमस्कारैर्नृत्यगीतैस्तथैव च।
मुखवाद्यैरनेकैश्च स्तोत्रमन्त्रैस्तथैव च॥
उपोष्य रजनीमेकां भक्त्या परमया हरम्।
ते यान्ति परमं स्थानं सदाशिवमनामयम्॥

शिवराञ्युपक्रमादिदं कृष्णपक्षादिमासाभिप्रायम्।

भूतायां चैत्रमासस्य योऽर्चयेत्परमेश्वरम्।
स वित्तेशपुरं प्राप्य क्रीडते पक्षिराडिव॥

वैशाखस्य चतुर्दश्यां योऽर्चयेत्परमेश्वरम् ।
विशाखलोकमासाद्य तस्यैवानुचरो भवेत् ॥
ज्येष्ठमासचतुर्दश्यां योऽर्चयेच्छ्रद्धया हरम् ।
सोऽग्निलोकमवाप्नोति यावदाचन्द्रतारकम् ॥
चतुर्दश्यां शुचौ मासि योऽर्चयेत्तु सुरेश्वरम् ।
सूर्यस्य लोके स सुखी क्रीडते यावदीप्सितम् ॥

शुचावाषाढे ।

श्रावणस्य चतुर्दश्यां कामलिङ्गसमन्वितम् ।

कामेश्वरसहितमित्यर्थः ।

ते यान्ति वारुणं लोकं क्रीडन्ते चाप्सरैः सह ।
मासे भाद्रपदे कृष्णे अर्चयित्वा तु शंकरम् ॥
पुष्पैः फलैश्च विविधैरिन्द्रस्यैति सलोकताम् ।
पितृपक्षे चतुर्दश्यां पूजयित्वा तथेश्वरम् ॥
प्राप्नोति पितृलोकं तु क्रीडते पूजितस्तु तैः ।
प्रबोधमासे देवेशमर्चयित्वा सुरेश्वरम् ॥
स चन्द्रलोकमाप्नोति क्रीडते यावदीप्सितम् ।
बहुले मार्गशीर्षस्य अर्चयित्वा पिनाकिनम् ।
विष्णुलोकमवाप्नोति क्रीडते कालमक्षयम् ॥
अर्चयित्वा तथा पुष्ये स्थाणुं हृष्टेन चेतसा ।
प्राप्नोति नैर्ऋतं स्थानं तेनैव सह मोदते ॥
माघे समर्चयित्वा वै पुष्पमूलफलैः शुभैः ।
प्राप्नोति शिवलोकं तु त्यक्त्वा संसारसागरम् ॥
कृत्तिवासेश्वरं देवमर्चयेत्प्रयतः सदा ।
अविमुक्ते च वस्तव्यं यदीच्छेन्मामकं पदम् ॥
गायन्ति सिद्धाः किल गीतकानि
धन्याऽविमुक्तेऽतितरां वसन्ति ॥
स्वर्गापवर्गस्य पदं च लिङ्गं
ये कृत्तिवासं शरणं प्रपन्नाः ॥

अथ पौर्णमासी । प्रतिमासं पौर्णमास्यां चन्द्रेश्वरपूजाजपादिकरणमनन्तफलदम् । तदुक्तं काशीखण्डे सोमं प्रति शिवेन—

स्थापितं यत्त्विदं लिङ्गं मम चन्द्रेश्वराभिधम् ।
ततोऽत्र लिङ्गे त्वन्नाम्नि सोम सोमार्धरूपधृत् ॥
प्रतिमासं पञ्चदश्यां शुक्लायां सर्वगोऽप्यहम् ।
अहोरात्रं वसिष्यामि त्रैलोक्यैश्वर्यसंयुतः ॥
ततोऽत्र पूर्णिमायां तु कृता स्वल्पाऽपि सत्क्रिया ।
जपहोमार्चनध्यानदानब्राह्मणपूजनम् ॥
जीर्णोद्धारादिकरणं नृत्यवाद्यादिकारणम् ।
ध्वजारोपणकर्मादि तपस्विप्रतितर्पणम् ॥
चन्द्रेश्वरे कृतं सर्वं तदानन्त्याय कल्पते ।

तथा भाद्रपदायुक्तायां भद्रह्रदतीर्थे यात्रा कार्या । तदुक्तं तमेव प्रकृत्य—

पूर्वाभाद्रपदायुक्ता पौर्णमासी यदा भवेत् ।
तदा पुण्यतमः कालो वाजिमेधफलप्रदः ॥

भद्रह्रदः कपिलधारातीर्थमेवेति केचित् । सोमवारयुक्तायां यस्यां कस्यांचित्पौर्णमास्यां चन्द्रकूपे स्नानश्राद्धादिपूर्वकं चन्द्रेशयात्रेति शिष्टाः । चित्रायुक्तायां चैत्रपौर्णमास्यामप्यत्र यात्रा कार्या । तदुक्तम्—

अत्र यात्रा महाचैत्र्यां कार्या क्षेत्रनिवासिभिः ।
तारकज्ञानलाभाय क्षेत्रविघ्ननिवर्तिनी ॥

चैत्रपौर्णमास्यां कृत्तिवासेश्वरे महापूजाद्युत्सवः कार्यः । तदुक्तम्—

शुक्लायां पञ्चदश्यां यश्चैत्र्यां कर्ता महोत्सवम् ।
कृत्तिवासेश्वरे लिङ्गे न स गर्भं प्रवेक्ष्यति ॥

आषाढ्यां पौर्णमास्यामाषाढीशयात्रा पापापहा । तदुक्तम्—

उदीच्यां मारभूतेशादाषाढीशं समर्चयन् ।
आषाढ्यां पञ्चदश्यां वै न पापैः परितप्यते ॥
शुचिशुक्लचतुर्दश्यां पञ्चदश्यामथापि वा ।
कृत्वा सांवत्सरीं यात्रामनेना जायते नरः ॥

अनेना निष्पापः । भाद्रपदपौर्णमास्यां कुलस्तम्भयात्रा । तदुक्तम्—

नभस्यपञ्चदश्यां च कुलस्तम्भं समर्चयेत् ।
दुःखं रुद्रपिशाचत्वं न भवेत्तस्य पूजनात् ॥

यदा तु नवम्यामिति पाठस्तदा सामान्यपौर्णमासीयात्रेयम् ।

अथामावास्या । अमावास्यामात्रे वृषभध्वजे श्राद्धं महाफलदम् । तदुक्तम्—

सूर्येन्दुसंगमे येऽत्र पितॄणां तृप्तिकामुकाः ।
ब्राह्मणान्भोजयिष्यन्ति तेषां श्राद्धमनन्तकम् ॥

अत्रेति प्रक्रमात्कपिलधारायाम् । सूर्यचन्द्रग्रहणमुक्तिस्नानं दण्डखातेऽतिफलदम् । तदुक्तम्—

ग्रहणानन्तरं स्नानं दण्डखातेऽतिपुण्यदम् ।

मुक्तिस्नानमित्यर्थः ।

तथा—सूर्योपरागे लोलार्के स्नानदानादिकाः क्रियाः ।
कुरुक्षेत्राद्दशगुणा भवन्तीह न संशयः ॥

सोमामायोगे वृषभध्वजे श्राद्धमतिशस्तम् । तदुक्तम्—

कुहूसोमसमायोगे दत्तं श्राद्धमिहाक्षयम् ।
संवर्तकाले संप्राप्ते जलराशिजलान्यपि ॥
क्षीयन्ते न क्षयेत्तच्च श्राद्धं सोमकुहूकृतम् ।
अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते ॥
तीर्थे कापिलधारेऽस्मिन्गयया पुष्करेण किम् ।

तथा—दिव्यान्तरिक्षभौमानि यानि तीर्थानि सर्वशः ।
तान्यत्र निवसिष्यन्ति दर्शे सोमदिनान्विते ॥

तथा भौमवारयुक्तायाममावास्यायां केदारकुण्डे श्राद्धमतिशस्तम् । तदुक्तम्—

भौमवारे यदा दर्शस्तदा यः श्राद्धदो नरः ।
केदारकुण्डमासाद्य गयाश्राद्धेन किं ततः ॥

बृहस्पतिवारयुक्तायाममायां धर्मकूपे स्नानश्राद्धादि महाफलमिति शिष्टाचारः । यदा त्रयोदशी शनिवारयुता तस्यामेकभक्तं कृत्वा रविवारान्वितायां चतुर्दश्यामुपोष्य सोमामायां चन्द्रकूपे स्नानसंध्याश्राद्धादि कृत्वा चन्द्रेशपूजनं ब्राह्मणभोजनं च कार्यमित्यप्युक्तम् । काशीखण्डे—

अमावास्या यदा सोम जायते सोमवासरे ।
तदोपवासः कर्तव्यो भूतायां सद्भिरादरात् ॥
कृतनित्यक्रियैः सोम त्रयोदश्यां निशामय ।
शनिप्रदोषे संपूज्य लिङ्गं चन्द्रेश्वराह्वयम् ॥

नक्तं कृत्वा त्रयोदश्यां नियमं परिगृह्य च।
उपोष्य च चतुर्दश्यां कृत्वा जागरणं निशि॥
प्रातः सोमकुहूयोगे स्नात्वा चन्द्रोदवारिभिः।
उपास्य संध्यां विधिवत्कृतसर्वोदकक्रियः॥
उपचन्द्रोदतीर्थेषु श्राद्धं विधिवदाचरेत्।
आवाहनार्घ्यरहितं पिण्डान्दद्यात्प्रयत्नतः॥
वसुरुद्रादितिसुतस्वरूपं पुरुषत्रयम्।
मातामहांस्तथोद्दिश्य तथाऽन्यानपि गोत्रजान्॥
गुरुश्वशुरबन्धूनां नामान्युच्चार्य पिण्डदः।
गयायां पिण्डदानेन यथा तुष्यन्ति पूर्वजाः॥
तथा चन्द्रोदकुण्डेऽत्र श्राद्धैस्तृप्यन्ति पूर्वजाः।
गयायां च यथा मुच्येत्सवर्णात्पितृजान्नरः॥
तथा प्रमुच्यते वर्णाच्चन्द्रोदे पिण्डदानतः।

अत्र श्राद्धात्पृथक्पिण्डदानप्रशंसा श्राद्धाशक्तौ तन्मात्रमपि कार्यमित्येवमर्थम्।

एवं श्राद्धं विधायाथ दृष्ट्वा चन्द्रेश्वरं व्रती।
संतर्प्य विप्रांश्च यतीन्कुर्याद्वै पारणं ततः॥
एवं व्रते कृते काश्यां सदर्शे सोमवासरे।
भवेदृणत्रयान्मुक्तो नात्र कार्या विचारणा॥ इति।

श्रावणामावास्यायां कपालमोचनऋणमोचनपापमोचनकुलस्तम्भवैतरणीसंज्ञकपञ्चतीर्थीयात्रा शिष्टाचारात्। अत्र कुलस्तम्भमादाय पञ्चतीर्थीपूरणम्। पितृपक्षामावास्यायां पितृपक्षे प्रत्यहं वा पितृकुण्डे यात्रोक्ता देवमानात्। मातृकुण्डं तु कल्पितमेव। सपिण्डीकरणान्तश्राद्धजन्यपितृत्वानां सर्वेषामेकमेव कुण्डम्। एवमन्या अपि यात्रास्तत्तत्तिथिषु शिष्टतो ज्ञेयाः।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे तिथियात्रा प्रकरणम्।

---

अथ वासरयात्राः। तत्र रविवासरे—

साम्बकुण्डे नरः स्नात्वा रविवारेऽरुणोदये।
साम्बादित्यं च संपूज्य व्याधिभिर्नाभिभूयते॥

न स्त्री वैधव्यमाप्नोति साम्बादित्यस्य सेवनात् ।
वन्ध्या पुत्रं प्रसूयेत श्रुतरूपसमन्वितम् ॥

साम्बकुण्डं सूर्यकुण्डमिति प्रसिद्धम् ।

तथा—माघे मासि रवेर्वारे यात्रा सांवत्सरी भवेत् ।
अशोकैस्तत्र संपूज्य कुण्डे स्नात्वा विधानतः ॥
साम्बादित्यं नरो जातु न शोकैरभिभूयते ।
संवत्सरकृतात्पापाद्बहिर्भवति तत्क्षणात् ॥

मधौ मासीति वा पाठस्तदा चैत्रे । अविशेषाद्रविवासरचतुष्टयेऽपि । तथा मङ्गलागौरीसमीपस्थं मयूखादित्यं प्रकृत्य—

त्वदर्चतां नृणां कश्चिन्न व्याधिः संभविष्यति ।
भविष्यति न दारिद्र्यं रविवारे त्वदीक्षणात् ॥

तथा—वृद्धादित्यं नमस्कृत्य वाराणस्यां रवौ नरः ।
लभेदभीप्सितां सिद्धिं न क्वचिद्दुर्गतिं लभेत् ॥
तथा—काश्यां गङ्गासिसंभेदे नामतोऽर्कविनायकः ।
दृष्टोऽर्कवासरे पुंभिः सर्वपापप्रशान्तये ॥

तथा—प्रत्यर्कवारं लोलार्कं यः पश्यति शुचिव्रतः ।
न तस्य दुःखं लोकेऽस्मिन्कदाचित्संभविष्यति ॥
तथा—रविवारे रवेर्यात्रा षष्ठ्यां वा रविसंयुजि ।
तथैव रविसप्तम्यां सर्वविघ्नोपशान्तये ॥

तथा—अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे ।
यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते ॥

श्रावणमासे रविवारचतुष्टयेऽपि सूर्यकुण्डयात्रेति शिष्टाचारः । नवरात्रान्तर्गतादित्यवारं कृमिकुण्डे यात्रेति शिष्टाचारः । तथा पुष्यमासरविचतुष्टयेऽपि वर्करकुण्डे यात्रा । तदुक्तम्—

उत्तरार्कस्य देवस्य पुष्ये मासि रवेर्दिने ।
कार्या सांवत्सरी यात्रा नरैः काशीफलेप्सुभिः ॥

इयं चानुदिते सूर्ये उत्तरार्ककुण्डे स्नात्वा कार्या । वर्करामुपक्रम्य—

अनया त्वर्ककुण्डेऽस्मिन्पुष्ये मासि रवेर्दिने ।
स्नातं त्वनुदिते सूर्ये शीतोद्क्षुब्धचित्तया ॥

इति परकृत्यर्थवादात्सर्वा अपि रविवारयात्रा अनुदिते सूर्ये इति शिष्टाः ।

अथ सोमवासरे । सामान्यतः सोमवारे ज्ञानवाप्यां स्नात्वा विश्वेश्वरमीशानेश्वरं ज्ञानेश्वरं वा पूजयेत् । तदुक्तं काशीखण्डे—

ईशानतीर्थे यः स्नात्वा विशेषात्सोमवासरे ।
संतर्प्य देवर्षिपितॄन्दत्त्वा दानं स्वशक्तितः ॥
ततः समर्च्य श्रीलिङ्गं महासंभारविस्तरैः ।
अत्रापि दत्त्वा स्वानर्थान्कृतकृत्यो भवेन्नरः ॥

श्रीलिङ्गं विश्वेश्वरमीशानं वा । ईशानतीर्थं ज्ञानवापी । तथैकभक्तपूर्वकं करुणपुष्पैः करुणेशोऽभ्यर्च्यः । तदुक्तम्—

सोमवासरमासाद्य एकभक्तव्रतं चरेत् ।
यष्टव्यः करुणापुष्पैर्व्रतिना करुणेश्वरः ॥
तेन व्रतेन संतुष्टः करुणेशः कदाचन ।
न तं क्षेत्राद्बहिः कुर्यात्तस्मात्कार्यं व्रतं त्विदम् ॥
तत्पत्रैस्तत्फलैर्वाऽपि संपूज्यः करुणेश्वरः ।
यो न जानाति तल्लिङ्गं सम्यग्ज्ञानविवर्जितः ॥
तेनार्च्यः करुणावृक्षो देवेशः प्रीयतामिति ।
यो वर्षं सोमवारस्य व्रतं कुर्यादिति द्विजः ॥
प्रसन्नः करुणेशोऽत्र तस्य दास्यति वाञ्छितम् ।

तथा श्रावणसोमवारेषु केदारकुण्डे स्नात्वा केदारे संपूजयेदिति शिष्टाचारः ।

अथ भौमवारे 'भौमे भैरवयात्रा तु कार्या पातकहारिणी' इतिवचनात्प्रतिभौमं कालभैरवः पूज्यः ।

तथा—भौमवारे सदा पूज्या देवी निगडभञ्जनी ।

कृत्वैकभक्तं भक्त्याऽत्र बन्दीमोक्षणकाम्यया ॥
अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः ।
संपूज्या सततं काश्यां दुर्गा दुर्गार्तिनाशिनी ॥

तथा श्रावणभौमचतुष्टये कामाक्ष्या यात्रेति शिष्टाः । केवलबुधवासरे यात्रा नास्ति ।

अथ बृहस्पतिवासरे। पुष्यनक्षत्रयुक्ते बृहस्पतौ बृहस्पतीश्वरयात्रा। तदुक्तम्—

बृहस्पतीश्वरं लिङ्गं रुद्रकुण्डाच्च पश्चिमे।
गुरुपुष्यसमायोगे दृष्ट्वा दिव्यां लभेद्गिरम्॥

तथा—गुरुपुष्यसमायोगे लिङ्गमेतत्समर्च्य च।
यत्करिष्यति मनुजस्तात्सिद्धिमधियास्यति।

अथ शुक्रवासरे। अत्र वर्षपर्यन्तं शुक्रेशमर्चयतः शुक्रवृद्ध्यादिफलं भवति। तदुक्तम्—

आवर्षं प्रतिशुक्रं ये नक्तव्रतपरायणाः।
त्वद्दिने शुक्रकूपे ये कृतसर्वोदकक्रियाः॥
शुक्रे समर्चयिष्यन्ति शृणु तेषां तु यत्फलम्।
अवन्ध्यशुक्रास्ते मर्त्याः पुत्रवन्तोऽभिरेतसः॥
पुंस्त्वसौभाग्यसंपन्ना भविष्यन्ति न संशयः।
व्यपेतविघ्नास्ते सर्वे जनाः स्युः सुखवासिनः॥
इति दत्त्वा वरान्देवस्तत्र लिङ्गे लयं ययौ।

अथ शनिवासरे। सर्वशनिवासरेषु शनैश्वरेश्वरयात्रया शनिबाधा निवर्तते। तदुक्तम्—

शनैश्वरेश्वरं देवं वाराणस्यां सुशोभनम्।
शनिबाधा न जायेत शनिवारे तदर्चनात्॥
विश्वेशाद्दक्षिणे भागे शुक्रेशादुत्तरेण हि।
शनैश्वरेशमभ्यर्च्य लोकेऽत्र परिमोदते॥

तथा शनौ पिप्पलादतीर्थे स्नात्वा पिप्पलेश्वरं दृष्ट्वाऽश्वत्थसेवया शनिपीडानिवृत्तिर्भवति। तदुक्तं बिन्दुतीर्थं प्रकृत्य—

पिप्पलादस्य च मुनेस्तीर्थं तद्यामदिक्स्थितम्।
स्नात्वा शनेर्दिने तत्र दृष्ट्वा वै पिप्पलेश्वरम्॥
पिप्पलं तत्र सेवित्वा अश्वत्थ इतिमन्त्रतः।
शनिपीडां न लभते दुःस्वप्नं चापि नाशयेत्॥

अश्वत्थे वो निषदनमितिमन्त्र ऋग्वेदप्रसिद्धः। इति वासरयात्रा। नक्षत्रेषु योगेषु च यात्राः पृथङ्न श्रूयन्ते। तिथ्यादियोगयुक्ता-स्तूक्त एव।

अथ प्रकीर्णकयात्राः। कर्कसंक्रान्तिदिने शङ्खोद्धारयात्रा। अगस्त्योदये दिनसप्तकमगस्तिकुण्डे यात्रा। तत्रैवागस्त्यार्घ्यदानम्। सिंहस्थे बृहस्पतौ गोदावरीकुण्डयात्रा। प्रत्यहं प्रथमदिने वेत्यादि शिष्टाचारगम्यम्। अथ त्रिकण्टकाद्या योगाः। लिङ्गपुराणे—

अविमुक्तं च स्वर्लीनं तथा मध्यमकं पदम्।
एतत्त्रिकण्टकं देवि मृत्युकालेऽमृतप्रदम्॥

मध्यमकं पदं मध्यमेश्वरः। चतुष्कमपि तत्रैव—

शैलेशं संगमेशं च स्वर्लीनं मध्यमेश्वरम्।
दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे॥

पञ्चायतनं च—

कृत्तिवासो मध्यमेश ओंकारश्च कपर्दकः।
विश्वेश्वर इति ज्ञेयं पञ्चायतनमुत्तमम्॥

काशीखण्डे पञ्चतीर्थी—

सन्त्यनेकानि पुण्यानि मयोक्तान्यल्पशः पुनः।
तत्रापि नितरां श्रेष्ठा पञ्चतीर्थी नृपाङ्गज॥
यस्यां स्नात्वा नरो भूयो गर्भवासं न संस्मरेत्।
प्रथमं चासिसंभेदं तीर्थानां प्रवरं परम्॥
ततो दशाश्वमेधाख्यं सर्वतीर्थनिषेवितम्।
ततः पादोदकं तीर्थमादिकेशवसंनिधौ॥
ततः पञ्चनदं पुण्यं स्नानमात्रादघौघहृत्।
एतेषां पञ्चतीर्थानां चतुर्णामपि सत्तम॥
पञ्चमं मणिकर्ण्याख्यं मनोवयवशुद्धिदम्।
पञ्चतीर्थ्यां नरः स्नात्वा न देहं पाञ्चभौतिकम्॥
गृह्णाति जातुचित्काश्यां पञ्चास्यो वाऽभिजायते।

यदि देहग्रहणं तदा पञ्चास्यः शिव एव भवति कर्मनिबन्धनो देहो नास्तीति भावः। लिङ्गपुराणे—

अविमुक्तं च स्वर्लीनमोंकारं चण्डमीश्वरम्।
मध्यमं कृत्तिवासं च षडङ्गमैश्वरं स्मृतम्॥
अविमुक्ते महाक्षेत्रे गुह्यमेतत्परं मम।
सो(सू)पदेशेन ज्ञातव्यं यदीच्छेत्परमं पदम्॥
एतद्रहस्यमाख्यातं न देयं यस्य कस्यचित्।

तथा—विश्वेश्वरो विशालाक्षी द्युनदी कालभैरवः ।
श्रीमान्ढुण्ढिर्दण्डपाणिः षडङ्गो योग उच्यते ॥
एनं षडङ्गं यो योगं नित्यं काश्यां निषेवते ।
संप्राप्य योगनिद्रां स दीर्घाममृतमश्नुते ॥

तथा—ओंकारः कृत्तिवासश्च केदारश्च त्रिविष्टपः ।
वीरेश्वरोऽथ विश्वेशः षडङ्गोऽयमिहापरः ॥

त्रिविष्टपस्त्रिलोचनः । तथा—

पादोदकासिसंभेदज्ञानोदमणिकर्णिकाः ।
षडङ्गोऽयं महायोगो ब्रह्मधर्मह्रदावपि ॥

पादोदकासिसंभेदौ वरणासीसंगमौ । ज्ञानोदं ज्ञानवापी । ब्रह्मह्रदो ब्रह्मेशसमीपकुण्डम् । धर्मह्रदः पञ्चनदम् ।

षडङ्गसेवनादस्माद्वाराणस्यां नरोत्तमः ।
न जातु जायते जन्तुर्जननीजठरे पुनः ॥

मुख्यो हि योगः षडङ्गो भवति । काश्यां तु मुक्तये न तदपेक्षा किंत्विम एव षडङ्गा मुक्तिदा इति भावः । अष्टायतनमपि लिङ्गपुराणे—

अतः परं प्रवक्ष्यामि अष्टायतनमुत्तमम् ।
येन क्रमेण कर्तव्यं तच्छृणुष्व वरानने ॥
अग्नीशाने च कर्तव्यं स्नानं वै दीर्घिकाजले ।
दृष्ट्वा देवं ततो गच्छेदुर्वशीश्वरमुत्तमम् ॥
तं दृष्ट्वा मनुजो देवि नकुलीशं ततो व्रजेत् ।
तं दृष्ट्वा मनुजो देवि आषाढीशं ततो व्रजेत् ॥
दृष्ट्वा चाऽऽषाढिनं देवं भारभूतिं ततो व्रजेत् ।
तं दृष्ट्वा तु ततो देवं गच्छेद्वै त्रिपुरान्तकम् ॥
तं दृष्ट्वा मनुजो देवि नकुलीशं ततो व्रजेत् ।
अष्टायतनमेतद्धि करिष्यन्ति च ये नराः ॥
ते मृता अवहिः क्षेत्रे रुद्रलोकस्य भाजनाः ।

काशीखण्डे—

अष्टायतनयात्राऽन्या कर्तव्या विघ्नशान्तये ।
दक्षेशः पार्वतीशश्च तथा पशुपतीश्वरः ॥

गङ्गेशो नर्मदेशश्च गभस्तीशः सतीश्वरः ।
अष्टमस्तारकेशश्च प्रत्यष्टमि विशेषतः ॥
दृश्यान्येतानि लिङ्गानि महापापोपशान्तये ।

एकादशायतनमपि काशीखण्डे—

अन्या यात्रा प्रकर्तव्यैकादशायतनोद्भवा ।
आग्नीध्रकुण्डे सुस्नातः पश्येदाग्नीध्रमीश्वरम् ॥
उर्वशीशं ततो गच्छेत्ततस्तु नकुलीश्वरम् ।
आषाढीशं ततो दृष्ट्वा भारभूतेश्वरं ततः ॥
लाङ्गलीशमथाऽऽलोक्य ततस्तु त्रिपुरान्तकम् ।
ततो मनःप्रकामेशं प्रीतिकेशमथो व्रजेत् ॥
मदालसेश्वरं तस्मात्तिलपर्णेश्वरं ततः ।
यात्रैकादशलिङ्गानामेषा कार्या प्रयत्नतः ॥
इमां यात्रां प्रकुर्वाणो रुद्रत्वं प्राप्नुयान्नरः ।

चतुर्दशायतनमपि काशीखण्डे—

शैलेशः संगमेशश्च स्वर्लीनो मध्यमेश्वरः ।
हिरण्यगर्भ ईशानो गोप्रेक्षो वृषभध्वजः ॥
उपशान्तशिवो ज्येष्ठो निवासेश्वर एव च ।
शुक्रेशो व्याघ्रलिङ्गं च जम्बुकेशं चतुर्दशम् ॥
मुने चतुर्दशैतानि महान्त्यायतनानि वै ।
एतेषामपि सेवातो नरो मोक्षमवाप्नुयात् ॥
चैत्रकृष्णप्रतिपदं समारभ्य प्रयत्नतः ।
आचतुर्दशि पूज्यानि लिङ्गान्येतानि सत्तमैः ॥
एतेषां वार्षिकी यात्रा सुमहोत्सवपूर्वकम् ।
कार्या मुमुक्षुभिः सम्यक्क्षेत्रसंसिद्धिदायिनी ॥
मुने चतुर्दशैतानि महालिङ्गानि यत्नतः ।
दृष्ट्वा न जायते जन्तुः संसारे दुःखसागरे ॥
एकैकस्यास्य लिङ्गस्य महिमाऽऽद्यन्तवर्जितः ।

इत्यादि त्रिसप्ततितमेऽध्याये । लैङ्गेऽप्येतानि तत्तत्तीर्थसहितान्युक्तानि—

शैलेशं प्रथमं कुर्यात्स्नात्वा वै वरणां नदीम् ।
स्नानं तु संगमे कृत्वा दृष्ट्वा वै संगमेश्वरम् ॥
स्वर्लीने तु कृतस्नानो दृष्ट्वा स्वर्लीनमीश्वरम् ।
मन्दाकिन्यां नरः स्नात्वा दृष्ट्वा वै मध्यमेश्वरम् ॥
हिरण्यगर्भे स्नातश्च दृष्ट्वा चैव तदीश्वरम् ।
मणिकर्ण्यां नरः स्नात्वा दृष्ट्वा चैशानमीश्वरम् ।
तस्मिन्कूप उपस्पृश्य दृष्ट्वा गोप्रेक्षमीश्वरम् ॥
कपिलाया ह्रदे स्नातो दृष्ट्वा वै वृषभध्वजम् ।
उपशान्तस्य देवस्य दक्षिणे कूप उत्तमः ॥
तस्मिन्कूप उपस्पृश्य दृष्ट्वोपशान्तमीश्वरम् ।
पञ्चचूडाह्रदे स्नातो ज्येष्ठस्थानं ततोऽर्चयेत् ॥
चतुःसमुद्रकूपे तु स्नात्वाऽर्चेत निवासकम् ।
शुक्रकूप उपस्पृश्य अर्चयेच्छुक्रमीश्वरम् ॥
दण्डखाते नरः स्नात्वा व्याघ्रेशं च ततोऽर्चयेत् ।
जम्बुकेश्वरतीर्थे तु स्नात्वा जम्बुकमीश्वरम् ॥
दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे ।
प्रतिपत्प्रभृति देवेशि यावत्कृष्णचतुर्दशि ॥
एतत्क्रमेण कर्तव्यं महदायतनं शुभम् ।

काशीखण्डेऽपि शततमेऽध्याये—

अपराऽपि शुभा यात्रा योगक्षेमकरी सदा ।
सर्वविघ्नोपहन्त्री च कर्तव्या क्षेत्रवासिभिः ॥
शैलेशं प्रथमं वीक्ष्य वरणास्नानपूर्वकम् ।

इत्यादि । किंचित्पाठभेदेन लिङ्गवदेव चतुर्दशायतनान्तरं काशीखण्डे-

ओंकारं प्रथमं लिङ्गं द्वितीयं च त्रिलोचनम् ।
तृतीयं च महादेवः कृत्तिवासाश्चतुर्थकम् ॥
रत्नेशः पञ्चमं लिङ्गं षष्ठं चन्द्रेश्वराभिधम् ।
केदारः सप्तमं लिङ्गं धर्मेशश्चाष्टमं प्रिये ॥
वीरेश्वरं च नवमं कामेशं दशमं विदुः ।
विश्वकर्मेश्वरं लिङ्गं शुभमेकादशं परम् ॥
द्वादशं मणिकर्णीशमविमुक्तं त्रयोदशम् ।
चतुर्दशं महालिङ्गं मम विश्वेश्वराभिधम् ॥

प्रिये चतुर्दशैतानि श्रेयोहेतूनि सुन्दरि ।
एतेषां समवायोऽयं मुक्तिक्षेत्रमिहेरितम् ॥

तथा—प्रिये चतुर्दशैतानि महालिङ्गानि देहिनाम् ।
प्रतिमासं समारभ्य तिथिं प्रतिपदं शुभाम् ॥
एतेषां लिङ्गमुख्यानां कार्या यात्रा प्रयत्नतः ।

तथा शततमेऽध्याये—

द्विःसप्तायतनानां च कार्या यात्रा प्रयत्नतः ।
कृष्णां प्रतिपदं प्राप्य भूतावधि यथाविधि ॥
अथवा प्रतिभूतं च क्षेत्रसिद्धिमभीप्सुभिः ।
तत्तत्तीर्थकृतस्नानस्तत्तल्लिङ्गकृतार्चनः ॥
मौनेन यात्रां कुर्वाणः फलं प्राप्नोति यात्रिकः ।
ओंकारं प्रथमं पश्येन्मत्स्योदर्यां कृतोदकः ॥
त्रिविष्टपं महादेवं ततो वै कृत्तिवाससम् ।
रत्नेशं चाथ चन्द्रेशं केदारं च ततो व्रजेत् ॥
धर्मेश्वरं च वीरेशं गच्छेत्कामेश्वरं ततः ।
विश्वकर्मेश्वरं चाथ मणिकर्णीश्वरं ततः ॥
अविमुक्तेश्वरं दृष्ट्वा ततो विश्वेशमर्चयेत् ।
एषा यात्रा प्रयत्नेन कर्तव्या क्षेत्रवासिभिः ॥
यस्तु क्षेत्र उषित्वाऽपि नैनां यात्रां समाचरेत् ।
विघ्नास्तस्योपतिष्ठन्ति क्षेत्रोच्चाटनसूचकाः ॥

अन्यान्यपि चतुर्दशाऽऽयतनानि तत्रैव—

अमृतेशस्तारकेशो ज्ञानेशः करुणेश्वरः ।
मोक्षद्वारेश्वरश्चैव स्वर्गद्वारेश्वरस्तथा ॥
ब्रह्मेशो लाङ्गलीशश्च वृद्धकालेश्वरस्तथा ।
वृषेशश्चैव चण्डीशो नन्दिकेशो महेश्वरः ॥
ज्योतीरूपेश्वरं लिङ्गं ख्यातमत्र चतुर्दशम् ।
काश्यां चतुर्दशैतानि महालिङ्गानि सुन्दरि ॥
इमानि मुक्तिहेतूनि लिङ्गान्यानन्दकानने ।
कलिकल्मषबुद्धीनां नाऽऽख्येयानि कदाचन ॥
एतान्याराधयेद्यस्तु लिङ्गानीह चतुर्दश ।
न तस्य पुनरावृत्तिः संसाराध्वनि कर्हिचित् । इत्यादि ॥

अत्र शैलेशादीनामोंकारादीनाममृतेशादीनां च यात्रा प्रतिमासं कृष्णपक्षे कार्या 'प्रतिपत्प्रभृति देवेशि यावत्कृष्णचतुर्दशि' इति लैङ्गे 'प्रतिमासं समारभ्य तिथिं प्रतिपदं शुभाम्' इति 'कृष्णां प्रतिपदं प्राप्य भूतावधि यथाविधि' इति च काशीखण्डे सामान्यत उक्तेः। चैत्रकृष्णप्रतिपदं समारभ्येति तु वचश्चैत्र एव प्रथमं यात्रारम्भो न तु मासान्तर इति ज्ञेयम्। शिष्टास्तु चैत्रे कृष्णप्रतिपदादौ शैलेशादियात्रां वैशाख ओंकारादियात्रां ज्येष्ठेऽमृतेशादियात्रामाचरन्ति। यदा प्रत्य-[ ह ]मेकैकलिङ्गयात्रायामशक्तिः प्रतिबन्धो वा तदा प्रतिमासकृष्ण-चतुर्दश्यां सर्वेषां चैत्रादिमासत्रयकृष्णचतुर्दश्यां वा शिष्टाचारात्क्रमेण चतुर्दशकत्रयस्य यात्रा। अथ वा प्रतिभूतं चेतिवचनादत्रापि कृष्णत्व-मुपक्रमादनुसंधेयम्। अन्यच्च काशीखण्डे—

संप्राप्य वासरं विष्णोर्विष्णुतीर्थेषु सर्वशः।
कार्या यात्रा प्रयत्नेन महापुण्यसमृद्धये॥

एवं नानायात्रा उक्त्वाऽन्ते तत्रैवोक्तम्—

श्रद्धापूर्वमिमा यात्राः कर्तव्याः क्षेत्रवासिभिः।
पर्वस्वपि विशेषेण कार्या यात्राश्च सर्वतः॥
न वन्ध्यं दिवसं कुर्याद्विना यात्रां क्वचित्कृती।
तथा—यस्य वन्ध्यं दिनं यातं काश्यां निवसतः सतः॥
निराशाः पितरस्तस्य तस्मिन्नेव दिनेऽभवन्।

पूर्वोक्तसकलयात्रास्वशक्तं प्रति तत्रैव—

यात्राद्वयं प्रयत्नेन कर्तव्यं प्रतिवासरम्।
एका स्वर्गतरङ्गिण्यास्ततो विश्वेशितुः परा॥
तथा—काश्यां लिङ्गान्यनेकानि काश्यां तीर्थान्यनेकशः।
तथाऽपि सेव्यो विश्वेशः स्नातव्या मणिकर्णिका॥ इति।

अत्र यात्रासु यत्राकरणे प्रत्यवायश्रवणं तासां नित्यत्वम्। यत्र च काशीवासे विघ्नाभावः फलतया श्रुतस्तदपि फलावश्यकताद्वाराऽप्यव-नवदावश्यकं क्षेत्रसंन्यासिनाम्। यत्र त्वन्यत्फलं श्रुतं तत्केवलकाम्य-तया नाऽऽवश्यकमिति। अन्यच्च यस्यां तिथ्यादियात्रायां कालविशेषो नोक्तः सा पूर्वाह्णवर्तितत्तत्तिथ्यादौ कार्या पूर्वाह्णे दैविकं कार्यमिति वचनात्। यत्र तु कालविशेषोक्तिस्तत्र तत्कालावच्छिन्नतिथ्यादावेव

'कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः' इत्यादिवचनात्। तत्रापि यदि ह्रासवृद्धिसाम्यैर्दिनद्वये कर्मकालेऽसत्त्वं सत्त्वमेकदेशसत्त्वं वा तदा 'खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्। खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी' इतिवचनान्निर्णयः। यत्र तु तिथिवार-नक्षत्रयोगादियोगतो यात्रोक्ता तत्र दिनमध्ये यदैव तद्योगस्तदैव कार्या योगप्राधान्याद्रात्रियोगस्त्वकिंचित्कर एवेत्यादिसामान्यनिर्णयो ग्रन्था-न्तरेभ्योऽवगन्तव्य इति। इति प्रकीर्णयात्राः।

इति श्रीमद्भरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे यात्राप्रकरणम्।

---

अथ काशीकृतपापकर्मविपाक उच्यते।

अनिष्टफलताज्ञाने सति ततो निवृत्तौ कृते वा तस्मिंस्तद्विनाशकरणे वक्ष्यमाणप्रायश्चित्तप्रवृत्तावुपयोगात्। अनुतापाख्यप्रायश्चित्ताधिकारि-विशेषणे यजनद्वारा प्रायश्चित्तानुष्ठानोपयिकत्वाच्च। तत्र तावत्काशी-खण्डे भववचः—

अन्यत्र यत्कृतं पापं तत्काश्यां परिणश्यति।
वाराणस्यां कृतं पापमन्तर्गेहे प्रणश्यति॥
अन्तर्गेहे कृतं पापं पैशाचनरकावहम्।
पिशाचनरकप्राप्तिर्गच्छत्येव बहिर्यदि॥
न कल्पकोटिभिः काश्यां कृतं कर्म प्रभुज्यते।
किंतु रुद्रपिशाचत्वं जायते अयुतत्रयम्॥
वाराणस्यां स्थितो यो वै पातकेषु रतः सदा।
योनिं प्राप्यापि पैशाचीं वर्षाणामयुतत्रयम्॥
पुनरत्रैव निवसज्ज्ञानं प्राप्स्यत्यनुत्तमम्।
तेन ज्ञानेन भोगान्ते मोक्षमाप्स्यत्यनुत्तमम्॥

यदि तु काश्यां पापं विधायान्यत्र मृतस्तद्विपाकोऽपि तत्रैवोक्तः—

दुष्कृतानि विधायेह बहिः पञ्चत्वमागताः।
तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः॥
यामाख्या मे गणाः सन्ति घोरा विकृतमूर्तयः।
मृषायां ते धमन्त्यादौ क्षेत्रे दुष्कृतकारिणः॥

नयन्त्यनूपप्रायां च ततः प्राचीं दुरासदाम् ।
वर्षाकाले दुराचारान्यातयन्ति महाजले ॥
जलूकाभिः सपक्षाभिर्दन्दशूकैर्जलोद्भवैः ।
दुर्निवारैश्च मशकैर्दश्यन्ते ते दिवानिशम् ॥
ततो यामैर्हिमर्तौ ते नीयन्तेऽद्रौ हिमालये ।
अशनावरणैर्हीनाः क्लिश्यन्ते ते दिवानिशम् ॥
मरुस्थले ततो ग्रीष्मे वारिवृक्षविवर्जिते ।
दिवाकरकरैस्तीव्रैस्ताप्यन्ते ते पिपासिताः ॥
क्लेशितास्ते गणैरुग्रैर्यातनाभिः समन्ततः ।
इत्थं कालमसंख्यातमानीयन्ते ततस्त्विह ॥
निवेदयन्ति ते यामाः कालराजान्तिके ततः ।
कालराजोऽपि तान्दृष्ट्वा कर्म संस्मार्य दुष्कृतम् ॥
विवस्त्रान्क्षुत्तृपार्तांश्च लग्नपृष्ठोदरत्वचः ।
अन्यै रुद्रपिशाचैश्च सह संयोजयत्यपि ॥
ततो रुद्रपिशाचास्ते भैरवानुचराः सदा ।
सहन्ते क्लममत्यर्थं क्षुत्तृण्नग्नत्वसंभवम् ॥
आहारं रुधिरोन्मिश्रं ते लभन्ते कदाचन ।
एवं ह्ययुतसंख्याकं कालं ते त्रासदुःखिताः ॥
श्मशानस्तम्भमभितो नीयन्ते कण्ठपाशिताः ।
पिपासिता अपि न तेऽम्बुस्पर्शमपि चाऽऽप्नुयुः ॥
अथ संक्षीणपापास्ते कालभैरवदर्शनात् ।
इहैव देहिनो भूत्वा मुच्यन्ते ते ममाऽऽज्ञया ॥
तस्मान्न कामयीतात्र वाङ्मनःकर्मणाऽप्यघम् ।
शुचौ पथि सदा स्थेयं महालाभमभीप्सुभिः ॥

काशीकृतपापानामत्रान्यत्र वा मृतानां यमयातना नास्ति । अत्र मृतानां कालभैरवः शास्ता । अन्यत्र मृतानां तु यामाख्यशिवगणकृतयातनान्ते त्रिंशद्वर्षसहस्रकालभैरवयातनां प्राप्य पुनर्मर्त्यतां प्राप्य काशीमरणेनान्ते मुक्तिरिति प्रघट्टकार्थः ।

यदन्यत्रार्जितं पापं तत्काशीदर्शनाद्व्रजेत् ।
काश्यां तु यत्कृतं पापं तत्पैशाचपदप्रदम् ॥

पाद्मे—

काश्यां कृतेन पापेन यातनामतिभीषणाम् ।
प्राप्य पश्चाद्विमुच्यन्ते क्षीणकल्मषशालिनः ॥

ब्रह्मवैवर्ते—

महापातकसंयुक्तास्त्रिंशदब्दसहस्रकम् ।
प्रत्येकं प्राप्नुवन्त्येव यातनां कालभैरवीम् ॥

तथा—त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।
पच्यन्ते दुःखसंघौघे कालराजेन सादरम् ॥

अत्र त्रिंशत्रयस्त्रिंशद्वर्षयातनापक्षयोर्विकल्पो बुद्ध्यबुद्धिकृतविषयता वा ।

तथा—ज्ञात्वा पापं काशिकायां यस्तु कुर्यान्नराधमः ।
न तस्य निष्कृतिर्वेदपुराणे परिपठ्यते ॥

तथा काशीवासिविहितनिषिद्धकथनावसरे पद्मपुराणीयः कर्मविपाकः 'काश्यां कृतस्य पापस्य भोगो रुद्रपिशाचता' इत्यादिना भूयोऽप्युक्तः । क्रमेलकपाशुपताख्यानतात्पर्यं च गरुडपुराणे—

वाराणस्यां स्थितो यो वै पातकेषु रतः सदा ।
योनिं प्रविश्य पैशाचीं वर्षाणामयुतत्रयम् ॥ इत्यादि ।

ब्रह्मवैवर्ते—

काशिकायां कृते पापे प्रायश्चित्तं न जायते ।
प्रायश्चित्तविहीनानां यातनाऽस्ति सुदारुणा ॥

इति त्रिस्थलीसेतौ काशीपापविपाककथनम् ।

अथ काशीकृतपातकप्रायश्चित्तम् । तत्र मृतिमुक्तिप्रकाशिकायाम्—

कुर्वञ्शुश्रूषणं नित्यं वेदान्तज्ञानिनो गुणैः ।
श्रद्धाविनयसंयुक्तः शान्तिदान्त्यादिसंयुतः ॥
यावज्ज्ञानोदयस्तावद्वेदान्तार्थं निरूपयेत् ।
नास्ति ज्ञानात्परं किंचित्पापकान्तारदाहकम् ॥
मासमात्राद्विनश्यन्ति क्षुद्रपापानि सुव्रत ।
षण्मासश्रवणात्सर्वे नश्यन्त्येवोपपातकाः ॥

महापातकसंघाश्च नित्यं वेदान्तचिन्तनात् ।
नश्यन्ति वत्सरात्पूर्वं स मुक्तः स्याद्बृहस्पते ॥
यः श्रद्धया युतो नित्यं वेदान्तज्ञानमभ्यसेत् ।
तस्य संसारविच्छित्तिः श्रवणादिति हि श्रुतिः ॥
एवमभ्यसतस्तस्य यदि विघ्नोऽभिजायते ।
सर्वलोकान्क्रमाद्भुक्त्वा भूमौ विप्रोऽभिजायते ॥
पुनश्च पूर्वभावेण विद्वांसं पर्युपासते ।
तथा—तस्मात्सर्वप्रयत्नेन स्वमुक्त्यर्थं बृहस्पते ॥
सर्वदा सर्वमुत्सृज्य वेदान्तश्रवणं कुरु ।

इति स्कान्दीयत्वेन,

त्यक्त्वा सर्वाणि कर्माणि ज्ञानाभ्यासपरो भवेत् ।
ज्ञानाभ्यासान्महापापान्मुच्यते नात्र संशयः ॥

इत्यादीनि च वासिष्ठलिङ्गोपपुराणीयत्वेन वचनानि प्रायश्चित्तप्रकरणे लिखितानि । इदं तु चिन्त्यं साधारण्येन प्रतीयमानानामेषां काशीकृतपापविषयत्वेनोपसंहारायोगात् । आग्नेयविषयचतुर्धाकरणवत्प्रकरणपठितवाक्यान्तराभावाच्च । सति वा वचनान्तरे प्रकरणपठितवाक्योपसंहृतानारभ्याधीतसाप्तदश्यमित्रविन्दादिमात्रविषयं काशीमात्रकृतपापविषयमात्मश्रवणमननतत्त्वज्ञानादि स्यान्न च स्थलकृतपातकविषयम् । किंचैवमभ्यसतोऽन्तरा विघ्नापत्तौ प्रायश्चित्तसमाप्त्यभावात्काशीकृतपापवत एव मरणे सर्वलोकोपभोगब्राह्मणादिशुभफलप्राप्तिर्भवतीति सर्व एव बलात्काशीपापावौ प्रवर्तेतेति विरोधापत्तिः । अपि च तस्य संन्यास्याद्यधिकारिविशेषपरत्वात्कथं काशीपापिसाधारण्यमिति । एतेन ब्रह्महत्यादिमहापापादिविषयकद्वादशाब्दादिप्रायश्चित्तोपन्यासोऽपि तत्रत्यः परास्तः । साधारणत्वे काशीमात्रकृतपापविषयत्वायोगात् । योगे वा पूर्वोक्तदूषणापातात् । यदपि केनचिच्छ्रीमद्विष्णुकीर्तनरूपं प्रायश्चित्तं काशीकृतपापप्रायश्चित्तमध्ये गणितं तत्केवलं ग्रन्थबाहुल्य एव कारणम् । तथा हि—अशेषपातकतृणाग्निभूतभगवन्नामकीर्तनरूपप्रायश्चित्तस्य यदि काश्यां कृतपापमात्रविषयताऽङ्गी क्रियते तदा सुनिरूपितं भगवन्नामसामर्थ्यम् । न वाऽङ्गीकृतमेवं कैश्चिन्न च तेन । स्वोदाहृतानेकपुराणविरुद्धं च । अथ यत्र क्वचित्कृतपापमात्रविषयता तर्हि स्मार्तप्रायश्चि-

त्वदिदमपि साधारणतया काशीप्रकरणे नोदाहरणमर्हति । अधिकारि-विशेषविषयत्वादपि स्वकूपितात्मश्रवणादिरूपप्रायश्चित्तवदेवात्र नोदा-हार्यम् । यत्त्वधिकारिविशेषविषयतादूषणं भगवन्नामकीर्तनप्रायश्चित्तस्य कृतं तन्मार्गेऽस्मिन्वैदिके येषां न पूजाद्यधिकारिता तत्पापविनिवृत्त्यर्थं प्रकारान्तरमुच्यत इत्युपक्रमस्तत्कथितैर्वैदिकमार्गानधिकारिविषयत्ववि-रोधीत्यलं बहुना । बह्वप्यत्र वक्तव्यं प्रकृतानुपयुक्ताभिधायितया तत्तु-ल्यतापत्तेर्नोक्तमिति । तस्मादसाधारणप्रायश्चित्तान्येवात्रोदाहार्याणि । तत्रापि स्मार्तप्रायश्चित्तेन सह विकल्पसमुच्चयादिविचारः प्रागेव काशी-विहितनिषिद्धाभिधानप्रसङ्गेन कृत इति नेह पुनः प्रस्तूयते । स्वरूप-मात्रं तूच्यते पुराणवचनोपन्यासेन । तत्र स्थूलसूक्ष्मपापप्रायश्चित्तं सार्थ-वादकं चोक्तं ब्रह्मवैवर्ते । अगस्त्य उवाच—

प्रमादाद्यदि सूक्ष्मं वा स्थूलं वा पातकं नृभिः ।
कृतं काश्यां तारकारे कथं तस्याऽऽशु निष्कृतिः ॥

स्कन्द उवाचेत्येवमाद्यनन्तरं भगवतो वचनम्—

प्रायश्चित्तविहीनानां न शान्तिः कुत्रचिद्भवेत् ।
किं पुनः काशिकामध्ये पापं कृत्वा सुखं लभेत् ॥
ब्रह्महत्यादिपापानां प्रायश्चित्तं हि काशिका ।
काशिकायां कृते पापे प्रायश्चित्तं न विद्यते ॥
प्रायश्चित्तविहीनानां यातनाऽस्ति सुदारुणा ।
ज्ञानस्वरूपं काशीयं पञ्चक्रोशीपरीमिता ॥
तस्याः प्रदक्षिणं कृत्वा सर्वपापैः प्रमुच्यते ।
मम ब्रह्ममयं लिङ्गमापातालात्समुत्थितम् ॥
शिवलोकोपरि गतमत्यतिष्ठद्दशाङ्गुलम् ।
आजन्मसंचितैः पापैर्मुच्यते तत्प्रदक्षिणात् ॥
क्षेत्रे कृतानां पापानां प्रायश्चित्तं न चेतरत् ।
प्रदक्षिणद्वयं कृत्वा दशजन्मकृतादघात् ॥
मुक्तो भवति पापात्मा सद्यो मोक्षमवाप्नुयात् ।
शुभकृद्यदि कुर्याद्धि मोहात्पापं न तस्य तत् ॥
क्षेत्रं प्रदक्षिणीकृत्य भवेत्पापो हि विज्वरः ।
प्रदक्षिणत्रयं कृत्वा पापं जन्मशतार्जितम् ॥

विलयं प्रापयति ना नात्र कार्या विचारणा ।
यावज्जीवं वसेत्काश्यां प्रत्यब्दं सुप्रदक्षिणम् ॥
कुर्यादेव निरालस्य आनन्दसदनस्य हि ।
प्रत्यब्दं ये प्रकुर्वन्ति पञ्चक्रोशं प्रदक्षिणम् ॥
जीवन्मुक्तास्तु ते ज्ञेया निष्पापाः काशिवासिनः ॥

इति ब्रह्मवैवर्तेऽष्टमोऽध्यायः । एतदनन्तरं नवमेऽध्याये—अत्रैवोदाहरन्तीममितिहासं पुरातनमित्यादिना कूष्माण्डतनयस्याऽऽख्यानं पञ्चक्रोशप्रदक्षिणप्रशंसार्थम् । य(त)स्यायमाशयः—मद्यपो वेश्यारतः सुवर्णस्तेयी दुष्टसङ्गीत्यादिपापरतोऽपि मण्डपः सकृदज्ञानात्प्रसङ्गतोऽविधिनाऽपि यात्रां कृत्वा पापेभ्यो मुक्तोऽभूत्किं पुनर्विधिना ज्ञानत आवृत्त्या यथाकालं कुर्वन्नन्य इति । ऋषय ऊचुः—

सूत सूत महाबुद्धे वेदविद्याविशारद ।
यथा प्रदक्षिणा कार्या मनुजैर्विधिपूर्वकम् ॥
स्थानं वासस्य वद नो भक्ष्यं वाऽभक्ष्यमेव च ।
पूजां सीम्नि स्थितानां च देवानां दानमेव च ॥
यथा संपूर्णतामेति यात्रा क्षेत्रस्य सत्तम ।

सूत उवाच—

एवमेव पुरा पृष्टो भगवाञ्शिवया शिवः ।
तद्ब्रवीमि मुनिश्रेष्ठाः शृण्वन्तु विधिमुत्तमम् ॥

श्रीदेव्युवाच—

भगवन्देवदेवेश प्रदक्षिणाविधिं वद ।
पञ्चक्रोशस्य येनाऽऽशु निष्पापः पुण्यवान्भवेत् ॥

महादेव उवाच—

आश्विनादिषु मासेषु त्रिषु पार्वति सर्वदा ।
प्रदक्षिणा प्रकर्तव्या क्षेत्रस्यापापकाङ्क्षिभिः ॥
माघादिचतुरो मासाः प्रोक्ता यात्राविधौ नृणाम् ।
श्रद्धोदये तु कालान्तरेऽपि कार्या ।
यथाकथंचिद्देवेशि पञ्चक्रोशप्रदक्षिणम् ।
कुर्यादेव न मासादि चिन्तयेद्धर्मकोविदः ॥
स एव शुभदः कालो यस्मिञ्श्रद्धा भवेदिति ।

इत्यन्ते वक्ष्यमाणत्वात् ।

पूर्वस्मिन्दिवसे ढुण्ढिं पूजयित्वा हविष्यभुक् ।
प्रातरुत्तरवाहिन्यां स्नात्वा विश्वेशमर्चयेत् ॥
पुनर्यात्रार्थमपि च शिवयोः पूजनं भवेत् ।
मुक्तिमण्डपिकायां च संविश्य वरवर्णिनि ॥
प्रतिज्ञां महतीं कृत्वा पूजनं तत्र तत्र ह ।
काश्यां प्रजातवाक्कायमनोजनितमुक्तये ॥
ज्ञाताज्ञातविमुक्त्यर्थं पातकेभ्यो हिताय च ।
पञ्चक्रोशात्मकं लिङ्गं ज्योतीरूपं सनातनम् ॥
भवानीशंकराभ्यां च लक्ष्मीश्रीशविराजितम् ।
ढुण्ढिराजादिगणपैः षट्पञ्चाशद्भिरावृतम् ॥
द्वादशादित्यसहितं नृसिंहैः केशवैर्युतम् ।
कृष्णरामत्रययुतं कूर्ममत्स्यादिभिस्तथा ॥
अवतारैरनेकैश्च युतं विष्णोः शिवस्य च ।
गौर्यादिशक्तिभिर्जुष्टं क्षेत्रं कुर्यात्प्रदक्षिणम् ॥
बद्ध्वाऽञ्जलिं प्रार्थयीत महादेवं महेश्वरीम् ।
पञ्चक्रोशस्य यात्रां वै करिष्ये विधिपूर्वकम् ॥
प्रीत्यर्थं तव देवेश सर्वाघौघप्रशान्तये ।
इति संकल्प्य मौनेन प्रणिपत्य पुनः पुनः ॥
ढुण्ढिराज गणेशान महाविघ्नौघनाशन ।
पञ्चक्रोशस्व यात्रार्थं देह्याज्ञां कृपया विभो ॥
विश्वेशं त्रिः परीत्याथ दण्डवत्प्रणिपत्य च ।
मोदं प्रमोदं सुमुखं दुर्मुखं गणनायकम् ॥
प्रणम्य पूजयित्वाऽऽदौ दण्डपाणिं ततोऽर्चयेत् ।
कालराजं च पुरतो विश्वेशस्य जगद्गुरोः ॥
पूजयित्वा ततो गच्छेन्मणिकर्णीं विधानतः ।
तत्र स्नात्वा महादेवं मणिकर्णीशमर्चयेत् ॥
मणिकर्णीतटे छन्नं गङ्गाकेशवमच्युत ।
ललितां च ततः पूज्य जरासंधेश्वरं विभुम् ॥
सोमनाथं ततः पूज्य अदाल्भ्येश्वरमेव च ।
शूलटङ्कं महादेवं वराहं च प्रपूजयेत् ॥

दशाश्वमेधिकं लिङ्गं बन्दीं तत्रैव पूजयेत् ॥
सर्वेश्वरं च केदारं ततो हनुमदीश्वरम् ।
संगमेशं ततः पूज्य लोलार्कं पूजयेत्ततः ॥
अर्कसंज्ञं गणाध्यक्षमसेस्तीरं पुनर्व्रजेत् ।
क्षेत्रं प्रदक्षिणीकुर्वंस्तिलमात्रं न संत्यजेत् ॥
दुर्गाकुण्डे ततः स्नात्वा यजेद्दुर्गाविनायकम् ।
दुर्गां संपूज्य विधिवद्वसेत्तत्र सुखाप्तये ॥
ब्राह्मणान्भोजयेत्तत्र मधुपायसलड्डुकैः ।
रात्रौ जागरणं तत्र पुराणश्रवणादिकम् ॥
कुर्याच्च पूजनं भक्त्या परोपकरणादि च ।

ततः प्रातः—

जय दुर्गे महादेवि जय काशिनिवासिनि ।
क्षेत्रविघ्नहरे देवि पुनर्दर्शनमस्तु ते ॥
इति दुर्गां प्रार्थयित्वा विष्वक्सेनेश्वरं ततः ।
पूजयित्वा कर्दमेशं पञ्चव्रीहितिलैर्नमेत् ॥
आदौ कर्दमतीर्थे तु स्नानं कूपावलोकनम् ।
सोमनाथं विरूपाक्षं नीलकण्ठं ततोऽर्चयेत् ॥
तत्र वासं विधायाग्नौ किंचिद्धोमं द्विजार्चनम् ।
श्राद्धादिधर्मकार्याणि कृत्वा मुच्येदृणत्रयात् ॥
कर्दमेश महादेव काशिवासिजनप्रिय ।
त्वत्पूजनान्महारुद्र पुनर्दर्शनमस्तु ते ॥
प्रातः स्नात्वा पूजयित्वा पूजयित्वा च सद्द्विजान् ।
नागनाथं च चामुण्डां मोक्षेशं करुणेश्वरम् ॥
वीरभद्रं ततो दुर्गां विकटाख्यां प्रपूजयेत् ।
उन्मत्तभैरवं नीलं कालकूटं ततोऽर्चयेत् ॥
दुर्गां च विमलां नत्वा महादेवं ततोऽर्चयेत् ।
नन्दिकेशं भृङ्गिरिटिं तत्रैव च गणप्रियम् ॥
विरूपाक्षं च यक्षेशं विमलेश्वरमेव च ।
मोक्षदं ज्ञानदं चैवामृतेशं तत्र पूजयेत् ॥
गन्धर्वसागरं तीर्त्वा भीमचण्डीं ततो व्रजेत् ।
तत्र स्नात्वा भीमचण्डीं पयसा स्नापयेत्सुधीः ॥

पञ्चोपचारैः संपूज्य ब्राह्मणान्परितोषयेत्।
तत्र वासं प्रयत्नेन कुर्याच्चण्डविनायकम्॥
रविरक्ताक्षगन्धर्वं नरकार्णवतारकम्।
शिवं प्रपूज्य यत्नेन रात्रौ पूर्ववदाचरेत्॥
प्रातरुत्थाय सुस्नातः प्रार्थयेद्भीमचण्डिकाम्।
भीमचण्डि प्रचण्डानि मम विघ्नानि नाशय॥
नमस्तेऽस्तु गमिष्यामि पुनर्दर्शनमस्तु ते।
ततो गच्छेदेकपादं गणं नत्वाऽथ तण्डुलान्॥
तिलांश्च विकिरेत्तत्र धनधान्यादि संपदे।
ततो गच्छेन्महाभीमं भैरवं भैरवीं शुभाम्॥
भूतनाथं च सोमेशं पूजयेत्सिन्धुरोधसि।
कालनाथं कपर्दीशं कामेशं च गणेश्वरम्॥
वीरभद्रं चातुमुखं(?) गणनाथं प्रपूजयेत्।
ततो गच्छेद्देहलीशं विघ्नपूगनिवारणम्॥
मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः।
पूजयेच्छ्रद्धया देवं तं देहलिविनायकम्॥
तत्पार्श्वे षोडश पुनर्विघ्ननाथान्समर्चयेत्।
उद्दण्डगणपं पूज्य उत्कलेश्वरमेव च॥
रुद्राण्यास्तु तपोभूमिं दृष्ट्वा रामेश्वरं व्रजेत्।
वरणायां ततः स्नात्वा तर्पणादि विधाय च॥
रामेश्वरं श्वेततिलैर्बिल्वपत्रादिभिर्यजेत्।
सोमनाथं च तत्रैव पूजयेदिन्द्रदिग्गतम्॥
भरतेशं लक्ष्मणेशं शत्रुघ्नेश्वरमेव च।
द्यावाभूमीश्वरं तत्र पूजयेन्नहुषेश्वरम्॥
तत्र वासं प्रकल्प्याथ पूर्ववज्जागरादिकम्।
कृत्वा स्नात्वाऽथ रामेशं प्रार्थयेत्काशिवासदम्॥
श्रीरामेश्वर रामेण पूजितस्त्वं सनातन।
आज्ञां देहि महादेव पुनर्दर्शनमस्तु ते॥
लिङ्गानि सुबहून्यादौ वरणापारगाण्यथ।
पूजयित्वा ततो गच्छेद्देवसंघनिषेवितम्॥

देवसंघेश्वरे किंचिद्दत्त्वा स्थित्वा ततो व्रजेत् ।
पाशपाणिं गणेशं च क्षेत्रमध्ये व्यवस्थितम् ॥
पूजयित्वा बहिश्चैव पृथ्वीश्वरमथो व्रजेत् ।
एकोऽश्वमेधः पृथुना कृतः क्षेत्राद्बहिः पुरा ॥
स्वर्गभूमिस्तु सा ज्ञेया मोक्षभूमिस्तु मध्यतः ।
काश्याश्चतुर्दिशं देवि योजनं स्वर्गभूमिका ॥
मृतास्तत्र हि गच्छन्ति स्वर्गं सुकृतिनां पदम् ।
ततः सुयूपं हि सरः स्पृष्ट्वा गच्छेच्छनैः शनैः ॥
महाक्षेत्रं कापिलं तु यत्र श्रीवृषभध्वजः ।
तत्र स्नात्वा विधानेन तर्पयित्वा पितॄनथ ॥
श्राद्धं विधाय सुश्रद्धः पूजयेद्वृषभध्वजम् ।
निवसेत्तं तु दिवसं श्रवणादि प्रकल्पयेत् ॥
प्रदक्षिणीकृत्य ततो गच्छेज्ज्वालानृसिंहकम् ।
एवं प्रदक्षिणीकृत्य सरः कापिलमुत्तमम् ॥
वरणां च ततस्तीर्त्वा स्नात्वा वै संगमेश्वरम् ।
आदिकेशवमभ्यर्च्य संगमेश्वरमेव च ॥
विनायकं खर्वसंज्ञं पूजयित्वा ततो व्रजेत् ।
क्रोडीकृत्य यवाञ्शुद्धान्विकिरन्विष्णुमुच्चरन् ॥
प्रह्लादेश्वरमभ्यर्च्य त्रिलोचनमतः परम् ।
बिन्दुमाधवमभ्यर्च्य ह्रदे पाञ्चनदे शुभे ॥
गभस्तीशं मङ्गलां च गौरीं दृष्ट्वा ततो व्रजेत् ।
वसिष्ठवामदेवौ च पर्वतेश्वरमेव च ॥
महेश्वरं समभ्यर्च्य ततः सिद्धिविनायकम् ।
सप्तावरणगान्दिव्यान्पूजयेद्गणनायकान् ॥
मणिकर्ण्यां ततः स्नात्वा गच्छेद्विश्वेश्वरं यमी ।
नमस्कृत्य महेशानं प्रविशेद्देवसंनिधौ ॥
पञ्चोपचारैः संपूज्य स्तुत्वा नत्वा पुनः पुनः ।
मुक्तिमण्डपमागत्य कृतार्थस्तत्र संविशेत् ॥
विष्णुं च दण्डपाणिं च ढुण्ढिं भैरवमेव च ।
आदित्यं गणपांश्चैव पूजयेत्पुनरेव च ॥
प्रदक्षिणीकृतान्देवान्स्मरेत्तत्र क्रमात्सुधीः ।

ततः प्रार्थना—

जय विश्वेश विश्वात्मन्काशीनाथ जगद्गुरो ।
त्वत्प्रसादान्महादेव कृता क्षेत्रप्रदक्षिणा ॥
अनेकजन्मपापानि कृतानि मम शंकर ।
गतानि पञ्चक्रोशात्मलिङ्गसम्यक्प्रदक्षिणा ॥
त्वद्भक्तिं काशिवासं च राहित्यं पापकर्मणां ।(?)
सत्सङ्गश्रवणाद्यैश्च कालो गच्छतु नः सदा ॥
हर शंभो महादेव सर्वज्ञ सुखदायक ।
प्रायश्चित्तं सुनिर्वृत्तं पापानां त्वत्प्रसादतः ॥
पुनः पापमतिर्माऽस्तु धर्मबुद्धिः सदाऽस्तु मे ।
इति जप्त्वा यथाशक्ति दत्त्वा दानं द्विजन्मनाम् ॥
बद्ध्वा करयुगं मन्त्री मन्त्रमेतमुदीरयेत् ।
पञ्चक्रोशस्य यात्रेयं यथाशक्ति मया कृता ॥
न्यूनं संपूर्णतां यातु त्वत्प्रसादादुमापते ।
इति प्रार्थ्य महादेवं गच्छेद्गेहं स्वकं स्वकम् ॥
न्यूनातिरिक्तदोषाणां परिहाराय दक्षिणाम् ।
संकल्प्याऽऽगत्य च गृहं ब्राह्मणान्भोजयेत्ततः ॥
तत्र आगत्य च गृहं कुटुम्बैः सह भोजनम् ।
कृत्वाऽऽत्मानं ततो ध्यायेत्कृतकृत्यो भवेत्ततः ॥

अथ वासप्रकारः—

एकरात्रं तु मध्ये यः प्रवसेच्छुचिमानसः ।
वरणायास्तटे रम्ये स याति परमां गतिम् ॥

वरणायास्तटे रामेश्वरसंनिधौ ।

द्विरात्रमध्ये वसतिं यः कुर्याद्धर्मतत्परः ।
प्रथमं चण्डिकाक्षेत्रे द्वितीयं वरणातटे ॥
दिवसं तु वसेद्धीमांस्ततो विश्वेश्वरं व्रजेत् ।
यस्तु त्रिरात्रमुषितो मध्ये भवति पार्वति ॥
दुर्गास्थले भीमचण्ड्यां रामेशे वासमृच्छति ।
वसतिं यस्तु कुरुते मध्ये दिनचतुष्टयम् ॥

प्रथमां वसतिं कुर्यात्कर्दमेश्वरसंनिधौ ।
द्वितीयां भीमचण्ड्यां च रामेशे तु तृतीयकाम् ॥
चतुर्थीं कापिले तीर्थे वसतिं परिकल्पयेत् ।
राजवृद्धकुमाराणां यथेष्टं वास इष्यते ॥
यथाकथंचिद्देवेशि पञ्चक्रोशप्रदक्षिणम् ।
कुर्यादेव न मासादि चिन्तयेद्धर्मकोविदः ॥
स एव शुभदः कालो यस्मिञ्श्रद्धोदयो भवेत् ।
श्रद्धा हि दुर्लभा लोके कलौ खलु विशेषतः ॥
श्रद्धैव तीर्थं देवश्च श्रद्धा स्वर्गापवर्गकौ ।
श्रद्धया यत्कृतं सर्वमनन्तफलदं भवेत् ॥
सत्ये श्रद्धा गुणवती नासत्ये सा फलप्रदा ।
काश्यां तिष्ठति यो नित्यं स्नाति भागीरथीजले ॥
कुर्यात्सांवत्सरीं यात्रां पञ्चक्रोशस्य सुन्दरि ।
स ब्रह्मभूतो निवसेन्ममानुग्रहतः सुखी ॥

इति श्रीब्रह्मवैवर्ते पञ्चक्रोशयात्रा नाम दशमोऽध्यायः ।

अथ पञ्चक्रोशयात्रायां नियमा ब्रह्मवैवर्ते । देव्युवाच—

क्षेत्रप्रदक्षिणे देव नियमाः के भवन्ति तान् ।
वदस्व तारिताशेष विश्वनाथ कृपालय ॥

श्रीमहादेव उवाच—

प्रतिग्रहं परान्नं च परदाराभिभाषणम् ।
परस्वग्रहणं स्नेहादसद्वार्तां च वर्जयेत् ॥

परदाराणामभिलापपूर्वकं भाषणं परदाराभिभाषणम् ।

असतां पापिनां सङ्गं न कुर्यात्प्रयतो नरः ।
असत्समागमात्सर्वं जायते निष्फलं नृणाम् ।
मम द्रोहपरैः साकं न व्रजेद्वेदनिन्दकैः ॥
परापवादं नो कुर्यात्परद्रोहं विवर्जयेत् ।
गुरुनिन्दां शास्त्रनिन्दां शिवधर्ममहात्मनाम् ॥
तीर्थलिङ्गतपोनिन्दां न कुर्यात्तु प्रदक्षिणे ।
अन्यदा तु कृतं पापं नश्येत्क्षेत्रप्रदक्षिणात् ॥
क्षेत्रप्रदक्षिणामध्ये कृतं केन प्रणश्यति ।

किंचिद्दानं प्रत्यहं ब्राह्मणेभ्यो
देयं दीनानाथपङ्गूवन्धकेषु ॥
भूमौ शय्या तैलमांसादिदुष्टं
सर्वं वर्ज्यं क्षेत्रयात्रादिनेषु ॥
स्नानद्वयं प्रकुर्वीत नित्यश्राद्धं च सुन्दरि ।
यदत्र किंचित्क्रियते कोटिकोटिगुणं भवेत् ॥

तथाऽत्राधिकारिणो ब्रह्मवैवर्ते—

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवान्त्यजातिभिः ।
काङ्क्षद्भिः परमं तत्त्वं कर्तव्यं क्षेत्रदक्षिणम् ॥

तथा—ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ मस्करी ।
क्षेत्रे वसन्बहिर्वाऽपि कुर्यादेव प्रदक्षिणम् ॥

तथा—ब्राह्मणः क्षत्रियो वाऽपि वैश्यशूद्रौ तथा स्त्रियः ।
महापातकशान्त्यर्थं कुर्युः क्षेत्रप्रदक्षिणम् ॥

तथा—यस्तु वाराणसीं प्राप्य बहिर्जिगमिषुर्भवेत् ।
प्रदक्षिणत्रयं कुर्यात्सर्वपापनिवृत्तये ॥

तथा—वाराणसीं समासाद्य प्रमादाद्यो बहिर्गतः ।
स दैवात्पुनरागत्य दक्षिणेन प्रशुध्यति ॥

तथा पञ्चक्रोशीमाहात्म्यान्तरम्—

ब्रह्महत्यादिपापानां प्रायश्चित्तं न चापरम् ।
बहिष्कृतानां पापानां मध्ये वाऽपि सुरेश्वरि ॥
प्रायश्चित्तान्तरं पुंसो न दृष्टं न मया श्रुतम् ।
वसन्ति देवा बहवः स्वर्गभूमौ बहिः सदा ॥
मदाज्ञां पालयन्त्येव वासार्थं दैन्यमागताः ।
बहिस्स्थिताः प्रकुर्वन्ति दक्षिणं क्षेत्रलब्धये ॥
ममानुग्रहमासाद्य प्रविशन्ति हि काशिकाम् ।
मदनुग्रहकामैश्च पञ्चक्रोशात्मकं प्रिये ॥
लिङ्गं प्रदक्षिणीकृत्य द्रष्टव्योऽहं कृपानिधिः ।
अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ॥

पुण्यक्षेत्रे कृतं पापं गङ्गातीरे विनश्यति ।
गङ्गातीरे कृतं पापं वाराणस्यां विनश्यति ॥
वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति ।
अन्तर्गेहे कृतं पापं वज्रलेपो भविष्यति ॥
वज्रलेपच्छिदं ह्येतत्पञ्चक्रोशप्रदक्षिणम् ।
तस्मात्सर्वप्रयत्नेन कुर्यात्क्षेत्रप्रदक्षिणम् ॥

अत्रार्थे सदस्यस्तुत्या प्रादुर्भूतानां विष्णुढुण्ढिदण्डपाणिकालभैरवरवीणां वचांस्यपि नवमाध्यायगतान्युदाहार्याणि ।

तथा—सीमाविनायकेभ्यश्च बहिः काश्याः प्रमाणतः ।
तावत्क्षेत्रं विजानीयाद्यावद्धनुःशतत्रये ॥
क्षेत्रादन्तर्वसेन्नित्यं बहिः क्षेत्रप्रदक्षिणम् ।

नारदीये—काशीप्रदक्षिणा येन कृता त्रैलोक्यपावनी ।
सप्तद्वीपा साब्धिशैला कृता तेन द्विजोत्तमाः ॥

लिङ्गपुराणेऽपि पञ्चक्रोशयात्रामाहात्म्यं विधिश्चैतादृगेव कियानेव तु श्लोकपाठभेद इति न लिख्यते । मध्ये दिनचतुष्टयवासपक्षे तु पाशपाणौ चतुर्थदिने वास उक्तो न तु वृषभध्वज इत्येतावान्विशेषः । यद्यपि पुराणपर्यालोचनया सामान्यतो ब्रह्महत्यादिपातकक्षयार्थता पञ्चक्रोशयात्रायाः प्रतीयते तथाऽपि प्रतियोजनं प्राजापत्यकल्पनया पञ्चप्राजापत्यप्रत्याम्नायतामेकस्यां यात्रायां कल्पयन्ति शिष्टाः । एवमन्तर्गृहयात्रायां योजनन्यूनत्वेऽपि बहुतमदेवदर्शनाधिक्यादेकप्राजापत्यप्रत्याम्नायतामित्यादि ।

अथ पञ्चक्रोशयात्रायां क्षेत्रसंन्यासिनां विशेषः । देव्युवाच—
भगवन्सर्वभूतेश कृपापूरितविग्रह ।
कृतार्थानां वद विभो क्षेत्रसंन्यासिनामपि ॥
प्रदक्षिणक्रमं क्षेत्राद्बहिर्वा मध्यतोऽपि वा ।
नियमस्य न भङ्गः स्याद्यथा पापं च नश्यति ॥

श्रीभगवानुवाच—
सम्यक्पृष्टं त्वया देवि महाहंकारनाशनम् ।
प्रायश्चित्तं न्यासिनां हि क्षेत्राघौघविनाशनम् ॥
विधिस्तु पूर्वमेवोक्तो नियमादियुतस्तव ।
प्रदक्षिणात्रयं तेषामवधारय सुव्रते ॥

स्नात्वा देवं समभ्यर्च्य विश्वेशं विश्वया सह ।
मोदादिपञ्चकं ढुण्ढिं दण्डपाणिं च भैरवम् ॥
पूर्ववत्तीरगान्पूज्य दुर्गां पूज्य च यत्नतः ।
बहिरावरणं त्यक्त्वा गणेशानां तु सप्तमम् ॥
मध्ये प्रदक्षिणं कुर्यादसीवरणयोः कृती ।
संमुखीभूय विधिवत्पूज्या ये वामतः स्थिताः ॥
देवा देव्यश्च फलदाः क्षेत्रपालाश्च यत्नतः ।
एकरात्रं द्विरात्रं वा वसेन्मध्ये त्रिरात्रकम् ॥
यत्र श्रद्धा सुमहती वसेत्तत्र न संशयः ।
प्रत्यहं दण्डपाणेस्तु पूजा कार्या प्रयत्नतः ॥
दण्डपाणेः पूजनेन सिद्धिर्भवति नान्यथा ।
दण्डपाणे यक्षपते क्षेत्रसंन्यासवल्लभः ॥
पञ्चक्रोशस्य यात्रेयं सिद्धा मे त्वत्प्रसादतः ।
अनेन श्लोकमन्त्रेण प्रार्थनं पूजनं स्मृतम् ॥
प्रत्यहं कुर्वतां यात्रां संपूर्णा भवति ध्रुवम् ।
आगत्य विश्वनाथस्य पूजा कार्या तु पूर्ववत् ॥

एतदनन्तरं कुतो दण्डपाणेर्यात्रायां प्रत्यहं पूजा कार्येति देव्या पृष्टेन भवेनोक्तम्—

पुनः कालान्तरे देवि ऋषिभिर्नारदादिभिः ।
पृष्टोऽहं क्षेत्रजनितपापनाशनमुत्तमम् ॥
तदा सुदुर्लभे देवि प्रायश्चित्तं मया महत् ।
उपदिष्टं महालिङ्गप्रदक्षिणमशेषतः ॥
तच्छ्रुत्वा पृष्टवान्दण्डपाणिः क्षेत्रपरायणः ।
तदा मयोपदिष्टोऽसौ महापाशुपतः कृती ॥
क्षेत्रयात्रा द्वितीयेयं मयोक्ता दण्डपाणये ।
अतो दण्डपतेः पूजा कर्तव्या पूर्तिकारिणी ॥
पञ्चक्रोशात्मकस्यैव लिङ्गस्य परमात्मनः ।
प्रदक्षिणत्रयं कृत्वा जीवन्मुक्तो भवेन्नरः ॥

इति क्षेत्रसंन्यासिनां पञ्चक्रोशयात्रा ।

अथ पञ्चक्रोशयात्रासमर्थपङ्ग्वादीनां प्रायश्चित्तं ब्रह्मवैवर्ते। देव्युवाच—

देवदेव महादेव संदेहो नाशितस्त्वया ।
किंचित्प्रष्टव्यमस्तीह प्रायश्चित्तविनिर्णये ॥
पङ्गवः शक्तिरहिता रोगग्रस्ता धनैर्युताः ।
काश्यां पापकृतः पश्चात्प्रायश्चित्तमभीप्सवः ॥
कथं तेषां भवेच्छुद्धिर्धनिनां काशिवासिनाम् ।
सुकुमारशरीराणां राज्ञां स्त्रीसमवायिनाम् ॥
वद तेषां यथा शुद्धिर्यातनाविनिकृन्तनी ।

महादेव उवाच—

शृणु देवि रहस्यं मे धर्मः सूक्ष्मो भवेत्सदा ।
न जानन्ति स्थूलधियो विषयासक्तमानसाः ॥
स्वल्पद्रव्येण च महान्महताऽप्यणुमात्रकः ।
देशकालं तथा पात्रं वित्तं श्रद्धादिकं महान् ॥
करोति सुविचार्याऽऽशु येन काशी प्रसीदति ।
मम क्षेत्रे तु धनिनः पापिष्ठाः शुद्धिकाङ्क्षिणः ॥
शिवालयः प्रकर्तव्यो महापातकनाशनः ।
महापुण्यप्रदश्चैव महासुखकरश्च ह ॥
यत्र तिष्ठति निर्विघ्नं शिवलिङ्गं वरानने ।
तत्र देवालयः कार्यः पूजा भवति यत्र च ॥
शिवलिङ्गस्थापकानां शिवप्रासादकारिणाम् ।
यान्ति नाशं विना क्लेशैः पातकानि महान्त्यपि ॥
शिवलिङ्गप्रतिष्ठां यः कुर्यात्पापशतान्वितः ।
पातकानि विनश्यन्ति तस्य मोक्षोऽप्यदूरतः ॥
कलौ देवालयस्यापि रक्षा देवि सुदुर्लभा ।
लिङ्गरक्षा तथा शंभोर्नित्यं पूजाऽपि नो भवेत् ॥

देव्युवाच—

क्षेत्रपापिकृतं पापं नश्यत्येव न संशयः ।
अन्यान्यपि च पापानि नश्यन्ति न हि संशयः ॥
प्रासादकरणाल्लिङ्गस्थापनात्पूजनात्प्रभो ।
पापनाशः कियानर्थो निर्वाणमपि जायते ॥

परं सविघ्नता तत्र त्वयोक्ता विघ्ननाशन।
ततोऽपि किंचित्सुमहदस्ति चेद्वद शंकर ॥

महादेव उवाच—

शृणु देवि रहस्यं मे कृपणेषु न तद्वदेत् ।
अश्रद्धादूषितमतौ पापाभीरौ न नास्तिके ॥
श्रद्धालवे वदान्याय पापत्रस्ताय साधवे ।
ब्रूयाद्रहस्यं परमं यथा धर्मः सुसिध्यति ॥
वाराणस्यां गृहं कृत्वा ब्राह्मणाय प्रयच्छति ।
शुद्धाय वेदविदुषे शिवविष्णुप्रियाय च ॥
निरन्तरं धर्मकथायज्ञदानप्रियाय च ।
विवेकिने महाविद्यायुक्ताय प्रियवादिने ॥
दातव्यमेव सुगृहं कारयित्वा विशेषतः ।
काश्यां कृतानां पापानां कायवाङ्मनसा खलु ॥
वासः परोऽयं संदिष्टः शुभकृद्यदि लभ्यते ।
यावद्वसति विप्रेन्द्रो मम भक्तियुतो गृहे ॥
काश्यां दिने दिने स्वर्णकोटिभारफलं लभेत् ।
दानेन यद्यवाप्नोति महादानैः कृतैर्नरः ॥
तदवाप्नोति विप्राय शुभे संपादिते गृहे ।
गृहदानाच्चिरायुः स्याद्गृहदानान्महाधनः ॥
गृहदानान्भवेन्मुक्तो वंशवृद्धिस्तथाऽक्षया ।
अर्थकामादिकं सर्वं प्राप्नोति गृहदानतः ॥
व्ययीकृत्य धनं किंचिदत्र क्रीत्वा भुवं शुभाम् ।
गृहमुत्थाप्य यो दद्यात्स याति परमं पदम् ॥
मां विना कः प्रयच्छेत काश्यां भूमिं द्विजाय हि ।
तस्मान्मदंशः स प्रोक्तो गृहदानान्न संशयः ॥
उपपातकलक्षाणि महापापशतानि च ।
विलयं यान्ति सर्वाणि क्षेत्रमध्ये कृतान्यपि ॥
दानं तस्मादिदं श्रुत्वा मनसि ह्यवधार्य च ।
द्विजायाऽऽर्ताय संदद्याद्विक्रीयाऽऽत्मानमप्यहो ॥

एतदनन्तरं महातेजसः कस्यचित्क्षत्रियस्याऽऽख्या । स हि दासीरतः पापमार्गार्जितधनश्च सन्नपि ब्राह्मणोपदेशात्सुतपसे ब्राह्मणाय गृहं

दत्त्वा काशीकृताशेषपापनाशमाप तस्माद्ब्राह्मणाय गृहदानमपि क्षेत्रप्रायश्चित्तमिति । तथा ब्रह्मवैवर्त एव ऋषिभिः प्रायश्चित्ते पृष्टे शिववचः—

धनेषु विद्यमानेषु गृहमुत्थापयेत्सुधीः ।
सर्वलक्षणसंयुक्तं दैन्यकार्पण्यवर्जितम् ॥
वित्तानुमानेन महत्काशिवासिसुखप्रदम् ।
आर्ताय द्विजवर्याय साधवे च निवेदयेत् ।
यत्र विष्णुकथा सत्या मम धर्मकथाः शुभाः ।
भवन्त्यविरतं यत्र पात्रवर्ये निवेदयेत् ॥
या गतिर्गृहदातुः स्यात्पितॄणामपि सा गतिः ।
तस्मात्काश्यां गृहसमं दानं नास्ति महाद्विजाः ॥
काश्यां कृतानां पापानां शुष्कार्द्राणां धियाऽपि च ।
प्रायश्चित्तं मुख्यमेतत्काशीवासफलप्रदम् ॥
ब्राह्मणो यत्र वसति दिनमात्रमपि स्वतः ।
तस्मात्कृते किं पुनः स्याद्वर्णनीयं फलं मया ॥

तथा—अत्राऽऽनन्दवने यस्तु शिवालयकरो भवेत् ।
पातालमर्त्यलोकेषु कृतदेवालयः स च ॥
इष्टकापुञ्जकृद्यस्तु कौतुकेन नरः सकृत् ।
काश्यां जलाशयं कंचिद्धर्तमात्रमपि द्विजाः ॥
त्रिंदिवेशोऽप्यत्र करे कृतैः पापैर्न युज्यते ।
न तयोः साम्यमायाति सर्वदः सर्वतीर्थकृत् ॥
शिवलिङ्गस्य पूजा चेत्प्रत्यहं जायते समः ।
शिवालयशतं कृत्वा यत्फलं प्राप्यते नृभिः ॥
द्विजालयेन चैकेन तत्फलं त्वक्षयं भवेत् ।
जीर्णोद्धारं प्रकुर्वीत जलाशयशिवाल[य]योः ॥
शिवायतनलक्षाणि विष्णोरायतनानि च ।
कृतानि तेन विप्रेन्द्राः स्थापितो ब्राह्मणो यदि ॥
विप्रे सुष्ठापिते काश्यां त्रैलोक्यं स्थापितं भवेत् ।
त्रैलोक्ये स्थापिते विप्राः प्रीयेऽहं सचराचरम् ॥
तस्मात्किंचिद्यथाशक्ति कुर्याद्विप्रो यथा वसेत् ।
क्षेत्रे कृतानां पापानां प्रायश्चित्तमिदं स्मृतम् ॥

लोभयुक्ताय नो देयं गृहीत्वाऽन्यत्र यो वसेत् ।
पाक्षिको यस्य संवासस्तस्मै देयं न तद्गृहम् ॥
पुत्रपौत्रादियुक्ताय काशिवासाभिलाषिणे ।
शिवभक्तिपरायापि विष्णुव्रतपराय च ॥
अन्तर्गेहे गृहं यस्तु कृत्वा विप्राय चार्पयेत् ।
मद्गृहं निर्मितं तेन मह्यं दत्तं न संशयः ॥
कश्चिद्विश्रमते यत्र धर्मशालेति सा स्मृता ।
तत्राप्यनन्तं भवति पुण्यं पापं च नश्यति ॥

इति त्रिस्थलीसतौ काशीप्रकरणे पञ्चक्रोशयात्राऽसमर्थप्रायश्चित्तम् ।

अथान्तर्गृहयात्राख्यं प्रायश्चित्तम् । काशीखण्डे—

अन्तर्गृहस्य यात्रा वै कर्तव्या प्रतिवासरम् ।

प्रतिवत्सरमित्यपि क्वचित्पाठः ।

प्रातः स्नानं विधायाऽऽदौ नत्वा पञ्च विनायकम् ।
नमस्कृत्याथ विश्वेशं स्थित्वा निर्वाणमण्डपे ॥
अन्तर्गृहस्य यात्रां वै करिष्येऽघौघशान्तये ।
गृहीत्वा नियमं चेति गत्वाऽथ मणिकर्णिकाम् ॥
स्नात्वा मौनेन चाऽऽगत्य मणिकर्णीशमर्चयेत् ।
कम्बलाश्वतरौ नत्वा वासुकीशं प्रणम्य च ॥
पर्वतेशं ततो दृष्ट्वा गङ्गाकेशवमप्यथ ।
ततस्तु ललितां दृष्ट्वा जरासंधेश्वरं ततः ॥
ततो वै सोमनाथं च वाराहं च ततो व्रजेत् ।
ब्रह्मेश्वरं ततो नत्वा नत्वाऽगस्तीश्वरं ततः ॥
कश्यपेशं नमस्कृत्य हरिकेशवनं ततः ।
वैद्यनाथं ततो दृष्ट्वा ध्रुवेशमथ वीक्ष्य च ॥
गोकर्णेश्वरमभ्यर्च्य हाटकेशमथो व्रजेत् ।
अस्ति(स्थि)क्षेपतडागेऽथ दृष्ट्वा वै कीकसेश्वरम् ॥
भारभूतेश्वरं नत्वा चित्रगुप्तेश्वरं ततः ।
चित्रघण्टां प्रणम्याथ ततः पशुपतीश्वरम् ॥
पितामहेश्वरं गत्वा ततस्तु कवलेश्वरम् ।
चन्द्रेशस्त्वथ वीरेशो विद्येशोऽग्नीश एव च ॥

नागेश्वरो हरिश्चन्द्रश्चिन्तामणिविनायकः ।
सो(से)नाविनायकश्चाथ द्रष्टव्यः सर्वविघ्नहृत् ॥
वसिष्ठवामदेवौ च मूर्तिरूपधरावुभौ ।
द्रष्टव्यौ यत्नतः काश्यां महाविघ्नविनाशनौ ॥
त्रिसंध्येशो विशालाक्षी धर्मेशो विश्वबाहुका ।
आशाविनायकश्चाथ वृद्धादित्यस्ततः पुनः ॥
चतुर्वक्त्रेश्वरं लिङ्गं ब्राह्मीशस्तु ततः परम् ।
ततो मनःप्रकामेशमीशानेशं ततः परम् ॥
चण्डचण्डीश्वरौ दृश्यौ भवानीशंकरौ ततः ।
ढुण्ढिं प्रणम्य च ततो राजराजेशमर्चयेत् ॥
लाङ्गलीशस्ततोऽभ्यर्च्यस्ततस्तु नकुलीश्वरः ।
परान्नेशमथो नत्वा परद्रव्येश्वरं ततः ॥
प्रतिग्रहेश्वरं वाऽपि निष्कलङ्केशमेव च ।
मार्कण्डेयेशमभ्यर्च्य तत आप्सरसेश्वरम् ॥
गङ्गेशोऽर्च्यस्ततो ज्ञानवाप्यां स्नानं समाचरेत् ।
नन्दिकेशं तारकेशं महाकालेश्वरं ततः ॥
दण्डपाणिं महेशं च मोक्षेशं प्रणमेत्ततः ।
वीरभद्रेश्वरं नत्वा अविमुक्तेश्वरं ततः ॥
विनायकांस्ततः पञ्च विश्वनाथं ततो व्रजेत् ।
ततो मौनं विसृज्याथ मन्त्रमेतमुदीरयेत् ॥
अन्तर्गृहस्य यात्रेयं यथावद्या मया कृता ।
न्यूनातिरिक्तया शंभुः प्रीयतामनया विभुः ॥
इतिमन्त्रं समुच्चार्य क्षणं वै मुक्तिमण्डपे ।
विश्रम्य यायाद्भवनं निष्पापः पुण्यवान्नरः ॥

इत्यन्तर्गृहयात्रा ।

अथ क्षुद्रपापप्रायश्चित्तम् । तत्र पाद्मे भृगुं प्रत्यृषयः—

भगवन्सत्वरं मुक्तिः काश्यामेव निवासिनाम् ।
दुर्लभेवावगच्छन्ति पापं के वा न कुर्वते ॥

भृगुरुवाच—

सत्यमुक्तं धर्मरताः पापं प्रायोऽत्र जायते ।
तथा हि किंचित्पापं हि काश्यामपि कृतं द्विजाः ॥

गङ्गादितीर्थस्नानैश्च लिङ्गानां च समर्चनैः।
विनाशमाप्नोति पुनर्यदज्ञानादुपार्जितम्॥
स्वल्पं ज्ञानादपि कृतं विश्वेशस्य समर्चनात्।
नश्यत्येव न संदेहो भूयस्तदनुपार्जनात्॥
उपपातकसंपत्तिर्महापातकसंगमः।
कालभैरवनिर्दिष्टयातनां प्राप्नुयात्पराम्॥

उपपातकानां संपत्तिराधिक्यमावृत्तिर्वा यस्य स पुमान् 'उपपातकमभ्यस्तं महापातकतां व्रजेत्' इतिस्मरणात्। एवं महापातकानां संगमः संबन्धमात्रं यस्य सकृदपि महापातककर्ता। उभयविधोऽपि यातनां प्राप्नुयात्।

स्थूलं यो दुरितं काश्यां कृत्वाऽन्यत्र मृतो भवेत्।
स कल्पकोटिभिस्तस्य पापस्यान्तं न गच्छति॥
सूक्ष्मपापविनाशाय नित्ययात्राविधिर्भवेत्।
गङ्गायामाप्लुतिः प्रातर्मध्याह्ने मणिकर्णिकाम्॥
निषेवेत सदा पश्चाल्लिङ्गं वैश्वेश्वरं व्रजेत्।
भवानीं ढुण्ढिराजं च दण्डपाणिं च भैरवम्॥
पूजयेन्नित्यशः काश्यां सूक्ष्मपापापनुत्तये।
एवं यात्रापरस्तिष्ठेद्यो [ नरो ] द्विजसत्तमाः।
स्वधर्मनिरतस्तस्य सत्वरं मुक्तिरीरिता। इति॥

अत्र च गङ्गास्नानविश्वेश्वरदर्शनादेर्नित्यस्यापि फलान्तरार्थत्वेन श्रुतस्य च पापक्षयार्थत्वमपि संयोगपृथक्त्वन्यायेन दधित्वादिरवज्ञेयम्। तत्रापि च काम्येनैव प्रसङ्गतो नित्यस्यापि सिद्धिर्न तु पृथगनुष्ठानमग्निहोत्रादिवत्। सनत्कुमारसंहितायाम्—

पापानि ये कुर्युरिहाविमुक्ते
कथं हि तान्मोचयसि प्रसीद॥

इति देव्या पृष्टे शिवः—

अबुद्धिपूर्वाण्यखिलान्यघानि
नश्यन्ति विश्वेश्वरदर्शनेन॥
अन्यानि मद्भक्तिरसैकभाजां
भवन्ति बन्धाय न सत्यमेतत्॥

अन्यानि बुद्धिपूर्वकाणि ।

तथा—यथाऽत्र पुण्यं कृतमक्षयं स्या-
त्तथाऽत्र पापं न तयोर्विशेषः ॥
मय्यर्पितात्मा कृतपुण्यपापा-
द्विमुच्यते भैरवदर्शनेन ॥

इदमबुद्धिकृतस्वल्पपापविषयं 'भयात्प्रमादादपि वाऽप्यशक्त्या कृताघमायाति विनाशमाशु' इत्यग्रिमवचनाच्च । 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्' [ जै० सू० १ । २ १ । १७ ] इत्यनेन न्यायेन यानि—

वाराणसीमध्यगतानि यानि
पापानि कुर्वन्नपि(न्नुप)पातकानि ॥
प्रणाशयेत्तान्यपि बुद्धिपूर्वा-
ण्यशेषतोऽर्चन्सकृदत्र देवीम् ॥
कालभैरवसुतीक्ष्णभैरवा-
द्यो बिभेति कृतविश्वपातकः ॥
तं सदैव परिरक्षतीश्वरी
स्पष्टमेव सकृदर्चिता सती ॥ इत्यादि ।

तानि 'अन्यानर्थक्य' [ १ । २ । १ । ४ ] न्यायेन बहुतरवचनेष्वल्पपापविनाशार्थत्वश्रवणाच्च देव्यर्चनार्थवादत्वेन नेयानि । ननु विश्वेश्वरार्चनादिभिरेव क्षुद्रपापविनाशे कथं सूक्ष्मपातकेन 'क्रमेलकस्तु मूषायां ध्मातो वर्षसहस्रकम्' इत्यादिनोक्ता महापातकाधिका यातना । उच्यते । शूद्रेण सता ब्राह्मणश्वेष्वक्षुत्क्षामातिथिमूतमागुरिसंज्ञकब्राह्मणभर्त्सनताडनादि पुनः पुनर्ज्ञानतः क्रियमाणं महापातकादप्यतिरिच्यते । विश्वेश्वरार्चनादेश्चाज्ञानकृतस्वल्पपापनिरासार्थत्वम् । न च 'पुण्येन पापमपनुदति' इति श्रुतिवशादाजन्मोपार्जितसुकृतेन तत्पापक्षयः । पापक्षयार्थत्वेन विहितप्रायश्चित्ताख्यधर्मपरत्वाच्छ्रुतिगतपुण्यशब्दस्य । ननु चिरं काशीवासिनः प्रायश्चित्तरूपं च क्रोशयात्रादि भवत्येवेति चेत् । मैवम् । पूर्वपापनियन्त्रितस्य ब्राह्मणताडनादिजनकरागद्वेषादिमतो निष्पापत्वाभिमानेन तदकरणसंभवात् । धार्मिकस्यापि च 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति श्रुतिपर्यालोचनया देवनिर्मितकामक्रोधाभिमानादिविघ्नसंभवात् ।

पाद्मे—प्रामादिकाघलोपाय प्रतिभूतं विमोर्गृहम् ।
कुर्यात्प्रदक्षिणं नित्यं तत्कल्मषजिहीर्षया ॥
अयनद्वितये कुर्याद्वाराणस्याः प्रदक्षिणम् ।
प्रतिसंवत्सरं चापि काशीमप्यतितश्चरेत(?) ॥
चतुर्दशानां लिङ्गानां भूते पूजापरो भवेत् ।
चतुर्दशानामपि च [ भू ] ते भू [ तेऽ ] र्चको भवेत् ॥
रुद्रसूक्तं जपेन्नित्यं रुद्रमन्त्रं च शीलयेत् ।
प्राणिमात्रं रुद्ररूपं भावयेद्विजितेन्द्रियः ॥
विरक्तः कामिताहीनो द्वेषदम्भादिवर्जितः ।
निवसेत्सततं काश्यामेवं ब्रह्मैव पश्यति ॥

प्रतिभूतं प्रतिचतुर्दशि । ब्रह्मवैवर्ते—
काश्यामपि च सज्जन्तुर्यदि पापकृदत्र हि ।
प्रायश्चित्तत्रयं कृत्वा सद्यो मुच्येत बन्धनात् ॥

तथा भगवानुवाच—

शृणु लोकहितं देवि लोकानामुद्धृतिं पराम् ।
प्रायश्चित्तत्रयं वच्मि काश्येनः संदिधक्षताम् ॥
वापीकूपतडागादिजीर्णोद्धारकृतां नृणाम् ।
प्रभवेन्न महत्पापं काश्यामपि कृतं हि यत् ॥ इत्यादि ।
तथा—काश्यां किंचिज्जलं यैस्तु संपादितमनामयम् ।
न तेषां पापलेशोऽपि काश्यामपि[भवे]त्प्रिये ॥
जीर्णोद्धारं प्रकुर्वन्ति तेषां विश्वेश्वरः स्वयम् ।
काश्यां कृतानां पापानां मूलोत्खातं करोति हि ॥
तथा—नित्यं कृतानां क्षुद्राणां पापानां नित्यकर्मणाम् ।
नाशः संपाद्यते सद्भिर्गङ्गास्नानादिभिर्नृभिः ॥
वाराणस्यां स्वल्पमपि प्रायश्चित्तं महाघहृत् ।

इदं बहिष्कृतपापविषयम् । सनत्कुमारसंहितायाम्—

भक्ता ममाऽऽर्ये न विशङ्कनीयाः
पापेषु पुण्येषु च वर्तमानाः ॥
पुण्यैर्न ते स्वर्गमवाप्नुवन्ति
न रौरवं पापगणैः समस्तैः ॥

काशीखण्डे—

अष्टौ प्रदक्षिणीकृत्य प्रत्यहं पापभक्षणम् ।
नरो न पापैर्लिप्येत मनोवाक्कायसंभवैः ॥
वाराणस्यामुषित्वा यो भैरवं न भजेन्नरः ।
तस्य पापानि वर्धन्ते शुक्लपक्षे यथा शशी ॥

तथा—प्रमादात्पातकं कृत्वा शंभोरानन्दकानने ।
दृष्ट्वा त्रैविष्टपं लिङ्गं तत्पापमपि हास्यति ॥

त्रैविष्टपं त्रिलोचनम् ।

तथा—स्नात्वा पिलिप्पिलातीर्थे तर्पणीयान्प्रतर्प्य च ।
दत्त्वा देयं यथाशक्ति वित्तशाठ्यविवर्जितः ॥
दृष्ट्वा त्रैविष्टपं लिङ्गं समभ्यर्च्यातिभक्तितः ।
गन्धाद्यैरुपचारैस्तु कृत्वेति परिपूजनम् ॥
ब्राह्मणान्वाचयेत्पश्चान्निष्पापोऽहमिति ब्रुवन् ।
एवं कुर्वन्नरः प्राज्ञो निरेना जायते क्षणात् ॥
ततः पञ्चनदे स्नात्वा मणिकर्ण्यां ह्रदे ततः ।
ततो विश्वेशमभ्यर्च्य प्राप्नोति सुकृतं महत् ॥
प्रायश्चित्तमिदं प्रोक्तं महापापविशोधनम् ।
नास्तिके न प्रवक्तव्यं काशीमाहात्म्यनिन्दके ॥
ददच्च द्रव्यलोभेन प्रायश्चित्तमिदं शुभम् ।
दाता नरकमाप्नोति सत्यं सत्यं घटोद्भव ॥

दातोपदेष्टा । एवमन्यान्यपि तत्तत्पुराणादिषु द्रष्टव्यानि ।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे काशीकृतपापप्रायश्चित्तानि ।

अथात्र मरणविचारः । पद्मपुराणे—

नैमिषे च कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे ।
स्नानात्संसेवनाद्वाऽपि न मोक्षः प्राप्यते नरैः ॥
इह संप्राप्यते येन तत एतद्विशिष्यते ।
प्रयागे वा भवेन्मोक्षो महाकालेऽथ वा प्रिये ॥
कालञ्जरे महाभाग इह वा मत्परिग्रहात् ।
प्रयागादपि तीर्थाग्र्यादिदमेव महत्स्मृतम् ॥
अल्पायासेन चैवात्र मोक्षप्राप्तिः प्रजायते ।

मात्स्ये—एक एव प्रभावोऽस्ति क्षेत्रस्य परमेश्वरि।
एकेन जन्मना देवि मोक्षं प्राप्स्यत्यनुत्तमम्॥
तथा—कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम्।
अपि शक्रसमं राज्यं न तु काशीं पुरीं विना॥
तस्मात्संसेवनीयं हि अविमुक्तं विमुक्तये।

अत्र च महादेवकृतात्तारकोपदेशान्मुक्तिः 'अविमुक्ते विमुच्यन्ते तारकज्ञानजन्मना' इति पाद्मात्।

कौर्मेऽपि—
यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः।
व्याचष्टे तारकं ब्रह्म तदेवमतिमुक्तिदम्॥

तारकं च प्रणवः। तदुक्तं काशीखण्डे—
न वर्ण्यते कैः किल काशिकेयं
जन्तोः स्थितस्यात्र यतोऽन्तकाले॥
पचेलिमैः प्राक्तनपुण्यभारै-
रोंकारमोंकारयतीन्दुमौलिः॥

ओंकारयत्यङ्गीकारयति ग्राहयतीत्यर्थः।
तथा—अनिलो मृगनाभिरेणुगन्धै-
रधिकाशि प्रणवोपदेशकाले॥
हरते मरणश्रमं नराणां
हरवामार्धकुचोत्तरीयजन्मा॥

अन्यत्रापि—
प्रणवं तारकं ब्रूते काश्यां देवो महेश्वरः॥ इति।

रामतापनीये तु श्रीराममन्त्र एव तारकशब्दार्थ उक्तः—
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम्।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव॥ इति।

पाद्मे तु श्रीशब्दपूर्वकस्त्रिरावृत्तो रामशब्द एव तारकतयोक्तः—
मुमूर्षोर्मणिकर्ण्यन्तरर्धोदकनिवासिनः।
अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम्॥
श्रीरामरामरामेति एतत्तारकमुच्यते॥ इति।

अत्राधिकारिभेदेन व्यवस्था। त्रिरुक्तेन द्व्यक्षरेण नाम्ना षडक्षरमन्त्रोपलक्षणाच्छ्रीशब्दप्रयोगस्य च भक्त्यतिशयार्थत्वान्न पाद्मतापनीययोर्विभिन्नार्थतेत्यपि केचित्। 'ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुतिस्मृतिभ्यो ज्ञानाभावे मोक्षाभावाद्विश्वेश्वराख्यगुरूपदिष्टतारकादेवात्राऽऽत्मज्ञानोत्पत्तिः। तदुक्तं काशीखण्डे—

ब्रह्मज्ञानेन मुच्यन्ते नान्यथा जन्तवः क्वचित्।
ब्रह्मज्ञानं तदेवाहं काशीसंस्थितिभागिनाम्॥
दिशामि तारकं प्रान्ते मुच्यन्ते ते नु तत्क्षणात्।

सनत्कुमारसंहितायाम्—

पुण्यानि पापान्यखिलान्यशेषं
सार्धं सबीजं सशरीरमार्ये॥
इहैव संहृत्य ददामि बोधं
यतः शिवानन्दमवाप्नुवन्ति॥

पाद्मेऽपि—तीर्थान्तराणि क्षेत्राणि विष्णुभक्तिश्च नारद।
अन्तःकरणसंशुद्धिं जनयन्ति न संशयः॥
वाराणस्यपि देवर्षे तादृश्येव परं तु सा।
प्रकाशयति ब्रह्मैक्यं तारकस्योपदेशतः॥

पाराशरेऽपि 'अत्रैवोत्क्रममाणस्य जन्तुमात्रस्य केवलम्' इत्याद्युपक्रम्य—

आनन्दसत्यचिद्रूपं तारकं तमसः परम्।
स्वयं ज्ञानं निराधारं दास्यामि प्रत्यगात्मना॥ इति।

इह च मरणे कालकृतोऽपि विशेषो नास्ति—

उत्तरं दक्षिणं वाऽपि अयनं न विचारयेत्।
सर्वोऽप्यस्य शुभः कालो ह्यविमुक्ते म्रियेत यः॥

इति काशीखण्डात्। नाप्यत्र देशविशेषापेक्षा—

रथ्यान्तरे मूत्रपुरीषमध्ये
चण्डालवेश्मन्यथ वा श्मशाने॥
कृतप्रयत्नोऽप्यकृतप्रयत्नो
देहावसाने लभतेऽत्र मोक्षम्॥

इति सनत्कुमारसंहितायाम्।

तथा—मेदो महीं वाप्यपुरासमस्ता(?)
मद्रूपयन्नाऽत्र शिवाज्ञयैव॥
तस्मान्महीशुद्धिरितोऽन्यदेशे
क्षेत्रेऽत्र दोषेऽपि पवित्रमेव॥

पाद्मे—भूमौ जलेऽन्तरिक्षे वा यत्र क्वापि मृतो द्विजः।
ब्रह्मात्मैकत्वमाप्नोति काशीशक्तिरुपाहिता॥

नाप्यत्र दुर्मरणादिदोषः—

सूच्यग्रमात्रमपि नास्ति ममाऽऽस्पदेऽस्मिन्
स्थानं सुरेश्वरि मृतस्य न यत्र मुक्तिः॥
भूमौ जले वियति वाऽशुचिमध्यतो वा
सर्पाग्निदस्युपविभिर्निहतस्य जन्तोः॥

इतिपाद्मात्। इदं च दुर्मरणमात्रोपलक्षणम्। आत्महत्यारूपदुर्मरणं त्वत्र न कार्यं 'कालेनोपरता यान्ति शिवसायुज्यमुत्तमम्' इति मात्स्यात्। 'त्यक्तासुरत्र स्वयमेव काले मामेव भक्तः प्रविशेद्विशङ्कः' इति सनत्कुमारसंहितोक्तेश्च। प्रायोपवेशनाग्निप्रवेशयोस्तु वचनाद्दोषाभावः। तदुक्तं मात्स्ये—

अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः।
प्रविशन्ति मुखं ते मे निःसंदिग्धं वरानने॥

तथा—कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि॥

काशीखण्डे—

विनाऽऽत्मघातमीशान त्यक्त्वा प्रायोपवेशनम्।
नैःश्रेयस्याः श्रियो हेतुस्तदस्तु जगदीश्वर॥ इति।

प्रायोपवेशनं त्यक्त्वाऽऽत्मघातं विनेति संबन्धः। प्रायोपवेशनातिरिक्तात्मघाते दोष इति फलितोऽर्थः। इदं चाग्निप्रवेशप्रायोपवेशनात्मकमात्महननमचिकित्स्यव्याध्यादिना नित्यनैमित्तिककर्मलोपवतः प्रायश्चित्तासमर्थस्य पापिनश्च ब्राह्मणादेः सर्वस्याभ्यनुज्ञायते न त्वन्यस्य—

स्वयं देहविनाशस्य प्राप्ते काले महामतिः।
उत्तमान्प्राप्नुयाल्लोकानात्मघाती भवेत्क्वचित्॥

एतेषामधिकारस्तु सर्वेषां सर्वजन्तुषु ।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥
आशौचं स्यात्त्र्यहं तेषां वज्रानलहतेषु च ।
वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः ॥
प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित् ।

इत्यादिपुराणवचसा ।

सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च ।
प्रायश्चित्तमनुज्ञातमग्निपातो महापथः ॥
धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य च ।
ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम् ॥

इति विवस्वद्वचसा च समानविषयतायां कल्पनागौरवाभावादित्येके। अन्ये तु तद्प्रत्यभिज्ञानात्, पुनर्विधानानर्थक्यापातात्, उपायान्तरनिरासार्थत्वे त्रिदोषपरिसंख्यापत्तेः, असंनिधिना फलान्तरसंबन्धमात्रार्थं पुनःश्रवणासंभवेन 'फलं चाकर्मसंनिधौ' [ जै० सू० २ । ३ । १२। २५ ] इतिन्यायेन देशाख्यानुपादेयोपादानाच्च कर्मभेदस्यैव युक्तत्वाच्च काम्येऽस्मिन्सर्वेषामधिकारो न तु पूर्वोक्तविशेषणवतामेवाविशेषश्रवणादित्याहुः । अपरे तु ब्राह्मणातिरिक्तानां सर्वेषामिति । अत्राधिकं वक्तव्यं प्रयागीयमरणावसर एवोक्तमिति नेहोच्यते । प्रकृतमनुसरामः। काशीमृतेर्मुक्तौ नाधिकारिविशेषापेक्षा—

कीटाः पतङ्गा मशकाश्च मत्स्या
जले स्थले वा विचरन्ति मर्त्याः ॥
मण्डूकमत्स्याः कृमयोऽपि काश्यां
त्यक्त्वा शरीरं शिवमाप्नुवन्ति ॥
अनेनैव विशेषेण तां प्रशंसन्ति तात्त्विकाः ।
साक्षाद्वाराणसी मुक्त्यै विष्णुभक्तिस्तथाविधा ॥
तथाऽपि विष्णुभक्तिस्तु द्वित्रैरेव विभाव्यते ।
काशी तु तिर्यग्भूतानामपि साधारणी मता ॥

इत्यादिपाद्मात् ।

अविमुक्तरहस्यज्ञा मुच्यन्ते ज्ञानिनो नराः ।
अज्ञानिनोऽपि तिर्यञ्चो मुच्यन्ते ते त्वकल्मषाः ॥

इति काशीखण्डात् 'यस्य कस्यापि वा स्वयम्' इतितापनीयात् । 'अत्रैवोत्क्रममाणस्य जन्तुमात्रस्य केवलम्' इति पाराशरादौ जन्तुमात्रशब्दोपादानाच्चेति । अथात्र मृतस्य तत्कालं कथं मुक्तिः कस्य चेत्यादि विचार्यते । तत्र मुक्तिप्रकाशिकायाम्—काश्यादिकक्षाभेदेन चतुर्विधेऽत्र क्षेत्रे मणिकर्ण्यां जाह्नव्यर्धोदके भूमौ विश्वेश्वराभिमुख्येन कालतो मृतस्य द्विजमात्रस्य यातनादिजनकदुरितरहितस्य विश्वनाथभक्तस्योच्छिन्नसंशयस्य सद्यः परमानन्दरूपं सायुज्यं भवति । द्विजातिरिक्तस्य तु दुरितरहितस्य मनुष्यमात्रस्य द्विजस्यापि कस्य चिद्दुरितराहित्येऽप्यविश्वेश्वरभक्तस्य विश्वेश्वरभक्तत्वेऽपि दुरितराहित्येऽप्युक्तप्रकारादन्येन प्रकारेण जातमरणस्य चतुर्विधेऽत्र क्षेत्रे यत्र क्वापि मरणे क्षेत्रावान्तरभेदतारतम्येन जीवतारतम्येन मरणस्य बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वप्रयुक्ततारतम्येन कर्मादितारतम्येन च सालोक्यादिप्राप्तिद्वारा कैवल्यं भवति । दुरितवतस्तु मनुष्यमात्रस्य चतुर्विधेऽत्र क्षेत्रे यत्र क्वापि येन केनचित्प्रकारेण मृतस्य दुरितानुसारेण याम्यगणयातनां त्रिंशद्वर्षसहस्रस्थायिरुद्रपिशाचत्वादि च प्राप्तस्य तदन्ते मुक्तिः सद्यः शनैश्च भवति । तत्राप्युत्कटपापकृतस्तद्भोगान्ते जन्मान्तरप्राप्त्या शनैरितरस्य सद्य इति विवेकः । ननु दुरितरहितद्विजानां मणिकर्ण्यां गङ्गाह्नदये भवान्या आस्ये सम्यग्विसृष्टदेहानामपि मरणमात्रात्साक्षान्मुक्तावुच्यमानायां 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' 'ज्ञानादेव हि कैवल्यम् ।'

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥'

इत्यादिश्रुतिस्मृतिविरोध इति चेत् । मैवम् । मरणमात्रात्साक्षान्मुक्तेरनङ्गीकारात् । मरणस्य सम्यगन्तःकरणशुद्ध्यादिक्रमेण ज्ञानजनकताङ्गीकारात् । 'पृथूदकादौ यन्मरणं तदप्यत्यन्तशुद्धिकृत्' इतिसुरेश्वराचार्योक्तेः । आदिशब्देन प्रयागकाश्यादिसंग्रहात् । ननु काशीमरणमात्रादन्तःकरणशुद्धौ येन केनचिद्यज्ञेनापि 'दर्वीहोमेनानुपहतमना एव भवति' इत्यादिश्रुतेरन्तःकरणशुद्ध्यर्थानां कर्मणां वैयर्थ्ये तत्प्रतिपादकश्रुतीनां व्याकोपस्तथा च धर्ममीमांसानारम्भप्रसङ्गश्चेति चेत् । न । आचार्यवचः प्रमाणमभ्युपगच्छता त्वयाऽप्येतस्य परिहरणीयत्वात् । काश्यादमृतान्प्रति कर्मणामन्तःकरणशुद्धिजनकताप्रतिपादनेन तत्सार्थकत्वात् । न च काशीमृतान्प्रत्यप्यस्ति तेषामानर्थक्यम् । अनेकजन्मसंचि-

तपुण्यकर्मभिः शुद्धचित्तानामेव काशीमरणसंभवात् । अत्यन्तशुद्धिकृद्िति वचनस्य बहुशुद्धिकृदित्येवमर्थत्वात् । अत एव ब्रह्मपुराणे—

अनेकजन्मसंसिद्धान्वर्जयित्वा महामुनीन् ।
नान्येषां मरणं तत्र यच्छन्त्येते विभीषणाः ॥

ननु पापकृतामपि काश्यां मरणदर्शनाच्छुद्धान्तःकरणतायां च सत्यां पापवासनानुपपत्तेरनेकजन्मार्जितसुकृतशुद्धान्तःकरणानामेवात्र मरणमिति न नियम इति चेत् । मैवम् । तादृशान्तःकरणशुद्धौ सत्यामपि प्रारब्धपापवशात्कंसशिशुपालादीनामिव तादृशवासनोपपत्तेर्नियमभङ्गासंभवात् । ननु काशीमरणस्यान्तःकरणशुद्धिक्रमेण ज्ञानद्वारा मुक्तिदत्वे तन्मुक्तिदं ज्ञानं केन प्रमाणेनोत्पद्यते । विश्वेश्वराख्यगुरूपदिष्टतारकमहावाक्येनेत्यवेहि । तदुक्तं ब्रह्मपुराणे—

अविमुक्ते म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः ।
काष्ठपाषाणभूतस्तु जाह्नवीजलमध्यगः ॥
अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः ।
प्रणवं तारकं ब्रूते नान्यथा कस्यचित्क्वचित् ॥

अविमुक्तो विश्वेश्वरः ।

कौर्मे—तत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ।
व्याचष्टे तारकं ब्रह्म तथैवैकं विमुक्तिदम् ॥
यत्तत्परतरं तत्त्वमविमुक्तमितिस्मृतिः ।
एकेन जन्मना देवि वाराणस्यां तदाप्नुयात् ॥

सूतसंहितायाम्—

श्रीमद्वाराणसी पुण्या पुरी नित्यं मम प्रिया ।
यस्यामुत्क्रममाणस्य प्राणैर्जन्तोः कृपाबलात् ॥
तारकं ब्रह्म निर्वाणं दास्यामि श्रेयसे हरे ।
तस्मादेवं महाविष्णो प्राणत्यागो विमुक्तिदः ॥ इति ।

आदित्यपुराणे—

तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
वाराणसीति नगरी प्रिया देवस्य शूलिनः ॥

यत्र विश्वेश्वरो देवः सर्वेषामेव देहिनाम् ।
ददाति तारकं ज्ञानं संसारान्मोचकं परम् ॥

अन्यान्यपि जाबालश्रुत्यादीनि पूर्वोक्तान्यत्रार्थे प्रमाणभावं भजन्ते। ननु मरणकाले कौष्ठचवाय्वभिघातेन च्छिद्यमानमर्मणो व्याकुलचित्तस्य श्रवणाद्यसंभवेऽसंभावनाविपरीतभावनयोरुच्छेदाभावे च साक्षात्काराभावान्मरणान्मुक्तिप्रतिपादकानि वचनानि काशीवासविध्येकवाक्यतया तदर्थवादा एवेति चेत् । न । अपरिमेयमहिमश्रीविश्वनाथानुग्रहात्सकलवेदनानिवृत्त्या चित्तप्रसादकरणपाटवसंभवेन श्रवणादिसंभवाद्भगवत्कृष्णानुग्रहेण शरतल्पपुत्रनाशजन्यदुःखयोरिव भीष्मधृतराष्ट्रयोः । अत एव मात्स्ये—

अन्तकाले मनुष्याणां छिद्यमानेषु मर्मसु ।
वायुना प्रेर्यमाणानां स्मृतिर्नैवोपपद्यते ॥

इति क्षेत्रान्तरमरणप्रकारमुक्त्वा—

अविमुक्ते त्वन्तकाले भक्तानामीश्वरः स्वयम् ।
कर्मभिः प्रेर्यमाणानां कर्णजापं प्रयच्छति ॥
ईश्वरप्रेरितो याति दुष्प्रापमकृतात्मभिः ।

इति तुशब्देन क्षेत्रान्तरापेक्षया प्रागुक्तो विशेष उक्तः । अपि च इहैव सृष्टित्वात्स्वप्नावस्थायां बाह्येन्द्रियसत्तां विनैव यथा श्रवणादिव्यवहारस्तथा जागरेऽपि दीर्घस्वप्ने मनोमात्रेणैव श्रवणादिव्यवहार इति स्थितेऽत्र मरणकाले बाह्येन्द्रियापेक्षां विनैव मनोमात्रेण श्रवणाद्युपपत्तौ काशीमरणादत्यन्तशुद्धस्य श्रीविश्वेश्वरसाक्षात्काराच्च विनष्टदुष्कृतराशेरसंभावनादिप्रतिबन्धोच्छेदसंभवात्, अनाद्यज्ञानस्येवानाद्यसंभावनाविपरीतभावनयोरपि गुरुप्रभावेण क्षणमात्रेणोच्छेदसंभवाच्च। न च चिरकालनिरोधसमाधिं विना शोधिततत्त्वंपदार्थसाक्षात्काराभावाद्वाक्यार्थसाक्षात्कारानुदय इति वाच्यम् । निरोधसमाधिमात्रेण शोधितत्वंपदार्थसाक्षात्कारः संभवति चिरत्वविशेषणवैयर्थ्यात्, चिरत्वस्यानुगमाच्छास्त्रार्थाव्यवस्थाप्रसङ्गाच्च । तदुक्तं पाराशरीये—

अत्रैवं मरणं सम्यग्यस्य सिध्यति देहिनः ।
विज्ञानसाधनं तेन सर्वं पूर्वमनुष्ठितम् ॥ इति ।

तस्मात्तारकोपदेशश्रवणादेवासंभावनादिनिरासासिद्धेः काशीमरणान्मुक्तिरितिवाक्यानां नार्थवादतेति सिद्धम्। ननु मरणात्साधनचतुष्टयसंपत्तेः प्रायेणानुपलम्भात्तद्रहितायोपदेशाङ्गीकारे 'अथातो ब्रह्मजिज्ञासा' [ ब्र० सू० १।१।१ ] इतिसूत्रेऽथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्योक्तेः संपन्नसाधनमेवाधिकारिणं प्रति वेदान्तशास्त्रारम्भो न स्यात्, साधनचतुष्टयवतामपि श्रवणादिपरिहारेण काशीमरणायैव प्रयासप्रसङ्गश्चेति चेत्। न। मरणकाल एव साधनसंपत्त्यभ्युपगमात्। जीवदवस्थायामेव सद्योमुक्तिप्रदं विज्ञानोपायं हस्तगतं श्रवणादि परिहाय शक्रविहितकामादिदशविघ्नबहूपसर्गवत्यां काश्यां मरणकालीनविज्ञानाय प्रवृत्त्यसंभवाच्च। कूर्मपुराण उपायान्तरमभिधाय 'वसेद्वा मरणाद्विप्रो वाराणस्यां समाहितः' इति वदतेश्वरेणैव वाशब्दबलात्काशीतो बहिर्विज्ञानसंपादनाक्षमस्यैव काशीवासाभ्युपगमाच्च। न चात्र हि 'जन्तोः प्राणेषूत्क्रममाणेषु' इतिश्रुतौ जन्तुमात्रप्रतीतेः कथं द्विजस्यैव सायुज्यमुच्यत इति वाच्यम्। 'रुद्रस्तारकं ब्रह्म व्याचष्टे' इत्यनेनैकवाक्यतया प्रणवाख्यतारकव्याख्यानयोग्यत्रैवर्णिकमात्रपरत्वाज्जन्तुपदस्य। न चोत्क्रान्त्यनन्तरं शरीराभिमानाभावाज्जन्तुमात्रस्य प्रणवाधिकारः संभवतीति वाच्यम्। उत्क्रममाणेष्वितिवर्तमानापदेशेनोत्क्रमदशायामेवोपदेशाभ्युपगमात्। उत्क्रमानन्तरमशरीरस्योपदेशायोगाच्च। 'कर्णमूलगतो हरः' 'कर्णजापं प्रयच्छति' इत्यादिवचनविरोधश्च। अशरीरस्य कर्णाभावात्। जन्तुमात्रपरत्वे च वक्ष्यमाणानेकवचःप्रतिपाद्यक्रममुक्त्यसंभवप्रसङ्गाच्च। एवं पुराणगतजन्तुशब्दस्यापि त्रैवर्णिकमात्रपरतैव। तस्मात्—

> काष्ठपाषाणभूतस्तु जाह्नवीजलमध्यगः।
> अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः॥

इति वचनात्।

> मुमूर्षोर्मणिकर्ण्यन्तरर्धोदकनिवासिनः।

इतिवचनाच्च' अर्धजले मणिकर्ण्यां विश्वेश्वराभिमुखस्य 'कालेनोपरता यान्ति' इति वचनात्

> आत्मरक्षाऽत्र कर्तव्या महाश्रेयोभिवृद्धये।
> अत्राऽऽत्मत्यजनोपायं मनसाऽपि न चिन्तयेत्॥

इतिवचनाच्च काले न तु बलात् । अविमुक्ते म्रियेदितिसप्तमीब-लाद्भूमौ मृतानां त्रैवर्णिकानां काशीमरणं मुक्तिदं न वेतिसंशयरहि-तानां च श्रीविश्वेश्वरोपदिष्टप्रणवोत्पन्नसम्यग्ज्ञानात्सद्यः सायुज्यं भव-तीति सिद्धम् । ननु—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसंस्थिताः ।
स्त्रियो म्लेच्छाश्च ये चान्ये संकीर्णा वर्णजातयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये पक्षिणस्तथा ।
कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥
चन्द्रार्धमौलयस्त्र्यक्षा महावृषभवाहनाः ।
शैवे मम पुरे देवि जायन्ते तत्र मानवाः ॥
ये भक्ता वरदं देवमविमुक्तं परं पदम् ।
ते विशन्ति महादेवमाज्याहुतिरिवानलम् ॥
अकामो वा सकामो वा तिर्यग्योनिगतोऽपि ।
अविमुक्ते त्यजन्प्राणान्मम लोके महीयते ॥
गृहस्थाश्चैव यतयस्तस्मिंस्तीर्थ उपासकाः ।
एकदण्डास्त्रिदण्डाश्च हंसव्रतधराश्च ये ॥
कर्मभेदेन तेषां तु सर्वेषामास्थितो ह्यहम् ।
विभजामि परं स्थानं यच्छन्मोक्षप्रदं शुभम् ॥ इति

नानापुराणवचनैः काश्यां मृतानां क्षेत्रावान्तरभेदतारतम्यादिना सारूप्यादिसंभवेऽपि तेषां सारूप्यादिभाजां कथं कैवल्यं भवतीति चेत् । उच्यते । 'तदुपर्यपि बादरायणः संभवात्' ( ब्र० सू० १ । ३ । २६ ) इतिव्याससूत्राद्देवानामपि ब्रह्मविद्याधिकारे सिद्धे 'ते विशन्ति महा-देवम् ।'

न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।
अविमुक्तेन गृह्यन्ते भवेन विभुना स्वयम् ॥

तथा—स याति परमं स्थानं यत्र गत्वा न शोचति ।
जन्ममृत्युजरामुक्तं परं याति शिवालयम् ॥
अपुनर्मरणानां हि सा गतिर्मोक्षकाङ्क्षिभिः ।
यां प्राप्य कृतकृत्यः स्यादिति मन्यन्ति पण्डिताः ॥

इति मत्स्यपुराणात्

परात्छिवपुरादूर्ध्वं श्रीकण्ठेन निरीक्षिताः ॥
नाधो यान्ति पुनर्देवि संसारे दुःखसंप्लवे ।

इति 'वायुपुराणाच्च कैलासाद्यपरशिवालयापेक्षया परं शिवालयं सत्यलोकस्य प्रदेशविशेषं गतानां तत्र सारूप्यादिभाजां च श्रीभवाज्ज्ञानलाभे कैवल्यं संभवत्येव । तथाऽपि साम्राज्यादिकामनया कृतकाम्यकर्मणः काशीमृतस्य कथं मुक्तिः । इत्थम् । तत्काम्यं कर्म फलदानव्यग्रं चेत्तर्हि जन्मान्तरं प्राप्तस्य तत्फलभोगान्ते मुक्तिः । अत एव शिवपुराणे कस्यचिल्लुब्धकस्य सपत्नीकस्य काश्यामोंकारेश्वरसंनिधौ मृतस्य जन्मान्तरप्राप्त्यनन्तरं मुक्तिः श्रुता । 'मुनिरप्युवाच भवान्तरिता पृथिवीपते ह्यवगम्यतां कथा । तव जन्म लुब्धककुले परुषा गतिरप्यनेकजनपातकरी' इत्याद्यनन्तरम्—

कालेन गच्छता चैवं रुद्रावासतटे शुभे ।
पञ्चत्वं गतवांस्तत्र देवदेवस्य संनिधौ ॥
अग्नौ प्रविष्टा सुश्रोणी तच्च गृह्य कलेवरम् ।
तेन धर्मेण राजेन्द्र इयं व्युष्टिरुपागता ॥
भवान्वै लुब्धको जातः सपत्नीको नृपेश्वर । इत्यादि ।

यदि तु तत्काम्यकर्म फलदानव्यग्रं न भवति तर्हि प्रतिबन्धकाभावाज्जन्मान्तरं विनैव विश्वेश्वरभक्त्यासादितज्ञानादेव मुक्तिः । अत एव सनत्कुमारसंहितायाम्—

शीघ्रं वहत्येव यथा शिलां नौ-
र्गच्छत्यजस्रं गतिबन्धनार्थम् ॥
भक्तिस्तथा धारयतेऽघसंघा-
द्भक्तांस्तथा कार्मिकपुण्यसंघात् । इति ॥

ननु सपापस्य काशीमरणे रुद्रपिशाचत्वप्राप्त्यनन्तरं कथं मुक्तिः । उच्यते । पिशाचस्यापि देवयोनिविशेषत्वाद्ब्रह्मविद्याधिकारसंभवादीश्वरोपदिष्टतारकोत्पन्नतत्त्वज्ञानात् । तथा च सनत्कुमारसंहितायाम्—

यो वा गमिष्यत्यघकृद्द्विहिष्ट-
स्त्यक्त्वाऽसुमत्रैव शिवं लभेत ॥

अत्रैव पापैः सह चेन्मृतोऽसौ
न जन्ममृत्यू लभते च काश्याम् ॥
कालेन मे यामगणैः फलेषु
नियोजितस्तत्सकलं प्रभुज्य ॥
अल्पेन कालेन समस्तमेव
सार्धं पुना रुद्रपिशाचरुद्रैः ॥
भवप्रसादेन कृतोपदेशः
पिशाचयोनेरपि मुक्तिमेति ॥ इति ।

नन्वत्र पिशाचयोनेरेव मुक्तिरुच्यते न संसारादिति चेत्। न। पिशाचयोन्यारम्भककर्मक्षयादेव ततो मुक्त्युपपत्तौ तारकोपदेशवैयर्थ्यापाताद्भवप्रसादवैयर्थ्यापाताच्च । रुद्रपैशाच्यान्ते संसारान्मुक्त्युक्तौ पुनर्जन्ममरणयोरवश्यंभावापातान्न जन्ममृत्यू लभत इत्युपक्रमविरोधः। 'तस्मान्मृतस्यात्र न सर्वथाऽस्ति पुनर्भवो मृत्युपरिग्रहो वा' इत्युपसंहारविरोधाच्च । यदपि पिशाचयोनेरपि मुक्तिमेतीत्येतदनन्तरम्—

अन्यत्र भुक्त्वाऽपि समस्तपापं
पुण्यं च पश्चात्तृणगुल्मकादौ ॥
जातः क्रमाद्ब्राह्मणतामुपेत्य
त्वदुक्तमार्गैरपि मुक्तिमेति ॥

इत्यादिपैशाच्यानन्तरमपि जन्ममृत्युप्रतिपादनं तदप्युक्तमार्गेण काशीकृतपापस्यान्यत्र मृतस्य द्रष्टव्यम्। कतिपयजन्मापरिहाराभ्युपगमेऽपि 'न जन्ममृत्यू लभते त्ववश्यम्' 'तस्मान्मृतस्यात्र न सर्वथाऽस्ति' इत्यवश्यंसर्वथाशब्दयोर्विरोधप्रसङ्गापरिहारात् । किंच—'पापानि ये कुर्युरिहाविमुक्ते कथं हि तान्मोचयसि प्रसीद' इति सामान्यतः काशीपापकृद्विषये पार्वत्या पृष्टेन भवेन 'अन्यत्र भुक्त्वाऽपि' इत्यादिना काशीकृतपापोऽन्यत्र मृत एव विषयीकृतो लक्ष्यते प्रत्युत्तरान्तराभावात्। काशीमृतविषयत्वे विरोधस्य पूर्वमुक्तत्वात् ।

अविमुक्ते मृतः कश्चिन्नरकं नैति किल्बिषी ।
ममानुग्रहमासाद्य गच्छत्येव परां गतिम्। इति ॥
अविमुक्तप्रभावेन न चाहं नरकं गतः ।

इत्यादिवचनविरोधाच्च । गरुडपुराणेऽपि—

वाराणस्यां स्थितो यो वै पातकेषु रतः सदा ।
योनिं प्रविश्य पैशाचीं वर्षाणामयुतत्रयम् ॥
पुनरेव च तत्रैव ज्ञानमुत्पद्यते ततः ।
मोक्षं गमिष्यते सोऽपि गुह्यमेतत्खगाधिप । इति ॥

काशीखण्डे च—

ममैव मायया मूढा भेदवादपरायणाः ।
मम भक्तिं प्रकुर्वाणा ये विश्वेशं द्विषन्ति वै ॥
विद्विषो मम ते ज्ञेयाः पिशाचपदगामिनः ।
पैशाचीं योनिमाप्यापि कालभैरवशासनात् ॥
त्रिंशद्वर्षसहस्राणि उषित्वा दुःखसागरे ।
विश्वेशानुग्रहादेव ततो मोक्षमवाप्नुयात् ॥
कृत्वाऽपि काश्यां पापानि काश्यामेव म्रियेत चेत् ।
भूत्वा रुद्रपिशाचोऽपि पुनर्मोक्षमवाप्स्यसि ॥

इत्यादिना काशीकृतपापानां तत्रैव मृतानां जन्माभावस्य प्रतिपादनात् । यत्तु पद्मपुराणे काशीकृतपापस्य तत्रैव मृतस्य कस्यचिद्दश जन्मानि, काञ्चनमालिनीदत्तमाघस्नानजपुण्येन देवजन्म च श्रूयते । तथा हि—

अविमुक्ते कृतं पापं वज्रलेपो भवेद्दृढम् ।
वज्रलेपेन पापेन तेन जन्म च राक्षसम् ॥
रौद्रं क्रूरतरं पापं संभूतं हिमपर्वते ।
द्विजांतो गृध्रयोनौ प्राक्त्रिर्व्याघ्रो द्विः सरीसृपः ॥
एकवारमुलूकश्च विड्वराहस्ततः परम् ।
इदं तु दशमं जन्म राक्षसं ह्यत्र भामिनि ॥
अतीतानि सहस्राणि वर्षाणां पञ्चसप्ततिः ।
ददौ सा माघजं पुण्यं तस्मै वृद्धाय रक्षसे ॥
शृणु राजन्विचित्रं त्वं प्रभावं माघधर्मजम् ।
तदैव प्राप्तपुण्यस्तां विमुक्त्वा राक्षसीं तनुम् ॥
संभूतो देवतारूपरतेजोभास्वरविग्रहः । इति ।

तत्तु पूर्वोक्तजन्माभावप्रतिपादकबहुवचनविरोधात्प्रयागे माघस्नानप्राशस्त्यसमर्पणपरं सन्न स्वार्थे प्रमाणभावं भजते । न च काशीमरणकीर्तनं विनाऽपि प्राशस्त्यप्रतिपादनसंभवात्तत्प्रतिपादनं व्यर्थमिति वाच्यम् । तन्मरणेनापि यन्न निराकृतं तन्माघस्नानजपुण्येनेत्यतिशयोक्त्यर्थत्वात् । यद्वा काश्यामुत्कटपापकृतो मृतस्य जन्मप्रतिपादकानि पद्मपुराणे वचनानि । 'अन्यत्र भुक्त्वाऽपि समस्तपापम्' इत्यादीन्यपि तद्विषयाण्येव । उत्कटपापकृत्त्वं च पाद्म एव श्रूयते—

शृणु सुश्रोण्यहं काश्यां बह्वृचो वेदपारगः ।

इत्याद्युक्त्वा—

वाराणस्यां कृतो घोरो मया दुष्टः प्रतिग्रहः ।
बहुधा बहुवारं च निषिद्धः कुत्सितो बहु ॥
चण्डालस्यापि न त्यक्तो मया भद्रे प्रतिग्रहः ।
अन्यच्च पापकं तत्र ममाभून्मूढचेतसः ॥
तन्नास्ति दुष्कृतं तत्र मया तत्र न यत्कृतम् ।
अन्यच्च श्रूयतां दोषः क्षेत्रस्य वरवर्णिनि ।
अविमुक्तेऽणुमात्रं यत्तदघं मेरुतां व्रजेत ॥
न धर्मस्तु मया तत्र संचितस्तत्र जन्मनि ।
ततो बहुतिथे काले मृतस्तत्रैव शोभने ॥
अविमुक्तप्रभावेन न चाहं नरकं गतः । इति ।

'भवप्रसादेन कृतोपदेशः पिशाचयोनेरपि मुक्तिमेति' इत्यादीनि त्वनुत्कटपापकृद्विषयाणि । यच्च काशीखण्डे—

दुष्कृतानि विधायेह दाहिः पञ्चत्वमागताः ।
तेषां गतिं प्रवक्ष्यामि शृणुत द्विजसत्तमाः ॥
यामाख्या मे गणाः सन्ति घोरा विकृतमूर्तयः ।
भूपायां ते धमन्त्यादौ क्षेत्रदुष्कृतकारिणः ॥

इत्यादिना विविधयामगणकृतयातनानन्तरं रुद्रपिशाचकालभैरवकृता । अनन्तरं काश्यामेव देहग्रहणपूर्वकं तेषां मुक्तिर्भवतीति प्रतिपादितम्—

अथ संक्षीणपापास्ते कालभैरवदर्शनात् ।
इहैव देहिनो भूत्वा मुच्यन्ते ते ममाऽऽज्ञया ॥

इत्यन्तेन तत्काश्यां पापं कृत्वाऽन्यत्र मृतपापिविशेषविषयम् । ननु-

अशनं वसनं वासः काश्यां येषाममार्गतः ।
कीकटेन समा काशी सत्यं सत्यं खगेश्वर ॥
विष्णोऽविमुक्ते संवासः कर्मनिर्मूलनक्षमः ।
छित्राणां हि पवित्राणां निर्वाणायोपजायते ॥

इतिवाक्याभ्यां काशीमृतानामपि पापिनां मुक्त्यभावः प्रतीयत इति चेत् नैवम् । सद्य एव परमनिर्वृतिरूपमुक्त्यभावं यातनासद्भावं चाभिप्रेत्य कीकटसमताभिधानात् । अन्यथा पूर्वोक्तबहुतरवचनविरोधात् । यानि च पद्मपुराणे वचनानि—

परद्रोहरता ये च तथा च प्राणिहिंसकाः ।
परापवादिनः पापा देवतागुरुनिन्दकाः ॥
कुप्रतिग्राहिणः सर्वे संभवन्ति पुनः पुनः ।
खरोष्ट्रसूकरादित्वं गोजाश्वमृगपक्षिताम् ॥
चण्डालपुल्कसत्वं च प्राप्नोति ब्रह्महा क्रमात् ।
दस्यूनां विड्भुजां योनिं पक्षिणां च तथैव च ॥
कृमिकीटपतङ्गानां सुरापः प्राप्नुयान्नरः ।
राक्षसानां पिशाचानां चौरो याति सहस्रशः ॥
क्रव्याद्दंष्ट्रिणां योनिं तृणादीनां तथैव च ।
क्रूरकर्मरतानां च प्राप्नोति गुरुतल्पगः ।
धान्यचोरो भवेदाखुर्जलं हृत्वा प्लवो भवेत् ॥
कांस्यं हृत्वा भवेद्गृध्रो नीरसं कुररो घृतम् ।

इत्यादीनि जन्मप्रतिपादकानि तानि 'न जन्ममृत्यू लभते त्ववश्यम्' 'तस्मान्मृतस्यात्र न सर्वथाऽस्ति पुनर्भवो मृत्युपरिग्रहो वा' इत्यादिपूर्वोक्तनिरवकाशवचनविरोधात्काश्यां पापं कृत्वाऽन्यत्र मृतविषयाणि । तस्मात्काशीकृतपापानामपापानां च तत्रैव मरणेऽवश्यं मुक्तिरस्ति क्रमाक्रमयोस्तु विशेष इति सिद्धम् । अत एवेश्वरवचः—

सूच्यग्रमात्रमपि नास्ति ममाऽऽस्पदेऽस्मिन्
स्थाने महेश्वरि न यत्र मृतस्य मोक्षः ॥ इति ।

इदं मृतिमुक्तिप्रकाशिकाकारमतम् । अन्ये त्वेवमाहुः—यद्यपि पुराणेषु सारूप्याद्यविशेषेण मुक्तिर्मरणफलतयाऽवगम्यते तथाऽप्यधिकारितारतम्येन निष्पापानां शुचीनां परमात्मसमर्पितकर्मणां मरणादेव परममुक्तिस्ततोऽपकृष्टानामग्निप्रवेशादिकृतां सामीप्यं तिर्यक्प्रभृतीनामत्यन्तं

पापीयसां च सारूप्यं ततोऽप्यधमानां पतितानां च सालोक्यमिति । किंच चतुर्विधेऽत्र क्षेत्रे यथा यथा योगपीठाद्विप्रकर्षस्तथा तथा मरणफलापकर्ष इत्यप्याहुः । नरकागमनं तु सर्वेषामेव ।

नाऽविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥

इतिलैङ्गात् । अयं पक्षस्तु तमेव विदित्वेत्यादिवचनविरोधात्साक्षान्मरणान्मुक्त्यनुपपत्तेरनुपपन्नः । न च मरणादेव मोक्षप्रतिपादकनानापुराणबलात्तमेवेतिवचनं काश्या अन्यत्र सावकाशमिति वाच्यम् । पुराणेन श्रुतिसंकोचासंभवात् । अत्र हि 'जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे' इत्यादिश्रुत्यैव ज्ञानसाधनत्वबोधनाच्च । मरणवचनानां त्वन्तःकरणशुद्धिप्रतिपादनमात्रपरता 'पृथूदकादौ यन्मरणं तदप्यत्यन्तशुद्धिकृत्' इति वार्तिकाचार्योक्तेः । अत्राऽऽदिपदात्प्रयागकाश्यादिग्रहात् । अत्र कश्चित् । काशीमरणस्यान्तःकरणशुद्ध्यावस्तूपयोगः प्रयागमृतिस्तु 'ये वै तन्वां विसृजन्ति धीराः' इत्यादिश्रुतितः साक्षादेव मोक्षसाधनम् । न चात्रामृतशब्दः सुखविशेषपरः, अप्रसिद्धार्थकल्पनापत्तेः । 'सोऽमृतत्वं गच्छति' इतिरामोत्तरतापनीये श्रुतस्यामृतशब्दस्य निरवयवं कैवल्यमाप्नोतीति कैवल्यशब्देन भाष्यकारेण व्याख्यानाच्च । न च धीरपदस्य ज्ञानिपरत्वाद्धीरा ज्ञानिनः सन्तोऽमृतं भजन्त इत्यर्थ इति वाच्यम् । धीरपदेन पण्डितपरेण तीर्थमाहात्म्यज्ञानवतोऽभिप्रेतत्वात् । रात्रिसत्रप्रतिष्ठान्यायेन च विधिकल्पनाच्छ्रुतविध्यभावेऽपि न कश्चिद्दोषः । किंचोत्तरनारायणेनाऽऽदित्यमुपस्थायेत्युपस्थाने विनियोगान्न ज्ञानसाधनविधिः । यद्यपि च स्याद्विधिस्तथाऽपि पदहोमन्यायेन प्रयागातिरिक्तपरः स्यात् । अत एव 'ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वा' इति साक्षादेव विकल्पः श्रुतः ।

तथा—प्रयागे वा भवेन्मुक्तिः काश्यां वा मम संनिधौ ।

पाद्मे—वाराणस्यां विमुच्यन्ते तारकज्ञानभाविताः ॥
विना ज्ञानं प्रयागेऽस्मिन्मुच्यन्ते सर्वजन्तवः ।

इति श्रुतम् । यत्तु 'प्रयागादपि तीर्थाद्यादिदमेव महत्स्मृतम्' इतिवचनं तत्प्रयागे वा भवेन्मोक्ष इह वा मत्परिग्रहात्' इत्युपक्रमवि-

रोधात् 'असत्रं वा एतद्यदच्छन्दोगम्' इतिवद्व्याख्येयम्। वार्तिके तु प्रयागातिरिक्ततीर्थपर आदिशब्दो व्याख्येयः। तस्मात्काश्यां ज्ञानात्प्रयागे मरणान्मुक्तिरिति। वस्तुत एतदनुपपन्नमपि प्रकृतानुपयोगाद्यथा तथाऽस्तु। प्रकृतमनुसरामः। यदुक्तं काशीमरणेनान्तःकरणशुद्धिद्वारा मुक्तिरिति, अत्र पक्षे किं मरणात्पूर्वं तारकोपदेशोऽनन्तरं वा। नाऽऽद्यः। पूर्वमेव तारकोपदेशात्साक्षात्कारोत्पत्तौ पश्चात्तनमरणजन्यान्तःकरणशुद्धेर्व्यर्थत्वात्। न च प्राणवियोगात्मकस्य मरणस्य क्वचिदन्तःकरणशोधकता श्रुता दृष्टा चेत्यलौकिकमेतत्। 'तमेतं वेदानुवचनेन' इत्यादिश्रुत्या यज्ञादीनामेव शोधकत्वावगमात्। किंचानेकजन्मार्जितसुकृतराशेरेव शुद्धचित्तानां काशीमरणसंभवान्न शोधकान्तरापेक्षा। अत एव ब्राह्मे—

> अनेकजन्मसंसिद्धाव(न्व)र्जयित्वा महामुनीन्।
> नान्येषां मरणं तत्र यच्छत्यन्धो विभीषणात्(?)॥

न च काश्यां पापं कुर्वतां पापवासनावशादेवाशुद्धान्तःकरणानामपि काशीमरणदर्शनान्नायं नियम इति वाच्यम्। पूर्वजन्मसुकृतकृतान्तःकरणशुद्धीनामपि प्रारब्धपापकर्मवशाद्रावणादिवत्पापवासनोपपत्तेः। यद्वा कलिदोषादत्र स्थितानामपि पापवासनोपपत्तिः। यद्यपि चात्र साक्षात्कलिप्रवेशो नास्ति तथाऽपि अन्यत्रावस्थितकलिकलुषितवासनावद्भिः पुरुषैः सह वासनाद्वारा कलिप्रवेशः संभवत्येव। अत एव महर्षिप्रश्नः सूतस्य चोत्तरम्—

> काश्यां कलेः प्रवेशो न भवतीति श्रुतं मुहुः।
> अविमुक्तस्थिताञ्जन्तून्बाधते स कलिः कथम्॥
>
> सूतः—साक्षात्कलेः प्रवेशोऽत्र विद्यते न कदाचन।
> वासना प्राणिनां पूर्वा विशत्येव तु तैः सह॥
> शुभा मनःप्रवृत्तिस्तु सत्यमित्याहुरादरात्।
> अशुभा मनसो वृत्तिः कलिसाधुविगर्हिता॥
> पीडयन्न जनानत्र कलिर्विशति मूर्तिमान्।
> तस्य तस्याशुभा बुद्धिः कलिरित्युच्यते नृभिः। इति॥

अपि च तादृशां स्थूलकाशीसंबन्धे दृश्यमानेऽपि पुराणालोचनया प्रायणकाले तत्संबन्धाभाव एवावगम्यते। सत्यपि वा संबन्धे पापवतां

यातनान्ते प्रणवोपदेशान्न तदानीमन्तःकरणशुद्ध्यपेक्षा । तदुक्तं ब्रह्मवैवर्ते काशीं प्रति शिवेन—

पापं कृत्वा क्षेत्रमध्ये मृता ये
तेषां मुक्तिर्यातनान्ते भवेद्धि ॥
धर्मः काश्यां शुद्धिहेतुः प्रदिष्टः
पापं पुनर्मलदुःखाधिमूलम् ॥
तस्मात्प्रतिज्ञा तव सिद्धरूपा
मुक्तिर्भवत्येव मलावसाने ॥

तथा पाद्मे बलिं प्रति सनत्कुमारः—

वाराणस्यां निवसतिरपवर्गफलप्रदा ।
द्विजाणां च पवित्राणां कल्पते सत्वरं बले ॥

तथा—विष्णोऽविमुक्ते संवासः कर्मनिर्मूलनक्षमः ।
द्विजाणां हि पवित्राणां निर्वाणायोपजायते ॥

उप मरणसमये पवित्राणामेव निर्वाणाय जायते पापवतां तु यातनान्त इत्यर्थः । न द्वितीयः । मृतौ सत्यामशरीरं प्रत्युपदेशायोगात् । उत्क्रममाणेष्विति वर्तमानापदेशविरोधाच्च । तस्मात्काशीमरणान्नान्तःकरणशुद्धिः किं तूपदेशजज्ञानद्वारा मोक्ष एव । तथा च पाद्मे—

वाराणसीस्थतीर्थानामवगाहनतः पराम् ।
अन्तःकरणसंशुद्धिमाप्नुयाद्विजितेन्द्रियः ॥

तथा—दैत्येन्द्र शंकरक्षेत्रे गन्तुं कस्य न धीर्भवत् ।
अपवर्गैकफलदे कलेवरपरिक्षयात् ॥

तथा—तादृशस्यात्र दैत्येश शरीरत्यागमात्रतः ।
अपवर्गो भवत्येव तदन्यस्य विलम्बतः ॥

यद्यप्यत्र मरणादेव मोक्षः प्रतीयते तथाऽपि तारकोपदेशादेव मोक्ष इत्यवधेयम् । उपदेशे च केचिदाहुः—'मुमूर्षोर्मणिकर्ण्यन्तर्धोदकनिवासिनः' इत्यादिपूर्वोक्तविशेषणवतस्त्रैवर्णिकस्यैव मोक्षोऽन्यस्य तु सालोक्यादिद्वारा कैवल्यमिति । तन्न । तत्रतत्र जन्त्वादिसाधारणपदश्रवणात् । तथा हि—'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु' इति जाबालोपनिषद्रामतापनीययोर्जन्तूपदेशज्ञानद्वाराऽनुपदम्(?) ।

तथा—वाराणस्यां मृतो वाऽपि इदं वा ब्रह्म योऽभ्यसेत् ।
एकेन जन्मना जन्तुर्मोक्षं च प्राप्नुयादिति ॥

ब्रह्मपुराणे—

म्रियमाणस्य जन्तोश्च वाक्यं कर्णे समुच्चरन् ।
अत्र प्रविष्टमात्रस्य जन्तोः ' इति च ॥

तथा—तत्र स्थितस्य जन्तोर्हि भोगमोक्षप्रदः शिवः ।
अधितिष्ठति जन्तूनां मुक्त्यै क्षेत्रमिदं परम् ॥ इति च ।

आदित्यपुराणेऽपि—

अत्र विश्वेश्वरो देवः सर्वेषामेव देहिनाम् ।
ददाति तारकं ज्ञानं संसारोन्मोचकं परम् ॥

पराशरः—

अत्रैवोत्क्रममाणस्य जन्तुमात्रस्य केवलम् ।

काशीखण्डे—

सर्वाञ्जन्तून्मोचयेदन्तकाले
विश्वेशोऽत्र श्रोत्रमन्त्रोपदेशात् ॥

तथा—आब्रह्मस्तम्बपर्यन्तं यत्किंचिज्जन्तुसंज्ञितम् ।
चतुर्षु भूतग्रामेषु काश्यां तन्मुक्तिमाप्स्यति ॥

तथा—ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसंकराः ।
कृमिम्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ता अविमुक्ते शृणु प्रिये ॥
चन्द्रार्धमौलयः सर्वे ललाटाक्षा वृषध्वजाः ।

इति चण्डालादिकीर्तनम् ।

तथा—अकामो वा सकामो वा तिर्यग्योनिगतोऽपि वा ।
अविमुक्ते त्यजन्प्राणान्मम लोके महीयते ॥

एवमनेकेषु श्रुतिपुराणन्यायो(येषु) वाक्यशेषोपक्रमसंदेहयोरभावात् ।
तदुक्तम्—

संदिग्धं वाक्यशेषेण निर्णयमवधारितम् ।
विध्युद्देशेन निर्णीते किं नु शेषः करिष्यति ॥ इति ।

जन्तुशब्दे को जन्तुरिति संदिग्धत्वं तु महिषीगवादिघृतसंदेहतुल्यत्वादचोद्यम् । तारकोपदेशस्यात्रैवर्णिकपरतेति चेत् । सत्यम् । अस्मदाद्युपदेशे तदतिरिक्तस्यानधिकारः, विश्वेशकर्तृकोपदेशे तु क्षेत्रमहिमेश्वरसाक्षात्काराभ्यां विनष्टाखिलदुरितसंघस्याखिलस्याधिकारः । एतदेवाभिप्रेत्य ब्रह्मवैवर्ते काश्याः क्षेत्रान्तराद्विशेष उक्तः—

जितेन्द्रियाः पापविवर्जकाश्च
शान्ता महान्तो मधुसूदनाश्रयाः ॥
अन्येषु तीर्थेष्वपि मुक्तिभाजो
भवन्ति काश्यामपि को विशेषः ॥

इति दीपकप्रश्ने गुरुणोत्तरितम्—

विशेषं शृणु वक्ष्यामि काश्याः कथयतो मम ।
कृतानि साधनान्यत्र स्वल्पान्यपि महामते ॥
भवन्ति काशीमाहात्म्यात्सिद्धान्येव न संशयः ।
अन्यत्र साधु सुकृतैः कृतैर्मुच्येत वा न वा ॥
अत्र साधनवैकल्ये काशी पूर्णं प्रकल्पयेत् ।

ततश्च साधनसंपत्तिमतामधिकारिणां काश्यतिरिक्तेऽपि मुक्तिः काश्यां त्वन्येषामपि मुक्तिरित्याशयः । ब्रह्मवैवर्तेऽपि—

कलिकालस्त्वयं तीक्ष्णः क्व नयः क्व परात्मदृक् ।
काश्येव शरणं तेषां शुद्धिदा मलिनां नृणाम् ॥
कलौ विनष्टव्रतधैर्यवीर्या
गच्छन्तु काशीं परमार्थराशिम् ॥ इति च ।

काशीखण्डे—

संसारभयभीता ये ये बद्धाः कर्मबन्धनैः ।
येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥
श्रुतिस्मृतिविहीना ये शौचाचारविवर्जिताः ।

येषामिति पूर्ववत् । तथा तत्रैव—

सौभाग्यभाग्यभूर्या वै विख्याता मणिकर्णिका ।
ददामि तस्यां सर्वस्वमग्रजायान्त्यजाय च ॥

महासमाधिसंपन्नैर्वेदान्तार्थनिषेविभिः ।
दुष्प्रापोऽन्यत्र यो मोक्षः शोच्यैरप्याप्यतेऽत्र सः ॥
दीक्षितो वा दिवाकीर्तिः पण्डितो वाऽप्यपण्डितः ।
तुल्यास्ते मोक्षदीक्षायां संप्राप्य मणिकर्णिकाम् ॥
ददामि जन्तुमात्राय सर्वस्वं चिरसंचितम् ।

पाद्मे रविणा 'तीर्थतीराणि क्षेत्राणि विष्णुभक्तिश्च नारद' इत्याद्युक्त्वा—

साक्षाद्वाराणसी मुक्त्यै विष्णोर्भक्तिस्तथाविधा ।
तथाऽपि विष्णुभक्तिस्तु द्विजैरेव विभाव्यते ॥
काशी तु तिर्यग्भूतानामपि साधारणी मता । इति ।

ब्रह्मवैवर्ते—

ये वा द्विजाद्याः श्वपचाश्च निन्द्या
ये चक्रवर्तिष्वपि धर्मरूपाः ॥
ये वा दरिद्राः परमार्तिभाजः
समानरूपां गतिमाप्नुवन्ति ॥

अत एव पद्मपुराणे वर्णान्तराणामधिकारसंपादनमुक्तम्—

गणयति न कथंचिच्छंकरः काशिकाया-
मयमिह मम भक्तो ब्राह्मणः पुल्कसो वा ।
उपदिशति सदाऽन्ते वाक्यमेकात्मनिष्ठं
द्विजकुलनिरपेक्षो भाव्य तत्राधिकारम् ॥

भाव्य संपाद्य ।

तथा—पुमांसं क्षीणकलुषं शंकरस्तारकं वचः
श्रावयामास विधिवत्संपाद्याधिकृतिं पराम् । इति ॥

इदं चाधिकारसंपादनं नीचेष्वनधिकारिष्वेव संभाव्यते द्विजानां स्वत एवाधिकारसत्त्वेन संपादनानर्थक्यात् । न चैतत्सर्वमर्थवादः । स्तेनं मन इत्यादिवच्छास्त्रदृष्टविरोधाद्यभावात्, जुह्वादिवत्पारार्थ्याभावाच्च । तदुक्तं काशीखण्डे—

यत्र विश्वेश्वरः साक्षाद्यत्र स्वर्गतरङ्गिणी ।
मिथ्या तत्रानुरूपन्ते तार्किकाश्चा(श्य)नसूयकाः ॥

उदाहरन्ति ये मूढाः कुतर्कबलदर्पिताः ।
काश्यां सर्वोऽर्थवादोऽयं ते विट्कीटा युगे युगे ॥

ब्रह्मवैवर्तेऽपि—

मा जानीह्यर्थवादस्त्वमात्मतत्त्वविनिर्णये ।

तस्मात्सर्वस्यापि काश्यां मरणान्मुक्तिरिति सिद्धम् । अयं तु विशेषः—स्वस्वधर्मनिरतस्य पापरहितस्य सर्वस्याप्यनन्तरमेव मोक्षः, उभयविलक्षणस्य तु यातनान्तेऽधिकारसंपादनेनेति । तदुक्तम्—

स्वे स्वे कर्मणि निष्णातानुत्तमाधममध्यमान् ।
अधर्मानपि मार्गस्थान्नयामि परमां गतिम् ॥
पण्डितो वाऽथ मूर्खो वा मुखजो वाऽन्त्यजोऽपि वा ।
अस्मिँल्लिङ्गे त्यजन्प्राणान्धर्मकृन्मुक्तिमाप्नुयात् ॥
स्वधर्मनिरतस्यैव हीनस्याप्युत्तमस्य वा ।
समाना गतिरुद्दिष्टा वाराणस्याः प्रभावतः ॥
केवलं धर्मसापेक्षः कर्णे जपति तद्वचः ।
अधर्मिष्ठस्य तत्क्षेत्रे यातनान्ते दिशेन्मतिम् ॥ इति च ।
अत्र विश्वेश्वरः साक्षात्तारकं मुक्तिसाधनम् ।
यस्य कस्यापि कर्णान्ते धर्मापेक्षोऽनुशंसति ॥ इति च ।

अधिकारसंपादनमप्युक्तं काशीखण्डे दण्डपाणिं प्रति शिवेन—

त्वमन्त्यभूषां कुरु काशिवासिनां
गले सुनीलां भुजगेन्द्रभूषणाम् ॥
भाले सुनेत्रां करिकृत्तिवाससं
वामेक्षणालक्षितवामभागाम् ॥
मौलौ लसत्पिङ्गकपर्दभारिणीं
विभूतिसंक्षालितपुण्यविग्रहाम् ॥
अहो हिमांशोः कलया लसच्छ्रियं
वृषेन्द्रलीलामतिमन्दगामिनीम् ॥
आनीय भक्तान्क्षणतोऽपि दूरतो
मुक्तिं परां दापयिताऽसि पिङ्गल ॥ इति ।

नन्वधिकारसंपादनमिह देहे देहान्तरे वा । नाऽऽद्यः । चण्डालादिदेहे ब्राह्मणत्वाद्यसंभवात् । पापिनो यातनान्ते तच्छरीरासंभवाच्च ।

नान्यः। शरीरान्तरे मुमूर्षुत्वासंभवेन मुमूर्षोर्दक्षिणे कर्णं इति बाधप्रसङ्गादिति चेत्। मैवम्। शरीरान्तरेऽपि मुमूर्षुत्वानपायात्। तत्पाते सत्येव कैवल्यसंभवात्। देहान्तरेऽपि च योगिवदभिमानसंभवात्। अस्तु वाऽत्रैव देहेऽधिकारसंपादनं चण्डालादेः। विश्वेशानुग्रहाच्च विश्वामित्रत्रिशंकोरिव जात्यन्तरस्यापि तद्देह एव द्विजत्वसंभवात्। ननु यथा स्मृत्या श्रुतिबाधायोगादत्र हि जन्तोरित्यादिजन्तुपदवच्छ्रुत्यसंकोचाय त्रैवर्णिकातिरिक्तस्यापि मुक्तिरङ्गी क्रियते तथा 'मुमूर्षोः प्राणेषूत्क्रममाणेषु' इत्यादिश्रुतेः 'यातनान्ते दिशेन्मतिम्' इत्यादिस्मृत्यनुरोधात्पातकिव्यक्तिरिक्तविषयताख्यसंकोचरूपबाधायोगात्प्रत्युतासति ह्यनुमानमिति न्यायेन श्रुत्यनुरोधेन पुराणाख्यस्मृतेरेव बाधस्योचितत्वादर्थान्तरपरताया वोचितत्वात्स्वप्ने मनोरथे वा देशान्तरे कालान्तरे वा छिन्नवर्षशतसहस्रादिभोगाभिमानवत्पापिनः प्राणोत्क्रमणक्षण एव त्रिंशद्वर्षसहस्रावच्छिन्नयातनाभोगाभिमानमङ्गीकृत्य सर्वेषां प्रायणक्षणानन्तरमेव मुक्तिरङ्गी क्रियतामिति चेत्। मैवम्। पाद्मे क्रमेलकशूद्रोपाख्याने—

क्रमेलकस्तु मूषायां ध्मातो वर्षसहस्रकम्।
तावत्कालं शीतह्रदे बुभुजे दुःखमुत्कटम्॥
ततो निर्जलनिर्भक्ष्ये कृमिदेहधरोऽभवत्।
तत्रैव सारमेयोऽभूद्गलन्मांसः सुदुःखितः॥
त्रिंशत्त्रिंशत्समाः पश्चात्तावत्कालं गजोऽभवत्।
ततः संकीर्णयोनीनि शरीराणि व्यधारयत्॥
अथ शूद्रशरीरं तद्दध्रे तत्र क्रमेलकः।
ततो भैरवदूतैस्तैः स नीतो भैरवाग्रतः॥
कालभैरवदृष्ट्यैव रुद्रपैशाच्यमाप्तवान्।
त्रिंशद्वर्षसहस्राणि क्षुत्तृष्णाभ्यां विवर्जितः॥

इत्यादिक्रमिकभोगप्रतिपादकवचनानां दत्तजलाञ्जलिताप्रसङ्गात्। अभिमानपरतया व्याख्याने तु तथैव वक्तव्यत्वात्। तस्य तावद्दुःखानुभवाभिमानेऽस्मान्प्रति क्षणत्वस्याविशेषकरत्वात्। यदाहवनीये जुहोतीत्यादिश्रुतेः स्मार्ताग्निहोमविधायकादिस्मृत्या संकोचदर्शनात्। यातनान्ते शरीरान्तरेऽपि मुमूर्षुत्वप्राणोत्क्रममाणत्वयोः श्रौतयोर्वक्तुं शक्यत्वाच्च।

न च काशीमृतस्य क्रमेलकस्य कथं नानाजन्मप्राप्तिरिति वाच्यम्। योनिजदेहासंभवेऽपि भैरवेच्छावशाद्यातनायोग्यायोनिदेहसंभवात्। अत एव कृमिदेहधरोऽभवदित्याद्येव श्रुतं न तु योनिः। तदुक्तं पाद्म ऋषिभिरेतस्यामेव शङ्कायां कृतायां भृगुणा—

> तत्तद्भोगप्रापणायैव देहा
> अयोनिजा भैरवेच्छाविधानाः। इति॥
> यथा याम्ये हि नरके यातनादुःखभागिनः।
> अयोनिजाता देहाः स्युस्तद्वदत्रावधार्यताम्॥ इति च।

तस्मात् ' अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु ' इत्यादिजाबालोपनिषदादिश्रुतिबलात्काश्यां जन्तुमात्रस्य मुक्तिरिति सिद्धम्। केचित्त्विमां श्रुतिमन्यथा व्याचक्षते। तथा हि—अत्र देहे वर्तमानस्य जन्तोः विवेकराहित्येन विषयमात्राकृष्टान्तःकरणवृत्तेर्जीवस्य प्राणेषु प्राणोपलक्षितेष्विन्द्रियेषु पूर्वार्जितपुण्यवशादुत्क्रममाणेषु स्वविषयेभ्य [:] उद्गच्छत्सु पराङ्मुखेषु। अनेन साधनचतुष्टयसंपत्तिरुपक्षिप्ता। ततश्च साधनचतुष्टयोपेते मुमुक्षावुपसन्ने सति यथा रुद्रस्तृतीयं नेत्रमाविर्भाव्य जगत्संहरत्येवं विद्वानाचार्य ऐकात्म्यसाक्षात्कारमाविर्भाव्य सविलासामविद्यां संहरतीति गौण्या वृत्त्या रुद्र आचार्यः। तारयत्यात्मतत्त्वज्ञापनेनेति तारकं तत्त्वमस्यादिमहावाक्यरूपं वेदवाक्यम्। व्याचष्टे शिष्येण शब्दत आपाततोऽर्थतश्च गृहीतमपि विशेषेण शोधिततत्त्वंपदार्थैक्यप्रतिपादकत्वेन कथयति। येन व्याख्यानेनासौ जन्तुरमृती ब्रह्मामृतं तदस्यास्तीत्यमृती,'उपाधिनाशाद्ब्रह्मरूपो भूत्वा। मोक्षी कर्तृत्वादिबन्धापगमो मोक्षस्तद्वान्भवति। अपरोक्षभ्रमनिवर्तकमपरोक्षसाक्षात्काररूपमेव ज्ञानं महावाक्याद्भवतीति भाव इति। इदं त्वयुक्तम्। एतस्य व्याख्यानस्य काशीविषयत्वे विरोधात्—

> यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः।
> व्याचष्टे तारकं ब्रह्म संसारान्मोचकं परम्॥
> यत्र विश्वेश्वरो देवः सर्वेषामेव देहिनाम्।
> ददाति तारकं ज्ञानं संसारान्मोचकं परम्॥

इति कूर्मादित्यपुराणवाक्याभ्यामन्यैश्च पूर्वोदाहृतवाक्यैः शिवस्यैवोपदेशकत्वश्रवणान्मुख्यार्थे बाधकाभावाच्च श्रुतार्थपरित्यागाश्रुतार्थकल्पनयोरसंभवात्। किं च—

आचष्टे तारकं ब्रह्म राममन्त्रं षडक्षरम् ।

भवानीवल्लभः साक्षात् । इति स्ववचनविरोधः । तारकं दीर्घानलं बिन्दुपूर्वकमित्यादिना च षडक्षरस्यैव व्याख्यानान्महावाक्यपरताऽनुपपन्ना । गुरूपदेशस्य क्षेत्रान्तरेऽपि संभवादविमुक्तस्य को विशेषो येनाविमुक्तमेव निषेवेतेत्यवधारणं क्रियते । सदाशिवोपदेशाज्जन्मान्तरं मनुष्योपदेशाच्च मोक्ष इत्याश्चर्यम् । क्षेत्रान्तरसाधारण्ये तु रुद्राविमुक्तादिशब्दानां लब्धात्मकरूढिपरित्यागेनात्यन्तक्लिष्टयोगकल्पनादनल्पमेवाज्ञानमापद्यते । एतदपि कृमिकीटादयोऽप्याशु मुक्ताः सन्तु न चान्यथेत्यत्र विचारितम्—

कृमिकीटाश्रया मुक्तिस्तत्र किं क्षेत्रवासतः ।
किं वा क्षेत्रकृतैर्धर्मैः किं वा क्षेत्रमृतेरथ ॥
सदाशिवकृताद्धर्माज्जपहोमार्चनाभिधात् ।
किं वा श्रीरामसंकल्पादुपायपरिवर्जितात् ॥
अथात्र क्षेत्रे मरणान्मानुष्यं प्राप्य शोभनम् ।
शमादिसंपत्तियुताः शास्त्राचार्योपदेशतः ॥
आसाद्यैकात्म्यविज्ञानं मुक्ताः स्युः कृमिकीटकाः ।

नाऽऽद्यो रुद्रकृतमन्त्रोपदेशवैयर्थ्यापत्तेः । न द्वितीयस्तेषां तदसंभवात् । न तृतीय आद्योक्तदोषात् । अभावरूपमरणेन तदसंभवाच्च ।

चतुर्थो भक्तिमात्रकग्राह्यो न मितिमुक्तितः ।
धर्मशक्तिविचारे हि नायमर्थः प्रकाशते ॥
न पञ्चमो यदा रामः स्वीयसंकल्पमात्रतः ।
उपायरहितां कुर्यान्मुक्तिं कीटादिसंश्रयाम् ॥
किं कर्तव्यं क्व गन्तव्यं तदा कः शरणं भवेत् ।
श्रौतमन्यथयत्यर्थं स्वेच्छया परमेश्वरम् ॥
यो ब्रह्म वेद स ब्रह्म भवतीत्यस्ति हि श्रुतिः ।
ब्रह्मवित्परमाप्नोतीत्यादि च श्रुतिशासनम् ॥
बाधितं स्याद्यदैतस्याः श्रुतोऽर्थः परिगृह्यते ।

तस्मादन्तिम एव स्यात्पक्षः सर्वमनोहर ॥ इति ।

तत्रोच्यते—अत्र मृतस्य श्रीरामसंकल्पमात्रादाविर्भूताधिकारिशरीरस्य विश्वेश्वरकृततारकोपदेशस्य मुक्त्यङ्गीकारे कस्याश्चिच्छ्रुतेरबाधात्

'कृमिकीटादयोऽप्याशु मुक्ताः सन्तु' इतिवाक्यादधिकारिशरीराविर्भाव-स्तारकोपदेशश्च न प्रतीयत इति चेत्तर्हि मरणान्मानुषदेहप्राप्तिस्ततः शमादिसंपत्तिगुरूपदेशविज्ञानानीत्यपि न प्रतीयते । अथ वाक्यान्तरवशादेवं कल्पना । हन्त जन्माभावप्रतिपादकबहुवाक्यवशाच्छ्रुतार्थापत्त्याऽस्मत्पक्षकल्पनाऽप्यविरुद्धा जन्मान्तराङ्गीकृतावाशुशब्दानुपपत्तिश्च। यत्तु कश्चित्कृम्यादीनां मरणमात्रादेव मोक्षः । न चोपायाभावः । स तदैव कृतजपादिकाशीमरणश्रीरामसंकल्पानामेवोपायत्वात् । शिलाचैतन्यायोध्याजनसांतानिकलोकप्राप्तिमृतब्राह्मणपुत्रजीवनवच्छ्रीरामसंकल्पमात्रस्यैव संसारानिवर्तकत्वोपपत्तेस्तेषां तूपदेशयोग्यता तद्विषयं 'मुमूर्षोर्दक्षिणे कर्णे' इति वचः । न चाल्पभूयोविरोधन्यायः । तापनीयवाक्यस्य क्षेत्रविशेषविषयत्वात् । उपदेशवाक्यानामेव यत्किंचित्प्राचीनमग्नीषोमीयादितिवदन्याविषयताकल्पनादिति । तन्न । अबाधेन गतिसंभवे ज्ञानादेव हि कैवल्यमित्यादिवागयोगात् । मुमूर्षोरित्यादेर्विना कारणं संकोचानुपपत्तेश्च । यदप्युच्यते स मुक्तो भवितेतिनिर्देशान्मानुषदेहोत्पत्तिगुरूपदेशादिक्रमेणैव मोक्ष इति सूचितमिति तदप्ययुक्तम् । श्रीरामशिवयोः संवादावसरे कस्यचित्कर्णोपदेशाभावाद्भवितेति प्रयोगोपपत्तेः । तस्मान्न कश्चिद्दोषः । यद्यपि च क्षेत्रमात्रे तारकोपदेशादविशेषेण श्रूयते तथाऽपि क्षेत्रविभागवशात्तारतम्यम् । तदुक्तं पाद्मे—

चतुर्धा वितते क्षेत्रे सर्वत्र भगवाञ्शिवः ।
व्याचष्टे तारकं वाक्यं ब्रह्मात्मैक्यप्रबोधकम् ॥
तथाऽपि तत्तत्सामर्थ्यात्तत्र तत्र मृतस्य हि ।
भोगपूर्वाऽपवर्गाप्तिर्जीवन्मुक्तिदशैव सा ॥
अन्तर्गेहे विपन्नस्तु साक्षात्कैवल्यमाप्नुयात् ।

तथा—चतुर्विधेऽपि क्षेत्रेऽस्मिन्प्रभीतो गर्भयातनाम् ।
नैवाऽऽप्नोति मुनिश्रेष्ठा विशेषोऽयं ब्रवीमि वः ॥
काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमः ।
ततः सरूपतां याति ततः सांनिध्यमश्नुते ॥
ततो ब्रह्मैकतां याति न परावर्तते पुनः ।
वाराणस्यां मृतो जन्तुः साक्षात्सारूप्यमश्नुते ॥

ततः सांनिध्यमायाति ततो ब्रह्मैकतामियात् ।
अविमुक्तविपन्नस्तु साक्षात्सांनिध्यमाप्नुयात् ॥
ततश्चिदानन्दमये ब्रह्मण्येव विलीयते ।
सलोकतां च सारूप्यं सांनिध्यं चापि सत्तमाः ॥
कल्पं कल्पमवाप्नोति ततो ब्रह्मात्मको भवेत् । इति ।

यद्यपि—

कीटाः पिपीलिकाश्चैव ये चान्ये पक्षिणस्तथा ।
कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥
चन्द्रार्धमौलयस्त्र्यक्षा महावृषभवाहनाः ।
शैवे मम पुरे देवि जायन्ते तत्र मानवाः ॥

इति तत्सारूप्यविषयम् ।

अविमुक्ते त्यजन्प्राणान्मम लोके महीयते ।
आ देहपतनाद्ये तु क्षेत्रं सेवन्ति मानवाः ॥
ते मृता हंसयानेन दिवं यान्त्यकुतोभयाः ।

इत्यादीनि तु सलोकताविषयाणीति सर्वमनवद्यम् ॥

इति श्रीमद्विद्वन्मुकुटमाणिक्यदाक्षिणात्यालंकारश्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ काशीप्रकरणे तन्मरणान्मुक्तिविचारः समाप्तः ।

---

समाप्तं काशीप्रकरणम् ।

---

## अथ गयाफलादिविचारः ।

वादीमयुक्तिकुम्भस्थलदलनाकुण्ठमाननखगर्भात् ।
विकिरन्प्रमेयमुक्ता विद्यावनकेसरी गुरुर्जयति ॥ १ ॥
नत्वाऽखिलोद्धारधुरंधरं परं गदाधरं बुद्धिविशुद्धिसाधकम् ।
संदेहमुत्सार्य विचार्य सादरं मया गयाकार्यमुदीर्यतेऽधुना ॥ २ ॥
सुतादिकर्तृकं यस्यां श्राद्धं श्रद्धासमेधितम् ।
पित्राद्युद्देश्यफलदं सा गया यागतोऽधिका ॥ ३ ॥

ननु पुत्रादिकर्तृकाच्छ्र(च्छ्रा)द्धोद्देश्यपित्रादिषु स्वर्गादिफलं भवतीत्यनुपपन्नं कर्मभिः कर्तर्येव फलजननात् 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' [ जै० सू० ३।७।८।१८ ] इति तार्तीयन्यायात् । अन्यथाऽतिप्रसङ्गात् । यद्यपि च जातेष्टाविवाकर्तर्यपि फलमुच्येत । तथा[ऽपि] पित्रादीनां देवतात्वात्तस्यां च कर्मणा फलाजननात्तज्जनने वा तस्या अधिकारित्वापाताद्देवतात्वाभावापत्तेरुभयरूपतायां च फलभाक्त्वेनाधिकारितया कर्म प्रति प्राधान्याद्देवतात्वेन च तत्प्रत्येव गुणत्वादेकप्रतियोगिकैकनिष्ठगुणप्रधानभावरूपवैरूप्यस्य च वाजपेयाधिकरणन्यायेनासंभवाज्जातेष्टौ पुत्रस्य देवतात्वाभावेनैतेषां विरोधानामभावादकर्तृनिष्ठफलजनने च कर्तुरप्रवृत्त्यापत्तेर्विधेः कर्तृसमीहितसाधनतावगमकत्वप्रवर्तकत्वव्याघातात्स्वगतफलान्तरार्थप्रवृत्तौ च तावतैव प्रवर्तकतानिर्वाहात्पित्रादिगतफलाभावापत्तेरन्यतरेण चोपपन्ना(त्ता)वुभयगतफलाङ्गीकारकल्पनाक्लेशायोगात्पितृगतफलश्रुतेरर्थवादतयाऽप्युपपत्तेरकर्तृगामित्वे च फलस्य 'गयां गत्वा प्रकुर्वीत श्राद्धं पुत्रः समाहितः' इत्यात्मनेपदानुपपत्तेरनुपपत्तिरेव । यदा च शास्त्रफलशब्देनापूर्वं व्याख्यायते तदाऽप्यपूर्वस्य प्रयोक्त्राख्यकर्तृगामित्वात्फलाङ्कुरावस्थाया एवापूर्वत्वादपूर्वफलयोश्च सामानाधिकरण्यनियमादन्यथाऽन्यत्रापूर्वमन्यत्र फलमित्यतिप्रसक्तेर्न गयाश्राद्धात्पित्रादिनिष्ठफलोत्पत्तिरिति चेदत्रोच्यते । यथा 'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव सः' इति शास्त्रवशात्तार्तीयन्यायं बाधित्वा कर्तर्यपि पुत्रे फलमेवमत्रापि वक्ष्यमाणनानापुराणवचनवशात्पित्रादिषु फलोत्पत्तिः 'फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात्' [ जै०सू० ४।३।१७।२८ ] इति चातुर्थिकन्यायात् । न चातिप्रसङ्गादि शास्त्रस्यैव नियामकत्वात् । देवतासंस्कारकैश्चाऽऽवाहनादिभिर्देवतायामपि संस्काराख्यफलजननात् । प्रधानफलस्यापि वचनात्तद्गामिता नास्ति वचनस्यातिभार इति न्यायात् । वचनाच्चोभयरूपता यागादिकर्तरीष्टेव कर्तृतया गुणभावात्फलित्वेन च प्राधान्यात् । न च वैरूप्यम् । सकृदुच्चारणे हि तत् । असकृदुच्चारणे त्वेकस्यापि यागकर्तुरिव तन्न विरोधाय । सकृदुच्चारणेऽपि क्वचिदध्ययनविध्यादौ स्वाध्यायस्याध्ययनं प्रति संस्कार्यत्वादर्थज्ञानं प्रति च गुणभावात्तदङ्गी क्रियते किमुतासकृदुच्चारणे । न च विधेः प्रवर्तकताव्याघातः । आरब्धसत्रकमृतयजमानप्रतिनिधीभूतपुत्रादिवज्जातेष्टौ च

पितृवदन्यफलस्यापि कर्तृसमीहितत्वे तत्साधनताबोधनेन प्रवर्तकतोपपत्तेः। अत एव कर्तृप्रवृत्तिरप्युपपन्ना। न चाऽऽत्मनेपदानुपपत्तिः। न हि कर्तृसमवेतता कर्त्रभिप्रायता। आधानजन्याहवनीयत्वादिफलस्याग्निसमवेतत्वेनाग्निमादधीतेत्यात्मनेपदानुपपत्तिप्रसङ्गात्। किंतु कर्तृसमीहितत्वम्। तथा च जातेष्ट्या पुत्रगतपूतत्वादिजननेऽप्यग्निसाध्यकर्मजन्यफलस्याऽऽत्मीयताबोधकाधानवाक्यगतात्मनेपदवदत्रापि तदविरोधः पितृगतफलस्यापि कर्तृसमीहितत्वात्। किंच न चात्र पुत्रब्रह्मवर्चसादिफलमपि तु स्वपुत्रब्रह्मवर्चसादि तच्च कर्तुरेव भवतीति तन्त्ररक्तो(त्नो)क्तरीत्या पूतपुत्रकृ(क)त्ववदुद्धृतपितृकत्वस्यापि कर्तृफलत्वादात्मनेपदाविरोधः। तस्माद्वचनवशाच्छ्राद्धफलस्य पित्रादिगतत्वेन काम्यमानत्वात्तत्रैवोत्पत्तिः। अपूर्वं तु केचिदाहुः कर्तर्येवेति। 'यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति' इतिवार्तिकाद्यागशक्त्यात्मकस्यापूर्वस्यान्तरङ्गतया क्रियाश्रय एव जननात्, विहितक्रियया कर्तर्येवादृष्टमिति नियमाच्च। विहितक्रियया कर्तर्येव फलमिति नियमो हि वचनेनापोद्यतेऽदृष्टे तु तन्नास्ति। श्येनजन्यवैरिमरणवत्कर्तृगतादृष्टेनैव व्यधिकरणकार्योत्पत्तिमात्रबोधनेन वचनोपपत्तेरपूर्वस्य क्रियावैयधिकरण्ये तात्पर्याभावात्। वचनाच्चापूर्वफलयोर्वैयधिकरण्यं तत एव नातिप्रसक्तिरपि। न चासंबद्धकार्योत्पत्त्यापत्तिः। अदृष्टवतो व्यापकतया वैरिदेश इव पितृदेशेऽपि सत्त्वात्संबन्धसंभवात्। न च काशीमरणादिना पुत्रापवर्गे तददृष्टनाशात्पितुर्न स्वर्गः स्यादिति वाच्यम्। अदृष्टस्य फलनाश्यतया पितृस्वर्गाभावे [ना]शानुपपत्तेः। स्वगतभोगजनकादृष्टस्यैव मुक्तिविरोधित्वादिति। अन्ये तु फलवत्यपूर्वमिति। 'सूक्ष्मशक्त्यात्मकं वा तत्फलमेवोपजायते' इतिवार्तिकात्फलाङ्कुरावस्थाया एवापूर्वत्वात्फलस्य च वचनात्पितर्युत्पत्तेः। विहितक्रिया कर्तृगतव्यापारद्वारा फलजनिकेत्युत्सर्गोऽप्यत एव बाध्यते। यस्त्वन्तरङ्गतया फलोपपादकत्वाच्च फलाश्रये तत्कल्पनमिति तन्न। साधनान्तरङ्गतया साधनतोपपादकतया च कर्तृगतत्वस्यापि सुवचत्वेनास्याविशेषकत्वात्। तस्मादुक्तयुक्त्यैवापूर्वं कर्तरि फलिनि वा फलं तु वचनात्पित्रादिष्विति। पित्रादिस्वर्गकामपुत्रादिकृतकूपाराममहादानादिष्वप्ययमेव न्यायः। नन्वीदृशेषु यदि पित्रादिगतं फलं तर्हि काशीमरणादिना पूर्वमेव मुक्ते पितरि साङ्गस्यापि वैदिककर्मणो वैफल्यापत्तिः। अत्र केचित्—फलिगतादृष्टो-

त्पत्तिपक्षे मुक्ते पितरि दोषाभावात् । योगिष्विव विहितक्रियाऽपि नादृ-
ष्टजनिकाऽदृष्टोत्पत्तौ स्वरूपसतो दोषस्याङ्गस्य वैगुण्यात् । यथा विघ्नहेतु-
दुरितशून्येनानुष्ठितं मङ्गलं दुरितध्वंसं न जनयति स्वरूपसतो दुरितस्या-
ङ्गस्याभावादिति । तन्न । अङ्गत्वावेदकश्रुत्याद्यभावात् । दुरितध्वंसे तु
ध्वंसस्वाभाव्यादेव प्रतियोगितया तदपेक्षा । अस्तु वा पूर्वोत्पत्तावङ्गता
तथाऽपि कर्माङ्गत्वाभावात्साङ्गकर्मणो नैष्फल्यं को वारयेत् । कर्तृगता-
पूर्वपक्षे चानुपपत्तिस्त[ द ]वस्तथै( स्थै )व । अतोऽन्य एवमाहुः—
काम्येऽबाधितार्थविषयकामनाऽधिकारितावच्छेदिका मुक्ते च स्वर्गादि-
कामनाया बाधितविषयत्वादनधिकारिकृतत्वादेव वैफल्यं न दोषाय,
एतच्छरीरावच्छेदेन स्वर्गार्थतया गवि मनुष्योत्प[ त्य ]र्थतया वा
सर्वकामावाप्तिसाधनदर्शपूर्णमासानुष्ठानवत् । यद्वा फलावश्यंभावनिश्च-
यात्मकश्रद्धायाः कर्माङ्गत्वादिह वा बाधादेव तदसंभवादनङ्गकत्वादेव
फलाभावः । उत्पन्नतत्त्वज्ञानैरनुष्ठितकर्मस्वप्येषैव गतिरिति । इदं तु
समाधानद्वयमपि गयाश्राद्धे न युक्तं काशीमरणादिना मुक्तपितृकाणां
गयाश्राद्धाननुष्ठानापत्त्या सकलशिष्टाचारविरोधप्रसङ्गात् । तस्मान्मुक्तेऽ-
पि पितरि सति कामे कर्तृफलं पुत्रादिप्रत्यवायनिराकरणं च सर्वेषां
गयाश्राद्धप्रयोजनमिति समाधिः । ननु कथं प्रत्यवायाभावार्थता सर्व-
वचनेषु फलश्रवणादिति चेत् । उच्यते—पित्रृणापाकरणस्याऽऽवश्य-
कत्वात् 'गयायां पिण्डदानेन पितॄणामनृणो भवेत्' इति वचनाच्च
गयाश्राद्धस्य तदर्थत्वादावश्यकता ।

जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् ।
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥

इतिवचनेऽप्यृणापाकरणाख्यपुत्रकार्यकारिता पुत्रताशब्दलक्षिता प्रयो-
जनं गम्यते । 'गयां गत्वाऽन्नदाता यः पितरस्तेन पुत्रिणः' इत्यत्राप्येव-
मेव । तस्मात् 'ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगात्' इतिपा-
ठन्यायेनाऽऽवश्यककर्मानुष्ठानार्थार्थज्ञानाख्यप्रयोजनद्वारेणाध्ययनस्येव
गयाश्राद्धस्यापि प्रयोजनद्वारेण नित्यता । अत एव कौर्मे—

तस्मात्सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ।
प्रदद्याद्विधिवत्पिण्डान्गयां गत्वा समाहितः ॥

इत्यावश्यकतोक्ता । अकरणे निन्दाऽपि तत्रैव—

गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति ॥
शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥ इति ।

तस्माद्गयाकृत्यं पुत्रस्य नित्यम् । अत एव यथाशक्त्यनुष्ठेयं नित्ये यथा शक्नुयादित्युपबन्धात् । तत्रापि सकृत्करणमेव नित्यं तावतैव शास्त्रार्थ-सिद्धेरावृत्तिबोधकवीप्साद्यभावाच्च । चातुर्मास्यवत्पुनः करणे तु फला-धिक्यं तद्वदेव न त्वावश्यकता । 'सकृद्गयाभिगमनं सकृत्पिण्डप्रपा-तनम्' इत्यादिवचसोऽप्याद्यस्याऽऽवश्यकत्वार्थं न तु द्वितीयादेर्निवार-णार्थं परिसंख्यापत्तेः । तत्रापि प्रथमयात्रायां येषां प्रेतत्वनिवृत्त्यर्थं प्रेतशि-लायां पिण्डदानं भाण्डस्फोटनं च कृतं तेषां द्वितीययात्रायां न कार्यम् । तदनन्तरमृतानां तु कार्यमेव । इतरच्च सर्वं सर्वेषां कार्यमिति शिष्टाचारः । तस्मादमुक्ते पित्रादौ नरकोद्धारस्वर्गब्रह्मलोकावाप्त्यादि यथायथं फलं मुक्ते तु पित्रादौ प्रत्यवायाभावः । सत्यां कामनायां पुत्रादि च वक्ष्य-माणं कर्तृगतं फलं भवतीति सिद्धम् ।

इति नारायणभट्टविरचिते त्रिस्थलीसेतौ गयाफलादिविचारः ।

अथ सामान्यतो गयाप्रशंसा ।

बृहस्पतिः—

काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान्संतारयिष्यति ॥
गङ्गायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ।
गयाशीर्षाक्षयवटे पितॄणां दत्तमक्षयम् ॥
ब्रह्मारण्यं धेनुपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि पितॄंश्चाऽऽर्च्य वंश्यान्विंशतिमुद्धरेत् ॥

वामनपुराणे—प्रेतराजः कंचिद्वणिजं प्रत्याह—

गयायां तीर्थजुष्टायां स्नात्वा शौचसमन्वितः ।
मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु ॥
तत्र पिण्डप्रदानेन प्रेतभावादहं सखे ।
मुक्तस्तु सर्वदातॄणां यास्यामि शुभलोकताम् ॥

इत्येवमुक्त्वा वणिजं प्रेतराजोऽनुगैः सह।
स्वनामानि यथान्यायं सम्यगाख्यातवान्स्वहः॥
उपार्जयित्वा प्रययौ गयाशिरमनुत्तमम्।
पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वशः॥
चकार च स्वदायादान्पितृंश्चक्रे त्वनन्तरम्।
आत्मनश्च महाबुद्धिर्महाबो( म्भो )धौ तिलैर्विना॥
पिण्डनिर्वपणं चक्रे तथाऽन्यानपि गोत्रजान्।
एवं दत्तेषु पिण्डेषु वणिजो प्रेतभावतः॥
विमुक्तास्ते द्विजाः प्राप्य ब्रह्मलोकं च ते गताः।

एवं च गयाशिरसि पिण्डदानस्य प्रेतत्वविमुक्तिर्ब्रह्मलोकावाप्तिः फलमिति तात्पर्यम्। तत्रैव प्रह्लादतीर्थयात्रायाम्—

गयायां गोपतिं द्रष्टुं स जगाम महासुरः।
सरसि ब्रह्मणः स्नात्वा कृत्वा चैव प्रदक्षिणम्॥
पिण्डनिर्वपणं पुण्यं पितॄणां स चकार ह।

महाभारते—आङ्गिरसतीर्थयात्रायाम्—

मुण्डपृष्ठे ग[ या ]यां च नैर्ऋ[ ते ]देवपर्वते।
तृतीयं क्रौञ्चपद्यां च ब्रह्महत्या विमुच्यते॥

तथा बलभद्रतीर्थयात्रायाम्—

गयस्य यजमानस्य गयस्येव महाक्रतुः।
आहूता सरितां श्रेष्ठा गययज्ञे सरस्वती॥
विशालां तु गयेष्वाहुर्ऋषयः शंसितव्रताः।

गयस्येवेति गययज्ञस्य तेनैवोपमानप्रतिशंसार्थम्।

तथा पुलस्त्यतीर्थयात्रायाम्—

ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः।
अश्वमेधमवाप्नोति गमनादेव भारत॥
तत्राक्षय्यवटो नाम त्रिषु लोकेषु विश्रुतः।
यत्र दत्तं पितृभ्यस्तु भवत्यक्षय्यमित्युत॥
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः।
अक्षयान्प्राप्नुयाल्लोकान्कुलं चैव समुद्धरेत्॥

ततो ब्रह्म [ शि ] रो गच्छेद्ब्रह्मारण्योपशोभितम् ।
ब्रह्मलोकमवाप्नोति प्रभातामेव शर्वरीम् ॥
ब्रह्मणा तत्र सरसि यूपः पुण्यः प्रकल्पितः ।
यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ॥
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् ।
एकरात्रोषितो यत्र प्रयच्छेत्तिलधेनुकाम् ॥
सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ।
तत्र चिह्नं महाराज अद्यापि सुमहाद्भुतम् ॥
कपिला च सवत्सा वै पर्वते विचरत्यपि ।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि तत्र वै ॥
तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम ।
यत्किंचिदशुभं कर्म तत्प्रणश्यति भारत ॥
ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः ।
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् ।
इतरेषां तु वर्णानां सर्वं पापं प्रणश्यति ॥
उद्यन्तं च ततो गच्छेत्पर्वतं गीतनादितम् ।
सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ॥
तत्र संध्यामुपासीत ब्राह्मणः शंसितव्रतः ।
उपासिता भवेत्संध्या तेन द्वादशवार्षिकी ॥
योनिद्वारं च तत्रैव विद्यते भरतर्षभ ।
तत्राभिगम्य मुच्येत पुरुषो योनिसंकटात् ॥
कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नृप ।
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
ततः फल्गु व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च परमां लभेत् ॥
ततो गच्छेत राजेन्द्र धर्मपृष्ठं महाफलम् ।
यत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥
तत्र कूपोदकं पीत्वा तेन स्नातः शुचिस्तथा ।
पितॄन्देवांश्च संतर्प्य मुक्तपापो दिवं व्रजेत् ॥

मतङ्गस्याऽऽश्रमस्तत्र महर्षेर्भावितात्मनः ।
तं प्रविश्याऽऽश्रमं श्रीमाञ्छ्रमशोकविनाशनम् ॥
गवामयनयज्ञस्य फलं प्राप्नोति मानवः ।
धर्मं तत्राभिसंस्पृश्य वाजिमेधफलं लभेत् ॥
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ।
तत्राभिपूज्य राजेन्द्र ब्रह्माणं भरतर्षभ ॥
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ।

तथा लोमशतीर्थयात्रायाम्—

ततो महीधरं जग्मुर्धर्मज्ञेनाभिरक्षितम् ।
राजर्षिणा पुण्यकृता गयेनानुपमद्युत ॥
नगो गयशिरो यत्र पुण्या चैव महानदी ।
ऋषिजुष्टं महापुण्यं तीर्थं ब्रह्मसरोऽतुलम् ॥
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
उवास च स्वयं यत्र धर्मराजः सनातनः ॥
सर्वासां सरितां यत्र समुद्भेदो विशांपते ।
यत्र संनिहितो नित्यं महादेवः पिनाकधृक् ॥
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे ।
ऋषियज्ञेन महता यत्राक्षय्यवटो महान् ॥
अक्षयो देवयजने अक्षयं यत्र वै फलम् ।
ते तु तत्रोपवासान्वै चक्रुर्नियतमानसाः ॥
चातुर्मास्येनायजन्त आर्षेण विधिना तदा । इति ॥

तथा धौम्यतीर्थयात्रायाम्—

पूर्वं प्राचीं दिशं राजन्राजर्षिग [ण] सेविताम् ।
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथामति ॥
यस्यां गिरिवरः पुण्यो देवराजर्षिसेवितः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥
यदर्थं पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
उत्तारयन्ति संतत्या दश पूर्वान्दशापरान् ।
महानदी च तत्रैव तथा गयशिरो नृप ॥

यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ।
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ॥
सा च पुण्यजला यत्र फल्गुनामा महानदी ।
बहुमूलफला चापि कौशिकी भरतर्षभ ॥

पाद्मे सृष्टिखण्डे—

कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् ।
च्यवनस्याऽऽश्रमः पुण्यो नदी पुण्या पुनः पुनः ॥
यत्र गाथा विचरति ब्रह्मणा परिकीर्तिता ।

' एष्टव्या ' इत्यादि ॥
तथा—

किमस्माकं कुले कश्चिद्गयां यास्यति यः सुतः ।
प्रीणयिष्यति तां गत्वा सप्त पूर्वांस्तथाऽपरान् ॥
मातामहानामप्येवं श्रुतिरेषा चिरंतनी ।
गयायां चास्थिनिचयं गत्वा क्षेप्स्यति यः सुतः ॥
तिलैः सप्ताष्टभिर्वाऽपि दास्यते च जलाञ्जलिम् ।
अरण्यत्रितये चापि पिण्डदानं करिष्यति ॥
प्रथमं पुष्करारण्ये नैमिषे तदनन्तरम् ।
धर्मारण्यं पुनः प्राप्य श्राद्धं भक्त्या प्रदास्यति ॥

गयायां धर्मपृष्ठे चेत्यादि ।

व्रजनाय नरो यस्तु अध्वानं परिसर्पति ।
नरकस्थान्पितृंस्तद्वत्स्वर्गं नयति सत्वरः( म् ) ॥
कुले तस्य न राजेन्द्र प्रेतो भवति कश्चन ।
प्रेतत्वमोक्षपदवीं पिण्डदानाच्च गच्छति ॥

एको ह्यृषिस्तु प्रवराग्रहस्त आम्रेषु मध्ये सलिलं ददाति ।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया व्यर्थकरी प्रसिद्धा ॥
गयायां पिण्डदानात्तु नान्यद्दानं प्रशस्यते ।
एकेन पिण्डदानेन तृप्ता ये मोक्षगामिनः ॥
इत्यादिदानं प्रवरं वदन्ति वस्त्रप्रदानं च तथा मुनीन्द्राः ।
गयासुतीर्थेषु नरैः प्रदत्तं तद्धर्महेतु प्रवरं प्रदिष्टम् ॥

वायुपुराणे—

सनत्कुमार उवाच ।

वक्ष्ये तीर्थवरं पुण्यं श्राद्धादौ सर्वतारकम् ।
गयातीर्थं सर्वदेशतीर्थेभ्योऽप्यधिकं शृणु ॥

इत्युपक्रम्य—

गयनाम्ना गया ख्याता क्षेत्रं ब्रह्मादिकाङ्क्षितम् ।
काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ॥
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ।
गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ॥
पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किं न दास्यति ।
गयां गत्वाऽन्नदाता यः पितरस्तेन पुत्रिणः ॥

तथा—

ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥
ब्रह्मज्ञानेन किं साध्यं गोगृहे मरणेन किम् ।
किं कुरुक्षेत्रदाने(वासे)न यदि पुत्रो गयां व्रजेत् ॥

तथा—

गयापिण्डप्रदानेन यत्फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ इत्यादि ॥

एतान्येव वचनान्यग्निपुराणेऽपि क्रमान्यत्वेन ज्ञेयानि । भारते दानधर्मेषु—

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यत्रासौ प्रथितो लोकेऽक्षय्यकरणो वटः ॥

गारुडे ब्रह्मवचः—

सारात्सारतरं व्यास गयामाहात्म्यमुत्तमम् ।
प्रवक्ष्यामि समासेन भुक्तिमुक्तिप्रदं शृणु ॥
गयासुरोऽभवत्पूर्वं वीर्यवान्परमः स च ।
तपोऽतप्यन्महाघोरं सर्वभूतोपतापनम् ॥
ततः संतापिता देवास्तद्वधार्थं हरिं गताः ।
शरणं हरिरूचे तान्भवितव्यं शिवात्मभिः ॥

पातितेऽस्य मया देहे तथेत्यूचुः सुरा हरिम् ।
कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥
अनी( नू )पकीकटे देशे शयनं चाकरोद्वने ।
विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥
अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः ।
तस्य देहे लिङ्गरूपी स्थितः शुद्धे पितामहः ॥
विष्णुराहाथ मर्यादां पुण्यं क्षेत्रं भविष्यति ।
तत्र श्राद्धं पिण्डदानं स्नानादि कुरुते नरः ॥
स स्वर्गं ब्रह्मलोकं च गच्छेन्न नरकं पुनः ।
गयातीर्थं परं ज्ञात्वा यागं चक्रे पितामहः ॥
ब्राह्मणान्पूजयामास ऋत्विक्त्वं समुपागतान् ।
नदीं रसवतीं दृष्ट्वा स्थितां व्याप्य दिशं ततः ॥
भक्ष्यभोज्यफलानां च कामधेनुं तथाऽसृजत् ।
पञ्चक्रोशं गयातीर्थं ब्राह्मणेभ्यो ददौ प्रभुः ॥
धर्मयागे तु लोभाद्वै प्रतिगृह्य धनादिकम् ।
स्थिता विप्रास्तदा शप्ता गयायां ब्रह्मणा ततः ॥
मा भूत्त्रिपुरुषी विद्या मा भूत्त्रिपुरुषं धनम् ।
युष्माकं स्याद्वारिवहा नदी पाषाणपर्वताः ॥
शप्तैस्तु प्रार्थितो ब्रह्माऽनुग्रहं कृतवान्प्रभुः ।
लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः ॥
युष्मान्ये पूजयिष्यन्ति तैरहं पूजितः सदा ।
ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ।
समुद्राः सरितः सर्वे वापीकूपह्रदानि च ॥
स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥
पापं तत्संगमं सर्वं गयाश्राद्धाद्विनश्यति ।

यस्य गयाश्राद्धं कृतं तस्य ब्रह्महत्यादिपञ्चमहापातकनाशः फलमित्यर्थः ।

असंस्कृता मृता ये च पशुचौरहताश्च ये ।
सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥

एतदपि श्राद्धोद्देश्यफलमेव ।

गयायां पिण्डदानेन यत्फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥

एतत्तु श्राद्धकर्तृगतं फलमिति कश्चित् । गयापिण्डदानस्तुतिरियमित्यन्ये ।

वायुपुराणे—

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ।
उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ॥

सप्त गोत्राणि तु—

पिता माता च भार्या च भगिनी दुहिता तथा ।
पितृमातृष्वसा चैषां सप्त गोत्राणि वै विदुः ॥ इति ।

अत्र मातृगोत्रं मातामहगोत्रम् । भार्यागोत्रं श्वशुरगोत्रं भगिनीदुहितृपितृष्वसृमातृष्वसॄणां गोत्राणि यत्कुले ता दत्तास्तदीयानि । एतेषामेव गोत्राणामेकोत्तरं शतं कुलम् । लक्षणया तत्स्थाः पुरुषाः । ते यथा

तत्त्वानि विंशति नृपा द्वादशैकादशा दश ।
अष्टाविति च गोत्राणां कुलमेकोत्तरं शतम् ॥ इति ।

पितृगोत्रे तत्त्वानि । एते च द्वादशे परे तावन्त एवावरे । मातृगोत्रे दश परे दशैवावर इत्येवं विंशतिः । भार्यागोत्रेऽष्टौ परेऽष्टाववर इति एवं नृपाः षोडश भारते षोडश राजकीये तथोक्तेः । भगिनीगोत्रे षट्परे षडवर एवं द्वादश । दुहितृकुले पञ्च परे पञ्च दौहित्रादयोऽवरे जामाता चेत्येकादश । पितृष्वसृकुले तच्छ्वशुराद्याः परे पञ्च तद्भर्त्राद्या अवरे पञ्चेत्येवं दश मातृष्वसृकुले तच्छ्वशुराद्याश्चत्वारः परे तद्भर्त्राद्याश्चत्वारोऽवर इत्येवमष्टौ । सर्वे समुदिता एकोत्तरं शतं भवति । वायवीये—

गयासुरस्य शिरसि पुण्ये प्रेतादिवर्जिते ।
स्थिता ब्रह्मादयो देवा गतः सोऽपि पवित्रताम् ॥

कीकटेषु गया पुण्येत्यादि पूर्ववत् । अन्यत्रापि—

जीवतांवाक्यकरणात्प्रत्यब्दं भूरिभोजनात् ।
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥

कौर्मे—

गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत् ।
तारिताः पितरस्तेन स याति परमां गतिम् ॥

भविष्योत्तरे श्रवणद्वादशीव्रतप्रसङ्गे कंचिद्वणिजं प्रति प्रेतवचनम्—

हिमवन्तमथाऽऽसाद्य तत्र त्वं लप्स्यसे निधिम् ।
गयाशीर्षं ततो गत्वा सर्वेषां श्राद्धमाचर ॥
तथेत्युक्त्वा ततो गत्वा निधिं प्राप्य गयां ययौ ।
प्रेतानां क्रमशस्तत्र चक्रे श्राद्धं दिने दिने ॥
यस्य श्राद्धं करोति स्म यस्मिन्यस्मिन्दिने वणिक् ।
स स तस्य तदा स्वप्ने दर्शयत्यात्मनस्तनुम् ॥
ब्रवीति च महाभाग प्रसादेन तवानघ ।
प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि परमां गतिम् ॥ इति ।

व्यासः—

गयां गत्वा तु यः कश्चित्पितॄन्संतर्पयेन्नरः ।
दशावरापरान्वंश्यानात्मानं च पुनाति सः ॥
स्थानं देहपरित्यागो गयायां तु विधीयते ।
श्राद्धं पिण्डप्रदानं च गयायां तु विशिष्यते ॥

वायुपुराणे—

आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
कृष्णच्छागस्तथा लोहमानन्त्याय प्रकल्पते ॥

पितृक्षयो गया । तथा—

गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयागृध्रवटे चैव श्राद्धं दत्तं महाफलम् ॥
भरतस्याऽऽश्रमे पुण्ये नित्यं पुण्यतमैर्वृते ।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः ॥
स्थापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनात् ।
यच्चम्पकवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥
यस्मिन्पाण्डुविशल्येति तीर्थं सज्योतिदर्शनम् ।
तृतीयायां तथा पादे निःक्षीरायाश्च मण्डले ॥
म[हा]ह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम् ।
मुण्डपृष्ठे पदं न्यस्य ब्रह्मर्षिगणसेवितम् ॥
तत्र स्नात्वा दिवं यान्ति स्वशरीरेण मानवाः ।
दत्तं चापि सदाश्राद्धमक्षय्यं समुदाहृतम् ॥

स्नात्वा ऋणत्रयं तत्र निष्क्रीणाति नरोत्तमः ।
मानसे सरसि स्नात्वा श्राद्धं निर्वर्तयेत्ततः ॥
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ।
तस्मिन्निर्वर्तयञ्श्राद्धं यथाशक्ति यथाबलम् ॥
कामान्स लभते दिव्यान्मोक्षोपायांश्च कृत्स्नशः ।

कौर्मे—

गयातीर्थं परं गुह्यं पितॄणां चातिवल्लभम् ।
कृत्वा पिण्डप्रदानं तु न भूयो जायते नरः ॥
सकृद्गयाभिगमनं कृत्वा पिण्डं ददाति यः ।
पितरस्तारितास्तेन यास्यन्ति परमां गतिम् ॥
गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति ।
शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥
गायन्ति पितरो गीतान्कीर्तयन्ति महर्षयः ।
गयां यास्यति यः कश्चित्सोऽस्मान्संतारयिष्यति ॥
यदि स्यात्पातकोपेतः स्वधर्मरतिवर्जितः ॥
गयां यास्यति वंशे यः सोऽस्मान्संतारयिष्यति ।
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ॥
तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ।
तस्मात्सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ॥
प्रदद्याद्विधिवत्पिण्डान्गयां गत्वा समाहितः ।
धन्यास्तु खलु ते मर्त्या गयायां पिण्डदायिनः ॥
कुलान्युभयतः सप्त समुद्धृत्याऽऽप्नुयात्(युः) परम् । इति ॥

मात्स्ये—

पितृतीर्थं गया नाम सर्वतीर्थवरं शुभम् ।
यत्राऽऽस्ते देवदेवेशः स्वयमेव पितामहः ॥
यत्रैषा पितृभिर्गीता गाथा भागमभीप्सुभिः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ।

विष्णुः—

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्यात्समाहितः ॥

यमः—

एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ।

वसिष्ठः—

नन्दन्ति पितरस्तस्य सुक्रु(वृ)ष्टैरिव कर्षकाः ।
यद्गयास्थो ददात्यन्नं पितरस्तेन पुत्रिणः ॥

मात्स्ये गौरीस्थानप्रतिपादनं प्रक्रम्य—

वाराणस्यां विशालाक्षी प्रयागे ललिता तथा ।
गयायां मङ्गला नाम कृतशौचे तु सैंहिका ॥

याज्ञवल्क्यः—

यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ।

नरसिंहपुराणे—

शिवनद्यां शिवकरं गयायां च जनार्दनम् ।
सर्वत्र परमात्मानं यः पश्यति स मुच्यते ॥

शिवनदी विहारनगरेऽस्ति ।

वराहपुराणे सनत्कुमार उवाच—

धन्यस्त्वमेव द्विजमुख्यवर्य यद्वेदवादाभिरतः पितॄंश्च ।
प्रीणासि मन्त्रव्रतजप्यहोमैर्गयां समासाद्य तथाऽन्नपिण्डैः ॥
शृणुष्व वाक्यं नृपतिर्बभूव विशालनामा स पुरीं विशालाम् ।
उवास धन्यां धृतिमानपुत्रः स्वयं विशालाधिपतिर्द्विजाग्र्यान् ॥
पप्रच्छ पुत्रार्थममित्रहन्ता तं ब्राह्मणाश्चोचुरदीनसत्त्वाः ।
राजन्पितॄंस्तर्पय पुत्रहेतोर्दत्त्वा गयायां विधिवत्तु पिण्डान् ॥
ध्रुवं सुतस्ते भविता च वीर सहस्रदाता सकलक्षितीशः ।
इतीरिते ब्राह्मणैः स प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात् ॥
समागतस्तीर्थवरं द्विजेश गयामिमां तद्गतमानसः सन् ।
आगत्य सोऽथ प्रवरं सुतार्थी गयाशिरोयागपरः पितॄणाम् ॥
पिण्डप्रदानं विधिना प्रयच्छत्तावद्वियत्युत्तममूर्तियुक्तान् ।
पश्यन्स पुंसः सितरक्तकृष्णानुवाच राजा किमिदं भवद्भिः ॥
समुह्यते शंसत सर्वमेव कुतूहलं मे मनसि प्रवृत्तम् ।

सित उवाच—

अहं सितस्ते जनकोऽस्मि तात नाम्ना च वृत्तेन च कर्मणा च ।
अयं च मे जनको रक्तवर्णो नृशंसकृद्ब्रह्महा पापकारी ॥
अन्धेश्वरः शृण्वपरः पिताऽस्य कृष्णो नाम्ना कर्मणा वर्णतश्च ।
एतेन कृष्णेन हताः पुरा वै जन्मान्यनेकान्यृषयः पुराणाः ॥
एतौ मृतौ द्वावपि पुत्र रौद्रमवीचिसंज्ञं नरकं प्रपन्नौ ।
अन्धेश्वरोऽयं जनकः परोऽस्य कृष्णः पिता द्वावपि दीर्घकालम् ॥
अहं च शुद्धेन निजेन कर्मणा शक्रासनं प्राप्य सुदुर्लभं ततः ।
त्वया पुनर्मन्त्रविदा गयायां पिण्डप्रदानेन बलादिमौ च ॥
मोक्षायितौ तीर्थवरप्रसादादवीचिसंज्ञं नरकं गतौ तौ ॥

पितॄन्पितामहांश्चैव तथैव प्रपितामहान् ।
प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम ॥
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम ।
तीर्थप्रभावाद्गच्छामः पितृलोकं न संशयः ॥
तत्र पिण्डप्रदानेन एतौ तव पितामहौ ।
दुर्गतावपि संसिद्धौ पापाद्विकृतलिङ्गकौ ॥
तीर्थप्रभाव एषोऽत्र ब्रह्मघ्नस्यापि सत्तम ।
पितुः पिण्डप्रदानेन कुर्यादुद्धरणं सुतः ॥
एतस्मात्कारणात्पुत्र अहमेतौ विगृह्य च ।
आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि सांप्रतम् ॥
एतस्मात्कारणाद्रैभ्य भवान्धन्यो मयोच्यते ।
सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम् ॥
दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ।
किमत्र प्रोच्यते रैभ्य तव पुण्यमिति प्रभो ॥
येन स्वयं गदापाणिर्दृष्टो नारायणः स्वयम् ।
यतो गदाधरः साक्षादस्मिंस्तीर्थे व्यवस्थितः ॥
अतो हि विख्याततमं तीर्थमेतद्द्विजोत्तम ।

एतदनन्तरं गदाधरस्तोत्रं रैभ्योक्तं तत्तत एवावगन्तव्यम् । पितॄन्पितामहांश्चेति । तथा चर्ग्वेद्यमुकगोत्रममुकशर्माणं पितरं स्वधा नमस्तर्पयामीति प्रयुज्य मध्यंदिनस्त्वमुकगोत्रोऽस्मत्पिताऽमुकशर्मा तृप्यतामिदं

तिलोदकं तस्मै स्वधेति प्रयुज्यानन्तरं पितॄन्प्रीणयामीति प्रयुञ्जीताऽऽगन्तूनामन्ते निवेश इति न्यायात् । एवं पितामहप्रपितामहयोरपि । एवं शाखान्तरेऽपि । कश्चित्तु पितॄनित्यादिबहुवचनं मूलेऽविवक्षितमिति सांप्रदायस्ततश्च पितरं प्रीणयामीत्येवमाद्येकवचनं प्रयोज्यमित्याह तन्न। पितरः शुन्धन्तामित्यादिवदेकस्मिन्नप्युपरवमन्त्रन्यायेन बहुवचनोपपत्तेः। मन्त्रस्वरूपस्य पाठगम्यत्वादन्यथाभावे मन्त्रत्वव्याघातादविवक्षाकारणाभावाच्चेति । मातामहादावपि बहुवचनं प्रयोज्यं न त्वेकवचनमूहितव्यम् । प्रकृतावसमवेतार्थस्य विकृतावूहाभावात् । अदितिः पाशानितिवत् । अत्र वाराह( हा )लोचनया गयाश्राद्धात्पित्रुद्धारः कर्तुः पुत्रप्राप्तिश्च प्रतीयते । तत्रेदं विचार्यं किं गयाश्राद्धस्योभयं फलत्वेन प्रयोजकमुतैकम् । यद्येकं तदाऽपि किमिति । तत्राविशेषादुभयं प्रयोजकमतः सकृत्प्रयोगादुभयं सिध्यतीति कश्चित्तन्न । योगसिद्धिन्यायविरोधात् , वक्ष्यमाणप्रकारेण पित्रुद्धारस्य द्वारत्वाच्च । अतः 'तीर्थप्रभाव एषोऽत्र' इत्युपसंहारश्लोकमालोच्य पित्रुद्धारस्यैव फलता पुत्रोत्पत्तिस्तु श्रूयमाणाऽपि वाजिनवत् , पदग्रहणवत्सूक्तवाकगता पुराद्याशासनवच्चानुनिष्पादित्यतो न प्रयोजिकेत्यपरे मेनिरे तदपि मन्दम्। पुत्रार्थं पुत्रहेतोः सुतस्ते भविता सुतार्थीत्येवमभ्यासात्सुताप्तेरेव मुख्यफलताश्रवणात्तत्प्रकरणे श्रूयमाणस्यापि पित्रुद्धारस्य द्वारत्वकल्पनात्। तथा च श्रूयते—

उद्धृता ये गयाश्राद्धे ब्रह्मलोके तु ते शुभे ।
भुञ्जते क्षुत्पिपासा वा न तेषां जायते क्वचित् ॥
न चापि पतनं तस्मात्स्थानाद्भवति भूमिप ।
वंशोच्छेदात्पुनः सर्वेऽवतरन्ते महीतले ॥
आगत्यास्मात्ततो लोकान्निपत्य जगतीतले ।
पापाः पापां समायान्ति योनिं श्रेष्ठाः शुभान्विताम् ॥ इति ।

न च यदि पित्रुद्धारस्य द्वारता तर्हि पुत्रकामनाभावे केवलोद्धारार्थं न श्राद्धमनुष्ठीयेतेति वाच्यम् । वाराहे द्वारत्वेनापि श्रुतस्य पित्रुद्धारस्य पुराणान्तरेषु फलत्वेन श्रवणात्तस्यापि स्वतन्त्रप्रयोजकतोपपत्तेः । संयोगपृथक्त्वन्यायाच्च प्रयोगभेदेनैकस्यापि प्रयोजकत्वद्वारत्वे न विरुध्येते । यथाऽग्निहोत्रहोमस्यानिन्द्रियकामप्रयोगे साधनभूतदधिप्रयो-

जकता, इन्द्रियकामप्रयोगे च दृध्नेन्द्रिये साध्यमाने द्वारतेति । तस्मादुभयं फलं प्रयोजकं च । किंतु योगसिद्धिन्यायेनैकस्माद्गयाश्राद्धप्रयोगादेकमेव जायते । तत्र यदा पुत्रार्थिना क्रियते तदा तत्प्राप्तिरेव फलमुद्धारस्तु द्वारम् । यदा तु पितृसद्गतिकामेनानुष्ठीयते तदा तदेव मुख्यं फलमिति सर्वमकलङ्कम् । ननु तथाऽपि नानायोनिगतानां पितॄणामुद्धारो न फलतया वक्तुं शक्यते नानायोनिजनककर्मणां फलस्याऽऽरब्धत्वात्तस्य प्रारब्धकर्मत्वात् । प्रारब्धकर्मणश्च 'नाभुक्तं क्षीयते कर्म' इत्येवमादिना भोगादेव क्षयप्रतिपादनात् । अथ भोगादेव तस्मिन्नष्ट उद्धारो भवति तर्हि गयाश्राद्धमनर्थकं तद्विनाऽपि प्रतिबन्धापगमे स्वयमेव तत्संभवादिति चेत् । उच्यते । वचनवशात्कर्मविपाकदानादिनेव गयाश्राद्धेन प्रारब्धमपि नाश्यते किमिव वचनं न कुर्यादिति न्यायात् । ततश्च 'नाभुक्तं क्षीयते कर्म' इतिस्मृतिर्वाचनिकबलवत्प्रतिबन्धकाभावे सत्येव प्रारब्धकर्मणां भोगात्क्षयं प्रतिपादयतीत्यविरोधः ।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ गयाप्रकरणे सामान्यतो गयाप्रशंसा ।

अथ गयोत्पत्तिर्गयाप्राशस्त्यनिमित्तं च वाय्वग्निपुराणमूलकमुच्यते ।

सपादशतयोजनोच्छ्रायः षष्टियोजनविस्तारोऽतिबली च गयासुरः कोलाहलसंज्ञके गिरौ दारुणं तपस्तेपे । तत्तपसा तापिता देवा ब्रह्मलोकं गत्वा तमूचुर्वयं गयतपसाऽतिपीडितास्तत्र शरणं भवेति । तान्ब्रह्मोवाच—शिवं शरणं व्रजाम इति । ततस्तत्र गतान्ब्रह्मादीञ्शंभुरूचे विष्णुं शरणं यास्याम इति । ततः क्षीराब्धिं गत्वा विष्णुं तुष्टुवुः । ततस्तुष्टेन प्रत्यक्षीभूतेन विष्णुना किमर्थं भवदागमनमिति पृष्टे तैर्भयकारणे निवेदिते सर्वे भवन्तस्तत्र गच्छन्तु मयाऽपि तत्राऽऽगम्यत इत्युक्त्वा गरुडारूढो ब्रह्मादिसहितो विष्णुर्वरं दातुं गत्वा किमर्थं त्वया तपः क्रियत इति पृष्ट्वा सर्वपवित्रेभ्यस्तीर्थादिभ्यो मे शरीरमतिपवित्रमस्त्विति गयासुरेण वरे याचिते तथा भविष्यतीत्युक्त्वा स देवो विष्णुर्दिवं गतः । ततस्तद्देहस्यातिपवित्रतया केचिद्दर्शनेनान्ये स्पर्शेन ब्रह्मलोकं गता लोकाः । ततो निरधिकारा यमादयो ब्रह्माणं गत्वा स्वाधिकारत्यागायोद्यताः । ततो ब्रह्मणोक्तं विष्णुनाऽसौ दत्तवरो विष्णुं व्रजाम इति । ततो विष्णुं गत्वा त्वया दत्तवरोऽसावतः सर्वे

ब्रह्मलोकं व्रजन्त्यतोऽत्रोपायं कुर्वित्युक्ते विष्णुर्ब्रह्माणमाह यज्ञार्थं तद्देहः प्रार्थ्यतामिति । ततो ब्रह्मा गत्वा तथाऽकरोत् । ब्रह्मोवाच—

पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया ।
यज्ञार्थं तु न ते तानि पवित्राणि शरीरतः ॥
त्वया देहपवित्रत्वं प्राप्तं विष्णुप्रसादतः ।
अतः पवित्रं देहं स्वं यज्ञार्थं देहि मेऽसुर ॥

ततो गयासुर उवाच—

धन्योऽहं यद्भवान्सकलस्रष्टाऽपि यागार्थं मद्देहं याचते । अवश्यं दत्तम् ।

इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः ।
नैर्ऋतीं दिशमाश्रित्य तदा कोलाहले गिरौ ॥
शिरः कृत्वोत्तरे दैत्यः पादौ कृत्वा तु दक्षिणे ।

ततो ब्रह्मा संभृतसंभारस्तस्य शरीरे यागं कृत्वा यममाह । एतस्य शिरसि निश्चलतार्थं शिला धार्येति । ततो यमेन तथा कृतेऽपि सशिलोऽसुरश्चचाल । तद्दृष्ट्वा ब्रह्मा देवाञ्शिवादीनाह भवन्तः शिलायां निश्चलास्तिष्ठन्त्विति । तेषु स्थितेष्वपि चचालैव सः । ततो ब्रह्मा विष्णुं गत्वा सर्वमूचे तस्माद्विष्णो निश्चलत्वार्थं त्वं प्रसादं कुर्विति । ततो विष्णुः स्वमूर्तिं दत्तवान् । ब्रह्मणा तस्यां शिलातले स्थापितायां चलित एवासुरः । ततो ब्रह्मादिप्रार्थितो हरिः स्वयमेव शिलायां जनार्दनपुण्डरीकाक्षगदाधररूपैः स्थितः । प्रपितामहपितामहफलवी(ल्गवी)शकेदारकनकेश्वरैः पञ्चरूपैर्ब्रह्मा । गजरूपी विनायकः । गयादित्योत्तरार्कदक्षिणार्कैस्त्रिधा रविः ।

लक्ष्मी सीताभिधानेन गौरी वै मङ्गलाह्वयी ।
गायत्री चैव सावित्री त्रिसंध्या च सरस्वती ॥
आद्यया गदया भीतो यस्माद्दैत्यः स्थिरीकृतः ।
स्थितः इत्येष हरिणा तस्मादादिगदाधरः ॥

ततो हे देवा विष्णुवचसा किमहं स्थिरो न स्यां किमर्थमहं वञ्चित इति गयेनोक्ते देवैर्वरं ब्रूहीत्युक्ते गयासुर उवाच—

यावत्पृथ्व्यां पर्वताश्च यावदाचन्द्रतारकम् ।
तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः ॥

अन्ये च सकला देवा मन्नाम्ना क्षेत्रमस्तु च ।
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥
तन्मध्ये सर्वतीर्थानि त्रैलोक्ये सन्ति यानि वै ।
गङ्गाद्याः सुमहानद्यो वनानि च सरांसि च ॥
ते देवास्तानि तीर्थानि प्रयच्छन्तु हितं नृणाम् ।
स्नानादितर्पणं कृत्वा पिण्डदाने फलाधिकम् ॥
पितॄणां ब्रह्मलोकश्च भुक्तिमुक्तिफलं तथा ।
एको विष्णुस्त्रिधा मूर्तिर्यावत्संकीर्त्यते बुधैः ॥
तावद्गयासुरक्षेत्रं ख्यातिमेतु सदा भुवि ।
ब्रह्महत्यादिकं पापं व्यपोहतु च सेविनाम् ॥

एवं गयासुरेण वरेषु प्रार्थितेषु तथाऽस्त्विति प्रोक्ते देवैस्ततो ब्रह्मा ब्राह्मणेभ्यो ग्रामस्वर्णगृहकामधेनुकल्पवृक्षक्षीरकुल्यादधिकुल्याघृतकुल्यान्नपर्वतादीन्सर्वोपस्करान्दत्त्वा नान्यो भवद्भिर्याचनीय इत्युक्त्वा ब्रह्मलोकं जगाम । ततस्ते ब्राह्मणा लोभेन पुनर्धर्मं याजयित्वा तं प्रति याच्ञां कृतवन्तः । ततो ब्रह्मा समागत्य ताञ्शशाप ।

कृतवन्तो यतो लोभं मद्दत्ते ह्यखिलेऽपि च ।
तस्मात्तृष्णा च युष्माकं भविष्यति सदा द्विजाः ॥

विद्यावर्जिता यूयं गृहा मृन्मया अन्नपर्वताः पाषाणमयाः क्षीरकुल्याद्या वारिवहा इत्यादि भविष्यतीति शप्तास्ते ब्रह्माणमचुः । ब्रह्मंस्त्वया यद्दत्तं तत्सर्वं शापान्नष्टमतो नो जीविकार्थं प्रसादं कुर्विति । तच्छ्रुत्वा देवान्वितो ब्रह्मोवाच—

तीर्थोपजीवका यूयमाचन्द्रार्कं भविष्यथ ।
ये युष्मान्पूजयिष्यन्ति गयायामागता नराः ॥
हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ।
नरकात्स्वर्गलोकाय स्वर्गलोकात्परां गतिम् ॥ इति ।

अथ गयाशिरसि स्थापितायाः शिलाया उपाख्यानं वाय्वग्निपुराणयोः—धर्मस्य धर्मव्रताख्या कन्याऽऽसीत् ।

सा धर्मवचसा स्वानुरूपवरार्थं तपश्चरन्ती ब्रह्मणो मानसेन सुतेन मरीचिना दृष्टा पृष्टा च कुलनामादि । तया च कुलादौ निवेदितेऽहं ब्रह्मणा गार्हस्थ्यं कर्तुमाज्ञप्तोऽस्मि त्वं च कुलशीलादिभिर्मेऽनुरूपा तस्मा-

न्मम भार्या भवेति मरीचिनोक्तेऽहं धर्मसुता परतन्त्रा ततः पितरमेव प्रार्थयेति तयोक्ते धर्मं प्रति तां ययाचे मरीचिः। ततो धर्मस्तां विधिना तस्मै ददौ। कदाचिन्मरीचिः फलपुष्पादि वनादाहृत्य श्रान्तस्तामूचे। शयानस्य मे त्वया पादसंवाहनं कार्यमित्युक्त्वा शयितः। सा च पादसंवाहनं चकार। तावद्ब्रह्मा तत्राऽऽगतः सा च श्वशुरत्वात्पूज्यतया निद्रितस्य भर्तुः पादसंवाहनं परित्यज्य ब्रह्माणमर्घ्यादिभिरपूजयत्। तदन्तरे मरीचिरुत्थितस्तामपश्यन्क्रुद्धः शशाप यस्मान्मत्सेवां त्यक्त्वाऽन्यत्र त्वं गता तस्माच्छिला भवेति। ततः सा दारुणं तपश्चचार। ततस्तत्तपसा संतप्ता देवा हरिं शरणं गताः। ततो विष्ण्वादयः समागत्य वरं वरयस्वेति तां प्रोचुः। सा तु मह्यं मरीचिना दत्तः शापो मा भूदिति वव्रे। ततस्तैर्महर्षिशापो नान्यथा कर्तुं शक्यत इत्युक्ते पुनः सा वव्रे।

शिलाऽहं तु भविष्यामि ब्रह्मादेः पावनी शुभा।
नदीनदादितीर्थेभ्यो देवादिभ्योऽतिपावनी॥
तिष्ठन्तु देवाः सकला देव्यश्च मुनयः स्थिराः।
ब्रह्मा विष्णुश्च रुद्रश्चाप्यर्पयित्वा पदं मयि॥
पञ्चाग्नयः कुमाराद्या बहुरूपेण संस्थिताः।
मूर्तामूर्तस्वरूपेण पदरूपेण देवताः॥
मां दृष्ट्वा सर्वलोकश्च महापातकनाशिनीम्।
पूतः कृत्याधिकारी च श्राद्धकृद्ब्रह्मलोकभाक्॥
शिलास्थितेषु तीर्थेषु स्नात्वा कृत्वाऽथ तर्पणम्।
श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते॥
स्थास्यन्ति च मरिष्यन्ति यान्तु ब्रह्मपुरीं जनाः।
वाराणसी प्रयागं च ( गश्च ) पुरुषोत्तमसंज्ञकम्॥
गङ्गासागरसंज्ञं च नित्यं तिष्ठन्तु फल्गुनि।
मुक्तिर्भवेन्मृतानां च पितॄणां श्राद्धतः सदा॥
जरायुजाण्डजा वाऽपि देहं त्यक्त्वा शिलोपरि।
गच्छन्तु विष्णुसायुज्यं कुलैः सप्तशतैः सह॥
सर्वदेवसरूपा तु नाम्नेयं देवरूपिणी।
यावत्स्थास्यति ब्रह्माण्डं तावत्स्थास्यति वै शिला॥

देवरूपावचः श्रुत्वा देवा ऊचुः पतिव्रताम् ।
त्वया यत्प्रार्थितं सर्वमस्मद्वाक्याद्भविष्यति ॥
गयासुरस्य शिरसि भविष्यसि यदा स्थिता ।
तदा पदादिरूपेण स्थास्यामस्त्वयि सुस्थिराः ॥
वरं दत्त्वा शिलां चैवं तत्रैवान्तर्दधुः सुराः ।

ततः क्रोशमात्रमिता शिलाऽभूत् । देववरप्रदानात्तु सर्वे जनास्तद्दर्शनस्पर्शनादिभिः स्वर्गमगमन् । ततो यमो ब्रह्माणमाह शिलामहिम्ना सर्वोऽप्युद्धृतो जनो मदधिकारं स्वामिन्गृहाणेति । ततो ब्रह्मणा स्वगृहे तां धारयेत्युक्तो यमस्तां धारितवान् । सेयं शिला गयशिरसि धर्मेण निश्चलत्वाय स्थापिता ।

गयासुरशिलायोगे ह्यमेधमजोऽकरोत् ।
भागार्थमागतान्दृष्ट्वा विष्णवाद्यानब्रवीच्छिला ॥
शिलास्थिताः प्रतिज्ञां तां कुर्वन्तु पितृमुक्तये ।
तथेत्युक्त्वा शिलायां ते देवा विष्णवादयः स्थिताः ॥
शिलारूपेण मूर्त्या च पदरूपेण देवताः ।
व्यक्ताव्यक्तस्वरूपेण स्थिताः पूर्वप्रतिज्ञया ॥
दैत्यस्य मुण्डपृष्ठे तु शिला यस्माच्च संस्थिता ।
तस्मात्स मुण्डपृष्ठाद्रिः पितॄणां ब्रह्मलोकदः ॥ इति ।

अथ गदालोलोपाख्यानम् ।

ब्रह्मणा दत्तवरो गदो नामासुरः । तस्यास्थीनि ब्रह्मा याचित्वा तैर्विश्वकर्मणा गदामकारयत् । एतस्मिन्नेव काले ब्रह्मपुत्रो हेतिनामाऽसुरस्तपोऽतप्यत् ( त )। स ब्रह्मादींस्तपसा तुष्टान्वरं वव्रे विष्णुमहेशेन्द्राद्यायुधैरहमवध्यः स्यामिति । तैस्तथाऽस्त्विति वरे दत्त इन्द्रादीन्दूरीकृत्य स्वयमेवेन्द्रत्वाद्यकरोत् ।

हरिं ते शरणं जग्मुरूचुर्हेतिं जहीति तान् ।
ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः ॥
ब्रह्मास्त्रं मे प्रयच्छध्वं हेतिं हन्यां हि येन तम् ।

इति विष्णुनोक्ते गदासुरास्थिघटितां गदां देवा हरये ददुः । तया गदया हेतेरसुरस्य शिरो निर्भिद्य प्रक्षालनार्थं गदा यत्र लोलिता तद्गदालोलतीर्थमभूदिति । अथ गदाधरमाहिमाऽग्निपुराणे—

स्थिते( तो ) गदाधरो देवो व्यक्ताव्यक्तोभयात्मकः ।
निश्चलार्थं स्वयं देवः स्थित आदिगदाधरः ॥

गदाधरनामनिरुक्तिश्च वायवीये—

आद्यया गदया भीतो यस्माद्दैत्यः स्थिरीकृतः ।
स्थित इत्येष हरिणा तस्मादादिगदाधरः ॥

हरिणा यतः स्थिरीकृतस्तस्माद्धरिर्गदाधर इत्यन्वयः ।

तथा—

गदया प्रागवष्टभ्य गयासुरशरीरके ।
निश्चलार्थं स्थिरो यस्मात्तस्मादादिगदाधरः ॥

तथा—शिलापर्वतफल्ग्वादिरूपेणाव्यक्त आस्थितः ।
गदाधरादिरूपेण व्यक्त आदिगदाधरः ॥
शिलापादादिरूपेण व्यक्ताव्यक्तात्मना स्थितः ।

तथा—ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरम् ।
ते प्राप्स्यन्ति धनं धान्यमायुरारोग्यमेव च ॥
कलत्रपुत्रपौत्रादिगुणकीर्तिसुखादिकम् ।
श्रद्धया यो नमस्येत नित्यं विष्णुपुरे वसेत् ॥
गन्धदानेन गन्धाढ्यः सौभाग्यं पुष्पदानतः ।
धूपदानेन राज्याप्तिर्दीपाद्दीप्तिर्भविष्यति ॥
स्वज(स्र)दानात्पापहानिर्यात्राकृद्ब्रह्मलोकभाक् ।

गदाधरस्तोत्रं च वायवीये शिव उवाच—

अव्यक्तरूपो यो देवो मुण्डपृष्ठाद्रिरूपतः ।
फल्गुतीर्थादिरूपेण नमाम्यादिगदाधरम् ॥
व्यक्ताव्यक्तस्वरूपेण पदरूपेण संस्थितः ।
मूर्तिलिङ्गादिरूपेण नमाम्यादिगदाधरम् ॥
शिलायां देवरूपिण्यां स्थितो ब्रह्मादिभिः सुरैः ।
पूजितं संस्तुतं देवं नमाम्यादिगदाधरम् ॥
महादेवस्य जगतोऽव्यक्तस्यैकं हि कारणम् ।
अव्यक्तज्ञानरूपं तं नमाम्यादिगदाधरम् ॥
यं च दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा प्रणम्य च ।
श्राद्धादौ ब्रह्मलोकाप्तिर्नमाम्यादिगदाधरम् ॥
देहेन्द्रियमनोबुद्धिप्राणाहंकारवर्जितम् ।
जाग्रत्स्वप्नविनिर्मुक्तं सत्यमानन्दमव्ययम् ॥
तुरीयं ज्योतिरात्मानं नमाम्यादिगदाधरम् ।

सनत्कुमार उवाच—

एवं स्तुतो महेशेन प्रीतो ह्यादिगदाधरः ।
स्थितो देवः शिलायां स ब्रह्माद्यैर्दैवतैः सह ॥
संस्थितं मुण्डपृष्ठाद्रौ देवमादिगदाधरम् ।
स्तुवन्ति पूजयन्तीह विष्णुलोकं प्रयान्ति ते ॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी प्राप्नुयाद्धनम् ।
कामानवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥
वन्ध्या च लभते पुत्रानभ्यर्च्याऽऽदिगदाधरम् ।
राजा विजयमाप्नोति शूद्रः सुखमवाप्नुयात् ॥
पुत्रार्थी लभते पुत्रान्वेदवेदाङ्गपारगान् ।
मनसा प्रार्थितं सर्वं पूजाद्यैः प्राप्नुयाद्धरेः ॥

अथ पदमहिमा वायवीये—

विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमम् ।
कश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ॥
पञ्चाग्नीनां पदान्यत्र इन्द्रागस्त्यपदे परे ।
रवेश्च कार्तिकेयस्य क्रौञ्चमातङ्गकस्य च ॥
मुखलिङ्गानि सर्वाणि पदानीति निबोधत ॥ इति ।

अन्यान्यपि चन्द्रगणेश्वरादीनां पदानि पदश्राद्धप्रकरणे वक्ष्यन्ते । अत्र श्राद्धे क्रमं च तत्रैव वक्ष्यामः ।

अथ विशेषतः केषांचिन्महिमा तत्र विष्णुपदस्य तावद्वायवीये—

भीष्मो विष्णुपदे श्रेष्ठ आहूय तु पितॄन्स्वकान् ।
श्राद्धं कृत्वा विधानेन पिण्डदानाय चोद्यतः ॥
पितुर्विनिर्गतौ हस्तौ गयाशिरसि शंतनोः ।
भीष्मः पिण्डं ददौ भूमौ नाधिकारः करे यतः ॥
शंतनुः प्राह संतुष्टः शास्त्रार्थे निश्चलो भवान् ।
त्रिकालदृष्टिर्भवतु अन्ते विष्णुश्च ते गतिः ॥
स्वेच्छया मरणं चास्तु इत्युक्त्वा मुक्तिमागतः ।

अथ रुद्रपदमहिमा—

रामो रुद्रपदे श्राद्धे पिण्डदानाय चोद्यतः ।
पिता दशरथः स्वर्गात्प्रसार्य करमागतः ॥

नादात्पिण्डं करे रामो ददौ रुद्रपदे ततः ।
शास्त्रार्थातिक्रमाद्भीतो रामं दशरथोऽब्रवीत् ॥
तारितोऽहं त्वया पुत्र रुद्रलोको ह्यमून्मम ।
पदे पिण्डप्रदानेन हस्ते तु स्वर्गतिर्न हि ॥
त्वं च राज्यं चिरं कृत्वा पालयित्वा द्विजान्प्रजाः ।
यज्ञान्सदक्षिणान्कृत्वा विष्णुलोकं गमिष्यसि ॥
सहायोध्याजनैः सर्वैः कृमिकीटादिभिः सह ।
इत्युक्त्वाऽसौ दशरथो रुद्रलोकं ययौ परम् ॥

अथ कश्यपपदस्य—

कश्यपस्य पदे दिव्ये भारद्वाजो मुनिः पुरा ।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम् ॥
शुक्लकृष्णौ ततो हस्तौ पदमुद्भिद्य निर्गतौ ।
दृष्ट्वा हस्तद्वयं तत्र पितुः संशयमागतः ॥
ततः स्वमातरं शान्तां भारद्वाजस्तु पृष्टवान् ।
कश्यपस्य पदे कस्मिन्शुक्ले कृष्णेऽथ वा करे ॥
पिण्डो देयो मया मातर्जानासि पितरं वद ।

शान्तोवाच—

भारद्वाज महाप्राज्ञ देहि कृष्णाय पिण्डकम् ।
भारद्वाजस्ततः पिण्डं दातुं कृष्णाय चोद्यतः ॥
श्वेतोऽदृश्योऽब्रवीत्पुत्रं देहि मह्यं ममौरसः ।
कृष्णोऽब्रवीत्क्षेत्रजस्त्वं ततो मे देहि पिण्डकम् ॥
शुक्लोऽब्रवीत्स्वैरिणीयं यतोऽतस्त्वं ममौरसः ।
स्वैरिणीत्वाद्ददौ चाऽऽदौ बीजिने क्षेत्रिणे ततः ॥
हस्तं त्यक्त्वा शिलायां वै पिण्डदानं चकार सः ।
हंसयुक्तेन यानेन ब्रह्मलोकममौ गतौ ॥

इति पदमहिमा ।

अथ गयादिनामनिर्वचनं वायवीये—

श्वेतकल्पे तु वाराहे गयो यागमकारयत् ।
गयनाम्ना गया ख्याता क्षेत्रं ब्रह्मादिकाङ्क्षितम् ॥

आग्नेयेऽपि—

गयोऽपि चाकरोद्यागं बह्वन्नं बहुदक्षिणम् ।
गया पुरी तेन नाम्ना । इति ।

वायवीये—

दैत्यस्य मुण्डपृष्ठोच्चे शिला यस्माच्च संस्थिता ।
तस्मात्स मुण्डपृष्ठाद्रिः पितॄणां ब्रह्मलोकदः ॥

तथा—क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत् ।
तस्य पादाङ्कितो यस्मात्क्रौञ्चपादस्ततः स्मृतः ॥

तथा—हेत्यासुरस्य यच्छीर्षं गदया तु द्विधा कृतम् ।
ततः प्रक्षालिता यस्मिंस्तीर्थे तस्य विमुक्तये ॥
गदालोलमिति ख्यातं सर्वेषामुत्तमोत्तमम् ।

अथ गयायां काम्यकर्मणि स्मृतिरत्नावल्याम्—

अल्पेनाप्यत्र कालेन नरो धर्मपरायणः ।
पापाद्विमोचयत्याशु जीर्णां त्वचमिवोरगः ॥

तथा—तीर्थानामुत्तमं तीर्थं गया त्रैलोक्यविश्रुता ।
दत्त्वा पिण्डोदकं तत्र दृष्ट्वा च प्रपितामहम् ॥
अक्षयाल्लँभते लोकान्कुलं चैव समुद्धरेत् ।
गयायामक्षयं श्राद्धं जपहोमतपांसि च ॥
पितृक्षयो हि तत्पुण्यं तस्मात्तत्राक्षयं भवेत् ।

क्षयो निवासस्थानं 'क्षयो निवासे' इति पाणिनिना निपातनात् ।

तथा—यः करोति वृषोत्सर्गं गयाक्षेत्रे ह्यनुत्तमे ।
अग्निहोमशतात्पुण्यं लभते नात्र संशयः ॥

वृषोत्सर्गो नीलोद्वाहकर्म ।

तथा—यत्फलं संनिहत्यायां राहुग्रस्ते दिवाकरे ।
फलं तदखिलं प्रोक्तं गयायां तु दिने दिने ॥
गयां गतोऽन्नदाता यः पितरस्तेन पुत्रिणः ।
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥

इत्यादि पाद्मे सृष्टिखण्डे—

धान्यप्रदानं प्रवरं वदन्ति वस्त्रप्रदानं च तथा मुनीन्द्राः ।
गयासुतीर्थेषु नरैः प्रदत्तं तद्धर्महेतु प्रवरं प्रदिष्टम् ॥

अथ गयादिप्रमाणं माधवीये—

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।

अत्रापि मध्यावधिस्तत्रैव—

मुण्डपृष्ठाच्च पूर्वस्मिन्दक्षिणे पश्चिमोत्तरे ।
सार्धं क्रोशद्वयं मानं गयेति परिकीर्तितम् ॥

मुण्डपृष्ठाद्गिरिर्मध्यावधिरित्यर्थः । अग्निपुराणे गयाशिरःपरिमाणम्—

नागकूटाद्गृध्रकूटात्तथा चोत्तरमानसात् ।
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥

तावदेव फल्गुतीर्थमित्यर्थः ।

तथा—मुण्डपृष्ठान्नगाधस्तात्फल्गुतीर्थमनुत्तमम् ।

अत्रानुत्तममितिनिर्देशाद्गयाशिरःपरिमितस्यापि फल्गुतीर्थस्य मुण्डपृष्ठाधस्तनो भागोऽतिपवित्र इत्यर्थः । भारते—

महानदीदेवनद्योस्तद्यत्तीर्थाद्यनन्तरम् ।
उदक्कनकनन्दाया मध्यं [फल्गु] प्रकीर्तितम् ॥

तथा—महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः ।
उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम् ॥
एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ।

अथ गयागमनप्रशंसा वाय्वग्निपुराणयोः—

गृहाच्चलितमात्रेण गयाया गमनं प्रति ।
स्वर्गारोहणसोपानं पितॄणां च पदे पदे ॥
पदे पदेऽश्वमेधस्य यत्फलं गच्छतो गयाम् ।
तत्फलं च भवेन्नॄणां समग्रं नात्र संशयः ॥

स्मृतिरत्नावल्याम्—

विप्रघ्नस्य सुरापस्य बालघ्नस्य गुरुद्रुहः ।
नाशमायाति वै पापं गयां समनुयाति यः ॥

तथा—ततो गयां समाश्रित्य ब्रह्मचारी जितेन्द्रियः ।
अश्वमेधमवाप्नोति गमनादेव भारत ॥

ब्रह्मचारी क्रतोरन्यत्र । वह्निपुराणे—

यथा यथा व्रजन्याति जनः स्थानाद्गयां प्रति ।
तथा तथा दिवं यान्ति प्रेताः पूर्वपितामहाः ॥

तथा—गयाश्राद्धविधानार्थं मुक्त्वा यः कीकटं व्रजेत् ।
पापीयाञ्जायते सद्यो मृतश्चेद्गर्दभो भवेत् ॥

तथा—दृष्टार्थगमने दोषः तीर्थाद्यर्थं न दुष्यति ।
न जातु देशदोषोऽस्ति तीर्थे क्षेत्रे च दैवते ॥

गमने विधिरपि वायवीयाग्नेययोरुक्तः—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं ग्रामस्यापि प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
कृत्वा प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥

स्वगृहे घृतप्रधानद्रव्यं श्राद्धं नवदेवत्यं निर्वर्त्य श्राद्धशेषघृतं गृहीत्वा ग्रामं प्रदक्षिणीकृत्य ग्रामान्तरं गत्वा तत्र भुक्त्वा तमपि प्रदक्षिणीकृत्य प्रतिग्रहादिविवर्जितो गच्छेदिति व्याख्यातं स्मृतिरत्नावल्याम् । अन्ये षड्देवत्यमेतच्छ्राद्धमाहुः । गयाश्राद्धाखिलदेवताकमपरे । अन्यत्सर्वं गमनविधानं सामान्यविधितोऽवसेयम् ।

अथ गयायां वासकालेयत्ता । तत्र वाय्वग्निपुराणयोर्गयां प्रक्रम्य—

पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम् ।

इति सार्धमासवास उक्तः । अत्र च प्रवेशदिनादारभ्य सावनमानेन गणना ।

भारते तु शुक्लकृष्णपक्षक्रमेण मुख्यचान्द्रमानेन मासवास उक्तः ।

शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नृप ।
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥ इति ।

कृष्णशुक्लाविति पाठे गौणचान्द्राश्रयणम् । आमरणमपि गयायां वासोऽतिप्रशस्तः । तदुक्तं वायवीये—

सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम् ।
दुर्लभं किं पुनर्नित्यमस्यामेव व्यवस्थितिम् ॥
प्रमादान्म्रियते क्षेत्रे ब्रह्मादेर्मुक्तिदायके ।
ब्रह्मज्ञानाद्यथा मुक्तिस्तथा नास्त्यत्र संशयः ॥
कीकटादिमृतानां च पितॄणां मुक्तिदायिका ।
तस्मात्सर्वप्रयत्नेन वस्तव्यं च विचक्षणैः ॥
सार्धं क्रोशद्वयं मानं गयायां( या ) ब्रह्मणोदितम् ॥

स्मृतिरत्नावल्याम्—

स्थानं देहपरित्यागो गयायां तु विधीयते ।
श्राद्धं पिण्डोदकं चैव गयायां परिकीर्तितम् ॥

स्थानमवस्थानम् । ब्रह्मवैवर्ते—

गयाशीर्षे वसेन्नित्यं स्नानं फल्ग्वां समाचरेत् ।
गयाशीर्षे वपेत्पिण्डमेतत्स्वर्गेऽपि दुर्लभम् ॥ इति ।

अथ गयाश्राद्धाधिकारिणः । तत्र पुत्रादयोऽधिकारिणः प्रघट्टकादेव ज्ञेयाः । विशेषस्तूच्यते—

पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ।

इत्यस्यात्रापवादः स्मृतिरत्नावल्याम्—

आत्मजो वाऽन्यजो वाऽपि गयाकूपे यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥

तथा—सवर्णा ज्ञातयो मित्रा बान्धवाः सुहृदस्तथा ।
तेऽपि भूयो गयाकूपे पिण्डं दद्युर्विधानतः ॥

अत्र गयामात्रोपलक्षणं कूपग्रहणम् ।

न पुत्रेभ्यः पिता दद्यान्नानुजस्य तथाऽग्रजः ।
न पत्न्यै तु पतिर्दद्याद्बुद्धिमान्सुसमाहितः ॥
तेऽपि यान्ति दिवं सर्वे पिण्डे दत्त इति श्रुतिः ।
अतस्तेभ्योऽपि यत्नेन दद्यात्पिण्डं प्रयत्नतः ॥

तेऽपीति । अपिशब्दाच्छ्राद्धकर्तुरपि स्वर्गो भवतीत्यर्थः । बौधायनः—

पित्रा श्राद्धं न कर्तव्यं सर्वेषां तु कदाचन ।
भ्रात्रा न चैतत्कर्तव्यं भ्रातॄणां तु कनीयसाम् ॥
अतिस्नेहेन कुर्यातां सपिण्डीकरणं विना ।
गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥

संन्यासिना तु गयां गत्वा तेषु तेषु श्राद्धस्थलेषु पितृस्मरणपूर्वकं दण्डस्य स्पर्शनमात्रं कार्यं न तु श्राद्धतर्पणादि । तदुक्तं वायवीये—

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।
दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते ॥

स्पृष्ट्वेत्यन्तर्भावितणिजर्थं तेन स्पर्शयित्वेत्यर्थः ।

तथा—गयायां मुण्डपृष्ठे च कूपे कूपे वटे तथा ।
दण्डं प्रदर्शयन्भिक्षुः पितृभिः सह मुच्यते ॥
जीवत्पितृकस्तु प्रसङ्गतो गयां गत्वा मातृपार्वणं कुर्यात् ।
आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ॥
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ।

इति मैत्रायणीयपरिशिष्टात् । अत्र प्राप्तौ सत्यामित्यनेन प्रासङ्गिकी प्राप्तिरुक्ता तेनोद्दिश्य गत्वा मातृश्राद्धं न कार्यम् । तदुक्तम्—

गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेत् ॥ इति ।

प्रासङ्गिकप्राप्तो मृतमातृकोऽमृतमातृको वा जीवत्पितृकस्तीर्थान्तरवत्पिता येभ्यो दद्यात्तेभ्यो गयायां दद्यादिति केचित् । बहवस्तु नेत्याहुरित्यादि सर्वं प्रघट्टक एव विस्तरतो निरूपितम् । यश्च यदीयधनग्राही सोऽपि तदुद्देश्यके गयाश्राद्धेऽधिकारी । अत एव प्रेतधनमाजो वणिजो गयाश्राद्धं दर्शितं वायवीये—

प्रेतः कश्चिद्विमुक्त्यर्थं वणिजं कंचिदब्रवीत् ।
मम नाम्ना गयाशीर्षे पिण्डनिर्वपणं कुरु ॥
प्रेतभावाद्विमुक्तिः स्याद्गृहाण त्वं धनं मम ।
तद्धनं सर्वमादाय वणिक्स्वगृहमागतः ॥
धनं निक्षिप्य तत्रासौ किंचिदादाय निर्ययौ ।
आदौ गत्वा गयाशीर्षे प्रेतराजस्य पिण्डकम् ॥
स तदा बन्धुभिः सार्धं स्वपितृभ्यस्ततो ददौ ।
प्रेतः प्रेत्याद्विनिर्मुक्तो वणिक्स्वगृहमागतः ॥ इति ।

वह्निपुराणे—

पुत्रो वा बन्धुर्भृत्यो वा मित्रो वा स्वजनोऽपि वा ।
ऋणिको वाऽथ वा दद्याद्द्वयोः स्वर्गस्तदा तयोः ॥
एवमन्येऽप्यधिकारिणः प्रघट्टकेऽवगन्तव्याः ।

इति श्रीनारायणभट्टकृते त्रिस्थलीसेतौ गयाप्रकरणे गयाश्राद्धाधिकारिणः ।

अथ गयाश्राद्धे केचिद्विशेषधर्मा हेमाद्रिनिबन्धे—

महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके ।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् ॥

अयं पिण्डः स्वधा नम इत्यादिनिगमेषु पिण्डशब्दप्रयोगः ।

तथा—वृद्धिश्राद्धे गयाश्राद्धे प्रीतिश्राद्धे तथैव च ।
सपिण्डीकरणश्राद्धे न जपेत्पितृसूक्तकम् ॥

इत्यभिश्रवणजपनिषेधः । पिण्डद्रव्याणि च वायवीये—

पायसेनाथ चरुणा सक्तुना पिष्टकेन वा ।
तण्डुलैः फलमूलाद्यैर्गयायां पिण्डदो भवेत् ॥

सक्तुर्यवपिष्टं पिष्टकं तण्डुलपिष्टम् । तण्डुला अखण्डा एव । पायसादीनां पूर्वपूर्वाभाव उत्तरोत्तरम् ।

तथा—तिलाज्यमधुदध्यादि पिण्डद्रव्येषु योजयेत् ।

अग्निपुराणे तु—पायसेनाऽऽज्ययुक्तेन सक्तुना चरुणा तथा ।
पिण्डदानं तण्डुलैश्च गोधूमैस्तिलमिश्रितैः ॥

अन्यदपि पिण्याकतिलगुडादिद्रव्यं सामान्यविधौ तीर्थश्राद्धप्रकरण उक्तमिति नेहोच्यते । पिण्डाष्टाङ्गताऽपि तत्रैवोक्ता । पिण्डप्रमाणं तु वायवीये— .

मुष्टिमात्रप्रमाणेन आर्द्रामलकमात्रतः ।
शमीपत्रप्रमाणाद्वा गयापिण्डो विधीयते ।

अन्यान्यपि कपित्थादिप्रमाणानि सामान्यविधावुक्तानि । एतेषां शक्ताशक्तादिविषयतया व्यवस्था । सर्वथाऽशक्तौ शमीपत्रप्रमाणमपि दद्यादिति । यानि च 'शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे' इत्यादीनि तान्यपिशब्दाध्याहारेणाऽऽवश्यकतापराणि न तु परिमाणनियमार्थान्युक्तवाक्यविरोधात् ।

अथ गयाश्राद्धकालः । तत्र वायवीये—

गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ।

अग्निपुराणे—

गयाश्राद्धं प्रकुर्वीत संक्रान्त्यादौ विशेषतः ।
काले चापरपक्षे वा चतुर्थ्यादितिथिष्वपि ॥

संपद्यते वा यदृहरिति । अपरपक्ष इति सकलापरपक्षे चतुर्थ्यादौ वेत्यर्थः ।

स्मृतिरत्नावल्याम्—

मकरे वर्तमाने तु ग्रहणे चन्द्रसूर्ययोः।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम्॥

गारुडे—

तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम्।
अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु॥

अयं निषेधः सपिण्डीकरणाभावे सति। तदुक्तं तत्रैव—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चाऽऽपरपाक्षिकम्।
अब्दमध्ये न कुर्वीत सपिण्डीकरणं विना॥ इति।

अन्यत्रापि—

अस्थिक्षेपो गयाश्राद्धं तथैवाऽऽपरपाक्षिकम्।
प्रथमेऽब्दे न कुर्वीत कृतं यस्यौर्ध्वदैहिकम्॥

केचित्त्वेवं पठन्ति—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चाऽऽपरपाक्षिकम्।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने॥

अस्यापवादः—

अस्थिक्षेपं गयाश्राद्धं श्राद्धं चाऽऽपरपाक्षिकम्।
प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः॥ इति।

अब्दमध्येऽपि गयाश्राद्धादिषु देवतात्वयोग्यतासिद्धये देवतासंस्का-
रकमेकं पार्वणश्राद्धं भक्तिसंज्ञकं तद्वान्भक्तिमान्। तत्कृत्वा गयाश्रा-
द्धादि कुर्यादित्यर्थ इति कश्चित्। अन्ये तु यथाश्रुतमाहुः। अत्रेयं
व्यवस्था—अकृतसपिण्डनस्य प्रथमेऽब्दे गयाश्राद्धं नैव कार्यं कृतस-
पिण्डनस्यापि संभवे नेतीति मुख्यः कल्पः। पुनरागमनाद्यसंभवे तु
भक्त्या भक्तिश्राद्धं वा कृत्वा कुर्यान्नित्यत्वादिति। भक्तिश्राद्धं च
पशुपुरोडाशवद्देवतासंस्कारकं न कर्तृसंस्कारद्वाराऽधिकारसिद्ध्यर्थं तेना-
ब्दान्तर्यदीयं गयाश्राद्धादि कर्तव्यमस्ति तद्दैवत्यमेव पार्वणं कार्यम्।
अधिकारसिद्ध्यर्थत्वे त्वब्दान्तर्मात्रादेरपि गयाश्राद्धे कर्तव्ये पित्रादिपा-
र्वणमेव प्रसज्येत विशेषानुक्तेरिति। अब्दमध्ये गयाश्राद्धकरणे वृद्ध्या-
पत्ताविव मासिकान्यपकृष्य कृत्वा गयाश्राद्धं कुर्यादिति केचित्। तत्र
मूलवचो मृग्यम्। महापातकिविषये विशेषो ब्रह्मपुराणे—

क्रियते पतितानां च गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिः ॥

कूपग्रहणं गयाशिरमात्रोपलक्षणम् । अन्योऽपि विशेषो यो विवाहाद्यूर्ध्वं पिण्डदाननिषेधः । कार्ष्णाजिनिः—

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं नकुर्यात्तिलतर्पणम् ॥

स्मृतिसंग्रहे—

विवाहोपनयादूर्ध्वं वर्षं वर्षार्धमेव च ।
न कुर्यात्पिण्डनिर्वापं न दद्यात्करकाणि च ॥

तथा—वृद्धिमात्रे तथाऽन्यत्र पिण्डदाननिराक्रिया ।
कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मिणाम् ॥

इत्यादि । अयं गयायां न प्रवर्तते ।

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥

इति संग्रहवचनात् ।

तथा—पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये ।
गयायां पिण्डदानस्य न कदाचिन्निराक्रिया ॥

इति वचनाच्च । अन्यः सर्वो विशेषः सामान्यविधित एवावसेयः । तिलतर्पणे विशेषः स्मृतिदर्पण उक्तः—

उपरागे व्यतीपाते गयायामथ पर्वणि ।
आदित्यादिनिषेधेऽपि कर्तव्यं तिलतर्पणम् ॥

तथा—पितृयज्ञे च यज्ञे च गयायां च महालये ।
निषिद्धेऽपि दिने कुर्यात्तिलयुक्तं तु तर्पणम् ॥

इति श्रीमन्नारायणभट्टविरचिते त्रिस्थलीसेतौ गयाप्रकरणे
गयाश्राद्धे विशेषधर्माः ।

अथ सामान्यप्रघट्टकोक्तोऽपि संप्रदाननिर्णयः किंचिद्विशेषाभिधित्सया पुनः क्रियते । तत्र पूर्वोक्तनानावचनैर्वायुपुराणस्थाच्च ' गयायां धर्मपृष्ठे च ' इत्युपक्रम्य ' पितॄणां दत्तमक्षयम् ' इतिवचनात् ' पिण्डं दद्याच्च पित्रादेः ' इत्यादिबहुवचननिचयाच्च पित्रादित्रयाय श्राद्धं देयं मातामहादिभ्योऽपि ।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

इति गौतमोक्तेः । गयामुपक्रम्य 'मातामहानामप्येवं श्रुतिरेषा सनातनी' इति पाद्मसृष्टिखण्डोक्तेश्च । मात्रादित्रयायापि देयम् ।

अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि ।
अत्रं मातुः पृथक्श्राद्धमन्यत्र पतिना सह ॥

इति वाय्वग्निपुराणोक्तेः ।

नान्दीमुखेऽष्टकाश्राद्धे गयायां च मृताहनि ।
पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेत् ॥

इति शातातपोक्तेश्च । अत्र केचित्पितृवर्गमातामहवर्गरूपतया षड्देवत्यमेवेत्याहुः । अपरे तु मातृश्राद्धे पृथक्त्वविकल्पम् । अत एवापरार्के—गयामहालयादौ पृथक्सह वा भर्तृभिरिति सिद्धमिति । स्मृत्यर्थसारे तु—अष्टकासु गयायां च पितॄणां मातॄणां च श्राद्धं पृथक्कुर्यान्न सपत्नीकं मातामहानां सपत्नीकमेवेति नवदेवत्यमेव नियतमुक्तम् । हेमाद्रिस्मृतिरत्नावलीकारादिमतेऽप्येवमेव । वृद्धास्तु मातामह्यादिवर्गायापि पृथग्देयमिति वदन्ति । अत एवाग्निपुराणे—

पित्रादिनवदेवत्यं तथा द्वादशदैवतम् । इति ।

तथाशब्दोऽपि कल्पे । प्राच्या अप्येवम् । अत्र सर्वत्र मूलवचनानि देशाचारतश्च व्यवस्थेति सामान्यविधावेवोक्तम् । पितृव्यादिभ्यो देयमित्यपि तत्रैवोक्तम् । किं बहुना नात्र संबन्धादरः सर्वेभ्यो मित्रादिभ्यः स्मर्यमाणेभ्यो दद्यात् ।

यन्नाम्ना पातयेत्पिडं तन्नयेद्ब्रह्म शाश्वतम् ।

इति सामान्यत उक्तेः ।

दत्त्वा श्राद्धं सपिण्डानां पितृतीर्थेन वै ततः ।

इति वायवीयोक्तेश्च । मातुलपितृव्यादिपत्नीभ्योऽपि भर्तृपिण्डात्पृथगेव पिण्डादि कार्यं तदुक्तं वायवीये—

स्वगोत्रे परगोत्रे वा दंपत्योः पिण्डपातनम् ।
अपृथङ्निष्फलं श्राद्धं पिण्डं चोदकतर्पणम् ॥

अपृथक्सह । तथाऽन्योऽपि विशेषो वायवीये—

पिण्डं दद्याच्च पित्रादेरात्मनोऽपि तिलैर्विना ।

तथा—आत्मनोऽपि परस्यापि गयाश्राद्धं यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥

आग्नेये—

पिण्डो देयस्तु मित्रैर्वै स्वकीयकुलतारकैः ।
आत्मनश्च तथा देयोऽक्षयस्वर्गहेतवे ॥

स्मृतिरत्नावल्यामपि पुराणवचः—

आत्मनस्तु महाबुद्धैर्गयायां तु तिलैर्विना ।
पिण्डनिर्वपणं कुर्यात्तथाऽन्या अपि गोत्रजाः ॥

अन्या इति च्छान्दसम् । अन्येऽपि गोत्रजा इत्यर्थ इति । तिलाभावः कुशाभावस्याप्युपलक्षकः । इदं चान्यस्याऽऽत्मनो वा जीवतः पिण्डदानं जनार्दनहस्त एव कार्यं न तु गयातीर्थमात्रे ।

जनार्दने भस्मकूटे तस्य हस्ते तु पिण्डदः ।
मन्त्रेण चाऽऽत्मनोऽन्येषां सव्येनापि तिलैर्विना ॥
जीवतां दधिसंमिश्रः सर्वे ते विष्णुलोकगाः ॥

इत्यादिवायवीयादिवाक्यैः ।

एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।

इत्यादिवक्ष्यमाणमन्त्रलिङ्गेन च सामान्यवाक्यानां जनार्दनहस्तमात्रविषयत्वेनोपसंहारात् । आग्नेयवाक्येन चतुर्धाकरणवाक्यस्याऽऽग्नेयमात्रविषयत्वेन 'छागस्य वपाया मेदसोऽनुब्रूहि' इति प्रैषमन्त्रलिङ्गेन चाग्नीषोमीयपशुवाक्यस्य च्छागमात्रविषयत्वेनोपसंहारवत् । अग्निपुराणे तु स्वपिण्डास्त्रयो देया इत्युक्तम्—

त्रयः पिण्डा मया दत्तास्तव हस्ते जनार्दन ।
परलोकगते मह्यमक्षय्यमुपतिष्ठताम् ॥

इति मन्त्रलिङ्गात् । इदं स्वस्य स्वकीयाधिकारिपुत्राभावनिश्चये । परस्यापि जीवतस्तदीयाधिकारिपुत्राभावनिश्चय एव कार्यं न तु पुत्रवता संभावितपुत्रेण वा, न च पुत्रवतो न वा संभावितपुत्रस्य । जीवच्छ्राद्धसमानन्यायत्वादिति केचित्तत्र मूलं मृग्यम् । देशाचारवशाद्वा व्यवस्था । विशेषान्तरं वह्निपुराणे—

पापिनो ये दुराचाराः पतितास्तीर्थगाः खगाः ।
गयायां पिण्डदानेन मुक्तिभाजो भवन्ति ते ॥

तथा—ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी।
सर्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात्॥

पुराणान्तरे—
ब्रह्महा च कृतघ्नश्च गोघाती मधुपस्तथा।
स्तेयी गुर्वङ्गनागामी ये च बालगुरुद्रुहः॥

सर्वे त इति पूर्ववत्।

किंच—पिण्याकैः सक्तुभिर्वाऽपि गयाशीर्षे सकृन्नरः।

यन्नाम्नेति पूर्ववत्।

गारुडे—
असंस्कृता मृता ये च पशुचौरहताश्च ये।
सर्पदृष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते॥

अत्र पितृव्यादीनामेकोद्दिष्टमेव न तु पार्वणम्। तथा च हेमाद्रिणा बौधायनवच उदाहृतम्—
उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः।
श्वशुरभ्रातृतत्पुत्रयाज्यर्त्विक्प्रियपोषकाः॥
भगिनीस्वामिदुहितृजामातृभगिनीसुताः।
पितरः पितृपत्नीनां पितुर्मातुश्च या स्वसा॥
सखिद्रव्यदशिष्याश्च तीर्थे चैव महालये।
एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः॥

पितृपत्नीनां पितरः सपत्नमातामहाः। अत्रायं क्रमो न विवक्षितः किंत्वेकोद्दिष्टविधानमात्रमुभयविवक्षायां वाक्यभेदापत्तेः। अतः स प्रघट्टकोक्त एव ग्राह्यः।

अथ गयास्थविप्रप्रशंसा वायवीये—
ब्रह्मप्रकल्पितान्विप्रान्हव्यकव्यादिनाऽर्चयेत्।
तैस्तुष्टैस्तोषिताः सर्वाः पितृभिः सह देवताः॥

आग्नेये ब्रह्मा—
ये पु(यु)ष्मान्पूजयिष्यन्ति गयायामागता नराः।
हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत्॥
नरकात्स्वर्गलोकाय स्वर्गलोकात्परां गतिम्।

एतेषां च श्राद्धीयब्राह्मणलक्षणसत्त्वे नियमस्तदभावे त्वनियमो गयाश्राद्धमात्रे। अत एवाऽऽग्नेये गयाश्राद्धं प्रकुर्वीतेति प्रक्रम्य पूर्वेद्युश्च निमन्त्रयेत्।

यतीन्गृहस्थान्साधून्वा स्नातकाञ्श्रोत्रियान्द्विजान्।
अनवद्यान्कर्मनिष्ठाञ्शिष्यान्वाऽऽचारसंयुतान्॥
वर्जयेदकुलीनांश्च गृह्णीयान्नानिमन्त्रितान्।
इति सलक्षणविप्रादरो निषिद्धत्यागश्चोक्तः॥

स्मृतिरत्नावल्यामपि—

यदि पुत्रो गयां गच्छेत्कदाचित्कालपर्ययात्।
तानेव भोजयेद्विप्रान्ब्रह्मणा वै प्रकल्पितान्॥

इति पौराणं वचनमुदाहृत्यात्रावधारणं तत्पुरःसरनियमार्थं न त्वन्यनिवृत्तये योग्यातिक्रमे दोषश्रवणादित्युक्तम्। गयायां तु निर्गुणा अपि तत्रस्था एव द्विजा भोज्या इति तु हेमाद्रिः। वयं तु—

ब्रह्मप्रकल्पितान्विप्रान्भोजयेत्पूजयेदथ।

इत्यक्षयवटप्रकरणे पुनः श्रवणाच्चतुर्धाकरणोपसंहारन्यायेनाक्षयवटश्राद्धनियमो न गयाश्राद्धमात्रे। एवं च शिष्टाचारोऽप्यनुगृह्यत इति।

इति श्रीभट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ
गयाप्रकरणे गयाकार्योपोद्घातः।

अथ कार्यम्। तत्र गयायां प्रवेशदिनकृत्यं वायुपुराणे—

अश्वमेधमवाप्नोति गमनादेव नारद।

इत्युक्त्वा—

ततो गयाप्रदेशे तु पूर्वतोऽस्ति महानदी।

[ महानदी ]ति फल्ग्वा एव नामधेयम्। तोयं समुत्पाद्येति। शुष्कनदीत्वाद्वालुकाखननेन तोयमुत्पाद्य। तर्पणमिति। तीर्थप्राप्तिनिमित्तकश्राद्धस्याप्युपलक्षणम्। एवं फल्ग्वां श्राद्धादि कृत्वा तस्मिन्नेव दिने प्रेतशिलां गच्छेत्।

तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च।
पितॄनावाह्य तेभ्यश्च मन्त्रैः पिण्डांस्तु निर्वपेत्॥

इति वायवीयवचनात्सकलदेशीयशिष्टाचारात्सामर्थ्याच्च। प्रेतशिलाश्राद्धफलभूतप्रेतत्वविमोकेन हि पितॄणां श्राद्धान्तरोद्देशयोग्यता जायते। वायवीये प्रेतशिलास्वरूपोक्तिपूर्वकं तत्र कर्तव्यमुक्तम्—

आच्छादितः शिलापादः प्रभासेनाद्रिणा ततः ।
भासितो भास्करेणेति प्रभासः परिकीर्तितः ॥
प्रभासाद्रिं विनिर्भिद्य शिलाङ्गुष्ठो विनिर्मितः ।
अङ्गुष्ठास्थित ईशोऽपि प्रभासेशः प्रकीर्तितः ॥
शिलाङ्गुष्ठैकदेशो यः सा च प्रेतशिला स्मृता ।
पिण्डप्रदानात्तस्यां तु प्रेतत्वान्मुच्यते नरः ॥
महानदीप्रभासाद्र्योः संगमे स्नानकृन्नरः ।
रामो देव्या सह स्नातो रामतीर्थं ततः स्मृतम् ॥
प्रार्थितोऽथ महानद्या राम स्नातो भवान्यदि ।
रामतीर्थं भवत्वेतत्सर्वलोकेषु पावनम् ॥
जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया ।
तत्सर्वं विलयं यातु रामतीर्थाभिषेचनात् ॥
मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः ।
रामतीर्थे पिण्डदस्तु विष्णुलोकं प्रयात्यसौ ॥
तथेत्युक्त्वा स्थितो रामः सीतया भरताश्रमे ।
रामतीर्थे नरः स्नात्वा मन्त्रैः पिण्डप्रदो भवेत् ॥
प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः ।
राम राम महाबाहो देवानामभयंकर ॥
त्वां नमस्ये ह देवेश मम नश्यतु पातकम् ।
नमस्कृत्य प्रभासेशं भासमानः शिवं व्रजेत् ॥
तं च शंभुं नमस्कृत्य कुर्याद्याम्यबलिं ततः ।
आपस्त्वमसि देवेश ज्योतिषां पतिरेव च ॥
पापं नाशय देवेश मनोवाक्कायकर्मजम् ।
शिलाया जघनं भूयः समाक्रान्तं नगेन तु ॥
धर्मराजेनाद्रिरुद्धो न गच्छे(च्छ)ति नगः स्मृतः ।
यमराजभ्रमराजौ निश्चलार्थं व्यवस्थितौ ॥
ताभ्यां पिण्डमदत्त्वा तु गयाश्राद्धमपार्थकम् ।
श्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ ॥
ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ।

आच्छादित इत्यादि । प्रभाससंज्ञेनाद्रिणा प्रेतशिलायाः पाद आच्छादितः । प्रसङ्गात्प्रभाससंज्ञानिमित्तकथनं भासित इति । शिलेति ।

शिलाङ्गुष्ठावयवः प्रेतशिला तस्यां यस्य पिण्डो दीयते स प्रेतत्वविमुक्तिलक्षणफलवान्भवतीत्यर्थः । महानदीति । अत्र स्नानकृन्नरोऽपि प्रेतत्वान्मुच्यत इत्यनुपक्षनीयम् । देव्या सीतया प्रार्थित इति । हे राम राम यदि भवान्स्नातस्तर्हि रामतीर्थमेतदस्तु । जन्मान्तरेत्यादिमन्त्रेण च स्नात्वा यः श्राद्धं पिण्डदानं च रामतीर्थे कुर्यादसौ विष्णुलोकं यात्वित्यन्ता नदीकृता प्रार्थना । सीतयेति सहार्थे तृतीया । मन्त्रैरिति । स्वस्वशाखोक्तैरस्मत्कुले मृता ये चेत्यादिवक्ष्यमाणपौराणैश्च । प्रेतत्वादिति । प्रेतशिलाश्राद्धेन प्रेतत्वान्मुक्ताः पितरो रामतीर्थश्राद्धेन पितृभावं प्राप्नुवन्तीत्यर्थः । ययुरिति । यान्तीत्यर्थे लकारव्यत्ययः । रामरामेति । अनेन मन्त्रेण मन्त्रलिङ्गबलाद्रामं नमस्कृत्य प्रभासेशं च नमस्कृत्य । शिवं शिवलोकम् । तं चेति । तं रामं चः समुच्चये । तेन पुनरपि रामप्रभासौ नमस्कार्यावित्यर्थ इति कश्चित् । वस्तुतस्तु प्रभासेशनमस्कारानुवादमात्रमेतद्याम्यबलिविधानार्थं दर्श ऐन्द्राग्नविधानार्थाग्नेयपुनःश्रवणवत् । आप इत्यादिर्बलिदाने मन्त्रः । बलिश्च कुशतिलजलयुतेनान्नेन । शिलाया इति गयाशिरसि स्थापितायाः शिलाया जघनभागो नगनाम्ना पर्वतेनाऽऽक्रान्तः । तस्य च नगस्य स्थिरतायै यमराजभ्रमराजौ स्थापितौ । अतः प्रेतशिलादक्षिणभागस्थे नगनाम्नि पर्वते गयाश्राद्धसार्थक्याय श्वानौ द्वावितिमन्त्रेण यमराजभ्रमराजयोर्बलिमेकमेव दद्यात् । धर्मराजेनेति प्रसङ्गान्नगनामनिरुक्तिः । अत्र बलिदानं नित्यं बलेरदाने गयाश्राद्धानर्थक्यश्रवणात् । इतरत्तु काम्यं यथाकामनं कुर्यादिति । शेषं स्पष्टम् । एतदन्तं प्रथमेऽह्नि कृत्यम् । इदं च प्रेतशिलादिषु सर्वेषु गयातीर्थेषु श्राद्धं प्रेतपर्वतश्राद्धविकृतिभूतत्वात्सकलतदङ्गयुतं कार्यम् ।

सर्वस्थानेषु चैवं स्यात्पिण्डदानं तु नारद ।

इति वायुपुराणे प्रेतपर्वतश्राद्धमुक्त्वाऽन्तेऽतिदेशात् । ये च तत्र तत्र विशेषविहिता धर्मास्तेऽपि भवन्त्यामनहोमन्यायेन । अत्र प्रेतशिलायां प्रेतपर्वते वा पित्रादिसकलपितॄणां प्रेतत्वविमुक्तिकामनया नूतनजलपूर्णभाण्डस्फोटनमथाऽऽचरन्ति शिष्टाः, तच्च तत्रत्यसकलकृत्यानन्तरं तथैव शिष्टाचारात् । गयायां च प्राप्तिदिने तीर्थप्राप्तिनिमित्तकौ मुण्डनोपवासौ न कार्यौ—

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ॥

इतिगयापर्युदासेन तयोर्विधानात् । तत्रापि तीर्थेष्वितिनिमित्तसप्तम्या तीर्थे प्राप्तिनिमित्तक एवोपवासे गयापर्युदासात्तत्प्राप्तिनिमित्तक एव स प्राप्तिदिने न कार्यः । एकादश्यादौ तु तन्निमित्तकः कार्य एव तस्य तीर्थप्राप्तिनिमित्तकत्वाभावात् । एवं पित्रादिमरणनिमित्तकमुण्डनेऽपि ज्ञेयम् ।

इति त्रिस्थलीसेतौ गयायां प्रथमदिनकृत्यम् ।

अथ द्वितीयदिनकृत्यं तत्र वायुपुराणे—

सर्वस्थानेषु चैवं स्यात्पिण्डदानं तु नारद ।

इति प्रेतपर्वतश्राद्धमुक्त्वा तद्धर्माणां वचनेनातिदेशात्सकलगयाधिकरणकतीर्थश्राद्धप्रकृतिभूतं प्रेतपर्वतकृत्यं निरूप्य तत्र वायुपुराणे—

अपरेऽह्नि शुचिर्भूत्वा गच्छेत प्रेतपर्वतम् ।
ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत्सुधीः ॥

अपरेऽह्नि गयाप्राप्त्युत्तरदिने । प्रेतपर्वतो गयावायव्यदिशि गयातो गव्यूत्यधिकदूरस्थः । ब्रह्मकुण्डे प्रेतपर्वतमूल ईशानभागे । तत्र स्नानतर्पणतदुपलक्षितश्राद्धानि कार्याणि । ततः पर्वतमारुह्य—

कृत्वाऽऽह्वानं पितॄणां च प्रयतः प्रेतपर्वते ।
प्राचीनावीतिना भाव्यं दक्षिणाभिमुखः स्मरन् ॥
कव्यवाहोऽनलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ।
ते सर्वे तृप्तिमायान्तु गयाश्राद्धेन शाश्वतीम् ॥
आचम्योक्त्वाऽथ पञ्चाङ्गं प्राणानायम्य यत्नतः ।
पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ॥
एवं संकल्प्य विधिवच्छ्राद्धं कुर्याद्यथाक्रमम् ।
पितॄनावाह्य चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् ॥
तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च ।
प्रक्षाल्य सर्वं तत्स्थानं पञ्चगव्यैः पृथक्पृथक् ॥

स्वैर्मन्त्रस्थै संपूज्य पदे च पददेवताम् ।
यावत्तिला मनुष्यैस्तु गृहीताः पितृकर्मणि ॥
गच्छन्ति भीता असुराः सिंहत्रस्ता यथा मृगाः ।
दत्त्वा श्राद्धं सपिण्डानां तेषां दक्षिणभागतः ॥
कुशैरास्तीर्य तेषां तु सकृद्दत्त्वा तिलोदकम् ।
गृहीत्वाऽञ्जलिना तेभ्यः पितृतीर्थेन यत्नतः ॥
सक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिण्डकम् ।
तिलाज्यदधिमध्वादि पिण्डद्रव्येषु योजयेत् ॥
ततः पिता पितामहश्चेत्यादिरक्षय्यपिण्डमन्त्रः ।
संबन्धिनस्तिलाद्भिश्च कुशेष्वावाहयेत्ततः ॥

ततोऽस्मत्कुल इत्यादिमन्त्राः ।

एतांस्तु सर्वमन्त्रांश्च स्त्रीलिङ्गान्तान्समुह्य च ॥
पिण्डान्दद्याद्यथापूर्वं पितॄनावाह्य पूर्ववत् ।
पिण्डपात्रे तिलान्दत्त्वा पूरयित्वा शुभोदकैः ॥
मन्त्रेणानेन पिण्डांस्तान्प्रदक्षिणकरं यथा ।
परिषिञ्चेत्त्रिधा सर्वान्प्रणिपत्य क्षमापयेत् ।

तथा—पितॄन्विसृज्य चाऽऽचम्य साक्षिणः श्रावयेत्सुरान् ।
ततः 'साक्षिणः सन्तु मे देवाः' इत्यादिमन्त्राः ॥
सर्वस्थानेषु चैवं स्यात्पिण्डदानं तु नारद ।
प्रेतपर्वतमारभ्य कुर्यात्तीर्थेषु च क्रमात् ॥
तिलमिश्रांस्ततः सक्तून्निक्षिपेत्प्रेतपर्वते ।
ये केचित्प्रेतरूपेण वर्तन्ते पितरो मम ॥
ते सर्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ।
आब्रह्मस्तम्बपर्यन्तं यत्किंचित्सचराचरम् ।
मया दत्तेन तोयेन तृप्तिमायातु सर्वशः ॥
प्रेतत्वात्तु विमुक्ताः स्युः पितरस्तस्य नारद ।
प्रेतत्वं तस्य माहात्म्यादस्य चापि न विद्यते ॥

पञ्चाङ्गमिति । तिथ्यादिपञ्चकमुक्त्वेत्यर्थः । प्रणवसप्तव्याहृतिगायत्रीतच्छिरःप्रणवरूपपञ्चाङ्गसहितं प्राणायामं कृत्वेत्यर्थ इति कश्चित् । तन्न । प्रणवादिविशिष्टस्यैव प्राणायामस्वरूपत्वात्पञ्चाङ्गमित्यस्य वैय-

र्थ्यापातादुक्त्वेत्यस्य वैयर्थ्यप्रसङ्गाच्च । स्वैर्मन्त्रैरिति । पित्रादिमन्त्रैः । प्रसङ्गात्पदश्राद्धे विशेषमाह—पदे चेति । तथा च विष्णुपदादिश्राद्धे पददेवतां विष्ण्वादिकां नाम्ना, चकारात्पित्रादींश्च तत्तन्मन्त्रेणार्चयेदित्यर्थः । एतांस्त्विति । एतानस्मत्कुल इत्यादीन्मित्राणि सख्य इत्यन्तानावाहनमन्त्रान्पिण्डदानमन्त्रांश्च स्त्रीलिङ्गतयोहितावाहनमन्त्रैः पूर्ववदावाह्योहितमन्त्रैरेव पूर्ववत्पुंषोडशीवत्स्त्रीषोडश्याऽपि पिण्डा देया इत्यर्थः । अन्यत्सर्वं प्रयोगक्रमकथनेनैव स्पष्टं भविष्यतीति नेह व्याख्यायते ।

अथ तृतीये दिने पञ्चतीर्थीकृत्यं वायवीये—

आदौ तु पञ्चतीर्थेषु चोत्तरे मानसे विधिः ।
आचम्य कुशहस्तेन शिरस्यभ्युक्ष्य वारिणा ॥
उत्तरं मानसं गच्छेन्मन्त्रेण स्नानमाचरेत् ।
उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ॥
सूर्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ।
स्नात्वाऽथ तर्पणं कुर्याद्देवादीनां यथाविधि ॥
आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
श्राद्धं सपिण्डकं कुर्यात्स्वसूत्रोक्तविधानतः ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
माता पितामही चैव तथैव प्रपितामही ।
मातामहस्तत्पिता च प्रमातामहकादयः ॥
तेषां पिण्डो मया दत्तो ह्यक्षय्य उपतिष्ठताम् ।
ॐ नमो मानवे भर्त्रे सोमभौमज्ञरूपिणे ॥
जीवभार्गवशनैश्चरराहुकेतुस्वरूपिणे ।
सूर्यं नत्वाऽर्चयित्वा च सूर्यलोकं नयेत्पितॄन् ॥
मानसं हि सरो ह्यत्र तस्मादुत्तरमानसम् ।
उत्तरान्मानसान्मौनी व्रजेद्दक्षिणमानसम् ॥
उदीचीतीर्थमित्युक्तं तत्रोदीच्यां विमुक्तिदम् ।
उदीच्यां मुण्डपृष्ठस्य देवर्षिपितृसेवितम् ॥
मध्ये कनखलं तीर्थं पितॄणां मुक्तिदायकम् ।
स्नातः कनकवद्भाति नरो याति पवित्रताम् ॥

अतः कनखलं लोके ख्यातं तीर्थमनुत्तमम् ।
तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम् ॥
दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतम् ।
स्नात्वैतेषु विधानेन कुर्याच्छ्राद्धं पृथक्पृथक् ॥
दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये ।
सूर्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥
नमामि सूर्यं तृप्त्यर्थं पितृणां तारणाय च ।
पुत्रपौत्रधनैश्वर्य आयुरारोग्यवृद्धये ॥
ब्रह्महत्यादिपापौघघातनाय विमुक्तये ।
दिवाकर करोमीह स्नानं दक्षिणमानसे ॥
अनेन स्नानपूजादि कुर्याच्छ्राद्धं सपिण्डकम् ।
कृत्वा नत्वाऽथ मौनार्कमिमं मन्त्रमुदीरयेत् ॥

कव्यवाल इति श्लोकत्रयं प्रेतपर्वतवत् ।

फल्गुतीर्थं ततो गच्छेत्सर्वतीर्थोत्तमोत्तमम् ॥
मुक्तिर्भवति कर्तॄणां पितॄणां श्राद्धतस्तथा ।
ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत्पुरा ॥
दक्षिणाग्निहुतं नूनं तद्भवः फल्गुतीर्थकम् ।
यस्मिन्फलति फल्गुर्गौः कामधेनुर्जलं मही ॥
दृष्टिरन्तर्गतं यस्मात्फल्गुतीर्थं न निष्फलम् ।
तीर्थानि यानि सर्वाणि भवनेष्वखिलेषु च ॥
तानि स्नातुं समायान्ति फल्गुतीर्थे सुरैः सह ।
गङ्गा पादोदकं विष्णोः फल्गु ह्यादिगदाधरः ॥
स्वयं हि द्रवरूपेण तस्माद्गङ्गाधिकं फलम् ।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥
नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ।

इयं च स्तुतिर्न फलम् ।

फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः ।
पितृणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥

आग्नेये तु पितृब्रह्मलोकाप्तिः फलं तदुक्तम्—

फल्गुतीर्थे तीर्थराजे करोमि स्नानमादृतः ।
पितृणां ब्रह्मलोकाप्त्यायात्मनो भुक्तिमुक्तये । इति ॥

फल्गुतीर्थे नरः स्नात्वा तर्पणं श्राद्धमाचरेत् ॥
सपिण्डकं च सूत्रोक्तं नमेदथ पितामहम् ।
नमः शिवाय देवाय ईशानपुरुषाय च ॥
अघोरवामदेवाय सद्योजाताय शंभवे ।
नत्वा पितामहं देवं मन्त्रेणानेन पूजयेत् ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ।
आत्मानं पितृभिः सार्धं स नयेद्वैष्णवं पदम् ॥
अमृतैः पञ्चभिः स्नानं वस्त्रपुष्पाद्यलंकृतिम् ।
न कुर्याद्यो गदापाणेस्तस्य श्राद्धमपार्थकम् ॥
ओं नमो वासुदेवाय नमः संकर्षणाय च ।
प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे ॥
पञ्चतीर्थ्यां नरः स्नात्वा ब्रह्मलोकं नयेत्पितॄन् ।
मुण्डपृष्ठान्नगाधस्तात्फल्गुतीर्थमनुत्तमम् ॥
अत्र श्राद्धादिना सर्वे पितरो मोक्षमाप्नुयुः ।

आदाविति । पञ्चतीर्थेषु पञ्चतीर्थीकर्मण्यादावुत्तरमानसे विधिः । आचम्येति । उत्तरमानसं गत्वा कुशपाणिस्तदुदकेनाऽऽचम्य शिरश्चा-भ्युक्ष्योत्तरे मानस इति मन्त्रेण स्नात्वा देवादितर्पणानन्तरमाब्रह्मेतिम-न्त्रेणैकाञ्जलिं दत्वा सपिण्डकं श्राद्धं कृत्वा पिता पितामहश्चेत्यादिना श्लोकद्वयेनाक्षय्यपिण्डो देयः प्रेतशिलावदिति संपिण्डितार्थः । उत्तरे मानस इति । अत्र च नियताङ्गमन्त्रलिङ्गवदा(ला)दात्मशुद्ध्यादित्रयं समुच्चितमेव फलं नतु योगसिद्धिन्यायेन प्रत्येकम् । स्नानमन्त्रश्च नियतस्नानमन्त्रानन्तरं पठनीय आगन्तूनामन्ते निवेश इति न्यायात् । एवमञ्जलिमन्त्रेऽपि प्रकृततर्पणानन्तर्यम् । अत्र श्राद्धेऽ-क्षय्यपितृतृप्तिः फलम् । पुष्करेष्वक्षयं श्राद्धमित्युपक्रम्यैवमेव गयाशीर्षवटे फल्गुतीर्थ उत्तरमानसे मतङ्गवाप्यां विष्णुपदे चेति विष्णुस्मृतेः । ॐ नम इति सूर्यनतावर्चने च मन्त्रः । उदीचीतीर्थ-मिति । तत्र दक्षिणमानसे त्रिधा विभक्त उत्तरभाग उदीचीतीर्थं मध्य-भागः कनखलं दक्षिणभागो दक्षिणमानसमिति दक्षिणमानससमाख्याते सरसि तीर्थत्रयम् । तत्र प्रत्येकं स्नाने श्राद्धे च पितृविमुक्तिर्भवतीत्यर्थः । दक्षिणे मानस इत्यादिश्लोकत्रयेण स्नानदक्षिणार्कपूजानत्यादि यथालिङ्गं कार्यम् । कश्चित्तु दक्षिणे मानस इति श्लोकः स्नानमन्त्रः, नमामि

सूर्यमिति तु दक्षिणार्कनत्यादौ, ब्रह्महत्यादीत्यादि त्वधिकमित्याह। एतस्यार्कस्य मौनेन पूजनीयत्वान्मौनार्क इति नाम। कव्यवाल इति मन्त्रस्तत्रैव पठनीयः। ततः फल्गुतीर्थं गच्छेत्। मुक्तिरिति। श्राद्ध-कर्तृदेवतयोर्मुक्तिः फलमित्यर्थः। ब्रह्मणेति। विष्णुः फल्गुनदीरूपोऽभवत्। दक्षिणाग्नौ यद्ब्रह्मणा हुतं ततः फल्गुतीर्थं जातम्। तद्द्रव इति पाठे तस्य हुतस्य द्रवो रस इत्यर्थः। यस्मिन्फल्गुतीर्थे फल्गुर्नदी गौर्जलं च कामधेनुर्मही च गृष्टिः सकृत्प्रसूता गौरिदं त्रयमन्तर्गतं मनश्चिन्तितं फलं यस्मात्फलत्यतः फल्गुतीर्थं न निष्फलमित्यर्थः। शेषं स्पष्टम्। तत्र फल्गुतीर्थ इति मन्त्रेण स्नात्वा देवर्षिपितॄन्संतर्प्य सपिण्डकं स्वसूत्रोक्तविधिना श्राद्धं कार्यम्। नमेदथेति। ततो मधुस्रवा-दक्षिणकूलस्थं पितामहं नमः शिवायेतिमन्त्रेण नमेत्पूजयेच्च। फल्गुतीर्थ इति। अत्र तर्पणादिव्यवहितमपि पूर्वकृतमेव स्नानमनूद्यते गदाधरदर्शन-विधानाय न त्वपूर्वं विधीयते, अपूर्वान्तरकल्पनापत्तेः। एतेन पुनः फल्गुतीर्थे स्नानमित्युक्तिः प्रत्युक्ता। ततः पञ्चामृतादिपूजा कार्या। तत्र पूजानमस्कारयोर्नमो वासुदेवायेत्यादिमन्त्रः। अकरणे श्राद्धानर्थ-क्यानिष्टोक्त्या यथाशक्ति गदाधरपूजाया आवश्यकतोक्ता। पञ्चतीर्थ्या-मिति। अत्र च पूर्वोक्तस्यैवोत्तरमानसोदीचीकनखलदक्षिणमानसफल्गु-रूपपञ्चतीर्थीस्नानस्य फलसंबन्धार्थं पुनरनुवादः 'संनिधौ त्वविभागेन फलार्थेन पुनः श्रुतिः' [ जै० २ । ३ । १३ । २६ ] इति न्यायात्। न तु स्नानान्तरविधानम्। आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इतिवदसंनि-ध्यभावेन 'फलं चाकर्मसंनिधौ' [ जै० २ । ३ । १२ । २५ ] इति न्यायाप्रवृत्तेः। फलान्तरार्थत्वेन पूर्वश्रुतस्यापि संयोगपृथक्त्वन्यायेन ब्रह्महत्यानिरासार्थाश्वमेधवत्फलान्तरार्थत्वश्रवणाविरोधाच्च। अत एवा-ग्निपुराणे पुनःस्नानानुवादोऽपि न कृतः। एतेन पञ्चसु तीर्थेषु पुनः स्नानं कार्यमिति वदन्तः प्रत्युक्ताः। पञ्चतीर्थ्यां फल्गुतीर्थं पञ्चममुक्तं तस्य स्थलमाह—मुण्डपृष्ठादिति। अत्रानुष्ठानप्रयोगो वक्ष्यते।

अथ पञ्चतीर्थीदिनोत्तरदिनकृत्यं तत्र वायुपुराणे—

> प्रथमेऽह्नि विधिः प्रोक्तो द्वितीये दिवसे व्रजेत्।
> धर्मारण्यं तत्र धर्मो यस्माद्यागमकारयत्॥
> मतङ्गवाप्यां स्नात्वा तु तर्पणं श्राद्धमाचरेत्।
> गत्वा नत्वा मतङ्गेशमिमं मन्त्रमुदीरयेत्॥

प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।
मयाऽऽगत्य मतङ्गेऽस्मिन्पितॄणां निष्कृतिः कृता ॥
पूर्ववद्ब्रह्मतीर्थे च कूपे श्राद्धादि कारयेत् ।
तत्कूपयूपयोर्मध्ये कुर्वंस्तु त्रायते पितॄन् ॥
धर्मं धर्मेश्वरं नत्वा महाबोधितरुं नमेत् ।
चलद्दलाय वृक्षाय सर्वदा चलविष्णवे ॥
बोधितत्त्वाय यज्ञाय अश्वत्थाय नमो नमः ।
एकादशोऽसि रुद्राणां वसूनामष्टमस्तथा ॥
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल । इति ।

प्रथमेऽह्नीति । पञ्चतीर्थ्यादिकृत्यदिनसमुदाये प्रथमेऽह्नि विधिरुक्तस्तत्रैव द्वितीयदिवसे धर्मारण्यं व्रजेदित्यर्थः । अग्निपुराणस्था अपि 'प्रथमे दिवसे तीर्थे गत्वा ह्युत्तरमानसे' इति 'धर्मारण्यं द्वितीयेऽह्नि' इत्यादयः प्रथमादिशब्दा एवमेव व्याख्येयाः। धर्मारण्य एव मतङ्गवापी। तत्र स्नाने सर्वपापविमुक्तिः फलं 'पुष्करे स्नातमात्रः सर्वपापेभ्यः पूतो भवति' इत्युपक्रम्य 'एवमेव फल्गुतीर्थ उत्तरमानसे मतङ्गवाप्याम्' इति विष्णुस्मृतेः । पूर्ववदिति । मतङ्गवापीवद्ब्रह्मतीर्थसंज्ञके कूपे । श्राद्धादाविति । आदिपदात्तर्पणादि । तत्कूपेति । ब्रह्मकूपयूपयोर्मध्येऽपरं श्राद्धं कार्यम् । ततो धर्मधर्मेश्वरौ नम्यौ । महाबोधितरुमश्वत्थम् । अत्र यद्यपि नतिमात्रमुक्तं तथाऽपि तदधस्ताच्छ्राद्धमपि कार्यं 'महाबोधितरुं गत्वा पिण्डदः स्वर्गलोकभाक्, इत्यग्निपुराणवचनात् । चलद्दलायेति मन्त्रावश्वत्थनमने । क्वचित्त्विमौ न पठितौ तदा त्वमन्त्रिकैव नतिः । अनुष्ठानप्रयोगं तु वक्ष्यामः ।

अथैतदग्रिमदिनकृत्यं वायवीये—

तृतीये ब्रह्मसरसि स्नात्वा श्राद्धं समाचरेत् ।
स्नानं करोमि तीर्थेऽस्मिन्नृणत्रयविमुक्तये ॥
श्राद्धाय पिण्डदानाय तर्पणायाऽऽत्मशुद्धये ।
तत्कूपयूपयोर्मध्ये कुर्वंस्तारयते पितॄन् ॥
स्नानं कृत्वोच्छ्रितो यूपो ब्रह्मणो यूप इत्युत ।
कृत्वा ब्रह्मसरःश्राद्धं ब्रह्मलोकं नयेत्पितॄन् ॥
गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः ।
तेषां सेचनमात्रेण पितरो मोक्षगामिणः ॥

आम्रं ब्रह्मसरोद्भूतं सर्वदेवमयं तरुम् ।
विष्णुरूपं प्रसिञ्चामि पितॄणां च विमुक्तये ॥

आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया व्यर्थकरी प्रसिद्धा ।
आम्रस्य मूले सलिलं च देयं नोपेक्षणीयं विबुधैर्मनुष्यैः ॥

यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ।
ब्रह्माणं च नमस्कृत्य पितॄन्ब्रह्मपुरं नयेत् ॥
ॐ नमो ब्रह्मणेऽजाय जगज्जन्मादिरूपिणे ।
भक्तानां च पितॄणां च तारणाय नमो नमः ॥
ततो यमबलिं क्षिप्त्वा मन्त्रेणानेन यत्नतः ।
यमराजभ्रमराजौ निश्चलार्थं व्यवस्थितौ ॥
ताभ्यां बलिं प्रदास्यामि पितॄणां मुक्तिहेतवे ।
ततः श्वानबलिं दद्यान्मन्त्रेणानेन नारद ॥
वैवस्वतकुलोद्भूतौ द्वौ श्यामशबलौ शुनौ ।
ताभ्यां बलिं प्रदास्यामि रक्षेतां पथि मां सदा ॥
ततः काकबलिं क्षिप्त्वा पुनः स्नानं समाचरेत् ।
ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ॥
वायसाः प्रतिगृह्णन्तु भूम्यां पिण्डं मयाऽर्पितम् । इति ॥

तृतीय इति । पञ्चतीर्थादिनमादायेति पूर्ववद्व्याख्येयम् । तदिति । स्नानमिति मन्त्रेण स्नात्वा कूपयूपयोर्मध्ये तच्छ्राद्धं कुर्वन्पितॄंस्तारयत इत्यर्थः । उच्छ्रित इति ब्रह्मणेति शेषः । ब्रह्मणोच्छ्रितो यूपो ब्रह्मयूप इत्युत प्रसिद्ध इत्यर्थः । कृत्वेति । ब्रह्मसरसि श्राद्धस्यैव ब्रह्मलोकनयनं फलान्तरमुच्यते तच्च योगसिद्धिन्यायेन पूर्वोक्तपितृतरणफलेन सह विकल्पते । एतेनैतयोः फलयोः समुच्चय एवैकत्रैवाऽऽस्नानादिति निरस्तम्। ततो गोप्रचारतीर्थसमीपस्थं यं कंचिदाम्रं पितृमोक्षोद्देशेनाऽऽम्रमित्यादि-मन्त्रेण शिष्टाचारात्कुशयुक्तेन ब्रह्मसरःसमानीतानुच्छिष्टशुद्धोदकेन प्रसिञ्चेत् । अत्र यद्यप्याम्रा इति बहुवचनं श्रुतं तथाऽप्युद्देशगतत्वाद्ग्रहवदविवक्षितम् । अत एव मन्त्र आम्रमित्येकवचनमन्यथा तद्विरोधः स्यात् । तेन यस्य कस्यचिदाम्रस्य सेकः कार्यः । ॐ नम इति ब्रह्मनमस्कारे मन्त्रः । ततो यमराजेतिमन्त्रेण यमबलिः । वैवस्वतेतिमन्त्रेण श्वबलिः । ऐन्द्रेतिमन्त्रेण काकबलिस्ततः स्नानम् । तच्चोपस्थितत्वा-

च्छिष्टाचाराच्च ब्रह्मसरस्येव । इदं च स्नानं बलिदाननिमित्तकाशुचित्वपरिहारार्थत्वाच्चण्डालादिस्पर्शनिमित्तकस्नानाङ्गतर्पणादिरहितमेव कार्यम् ।

अथ तदुत्तरदिनकृत्यं वायवीये—

फल्गुतीर्थे चतुर्थेऽह्नि स्नानादिकमथाऽऽचरेत् ।
गयाशिरस्यथ श्राद्धपदे कुर्यात्सपिण्डकम् ॥
साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रयं कृतम् ।
क्रौञ्चपादात्फल्गुतीर्थं यावत्साक्षाद्गयाशिरः ॥
गयाशिरनगाद्योऽत्र साक्षात्तत्फल्गुतीर्थकम् ।
मुखं गयासुरस्यैतत्तस्माच्छ्राद्धमिहाक्षयम् ॥
आद्यो गदाधरो देवो व्यक्ताव्यक्तात्मना स्थितः ।
विष्ण्वादिपदरूपेण पितॄणां मुक्तिहेतवे ॥
तत्र विष्णुपदं दिव्यं दर्शनात्पापनाशनम् ।
स्पर्शनात्पूजनाच्चैव पितॄणां मोक्षकारणम् ॥
श्राद्धं सपिण्डकं कृत्वा कुलसाहस्रमात्मनः ।
विष्णुलोकं समुद्धृत्य नयेद्विष्णुपदं नरः
श्राद्धं कृत्वा रुद्रपदे नयेत्कुलशतं नरः ॥
सहाऽऽत्मना शिवपुरं तथा ब्रह्मपदे नरः ।
ब्रह्मलोकं कुलशतं समुद्धृत्य नयेत्पितॄन् ॥
दक्षिणाग्निपदे श्राद्धी वाजपेयफलं लभेत् ।
गार्हपत्यपदे श्राद्धी राजसूयफलं लभेत् ॥
श्राद्धं कृत्वाऽऽहवनीये वाजपेयफलं लभेत् ।
श्राद्धं कृत्वा सभ्यपदे ज्योतिष्टोमफलं लभेत् ॥
आवसथ्यपदे श्राद्धी सोमलोकमवाप्नुयात् ।
श्राद्धं कृत्वा शक्रपदे चेन्द्रलोकं नयेत्पितॄन् ॥
श्राद्धी सूर्यपदे पञ्चपापिनोऽर्कपुरं नयेत् ।
कार्तिकेयपदे श्राद्धी शिवलोकं नयेत्पितॄन् ॥
श्राद्धं कृत्वाऽगस्त्यपदे ब्रह्मलोकं नयेत्पितॄन् ।
कश्यपस्य पदे श्राद्धी पितॄन्ब्रह्मपदं नयेत् ॥
अन्येषां च पदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ।
सर्वेषां काश्यपं श्रेष्ठं विष्णो रुद्रस्य वै पदम् ॥

ब्रह्मणश्च पदं वाऽपि श्रेष्ठं तत्र प्रकीर्तितम् ।
प्रारम्भे च समाप्तौ च तेषामन्यतमं स्मृतम् ॥
श्रेयस्करं भवेत्तत्र श्राद्धं कर्तुश्च नारद ।

तथा—गयाशिरसि यः पिण्डं येषां नाम्ना तु निर्वपेत् ॥
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ।
गयाशिरसि यः पिण्डं शमीपत्रप्रमाणतः ॥
कन्दमूलफलाद्यैर्वा दद्यात्स्वर्गं नयेत्पितॄन् ।
पदानि यत्र दृश्यन्ते विष्ण्वादीनां तदग्रतः ॥
श्राद्धं कृत्वा तेषु पिण्डांस्तेषां लोकान्नयेन्नरः ।
सर्वत्र मुण्डपृष्ठाद्रिः पदैरेभिः सुलक्षितः ॥
प्रयान्ति पितरः सर्वे ब्रह्मलोकमनामयम् ॥ इति ।

चतुर्थेऽह्नीति । पञ्चतीर्थादिनाच्चतुर्थे । अस्मिंश्च फल्गुस्नाने 'फल्गुतीर्थे पुण्यजले करोमि स्नानमादृतः' इति मन्त्रपाठादिः पञ्चतीर्थीप्रकरणोक्तः स्नानविधिः केनचिदुपन्यस्तस्तदयुक्तम् । प्रकरणेन पञ्चतीर्थ्यन्तर्गतफल्गुतीर्थस्नान एव निवेशात् । राजसूयबहिर्भूतब्राह्मणादिकर्तृकावेष्टौ राजसूयान्तर्गतावेष्टिधर्मातिदेशकनामलिङ्गवदत्र धर्मातिदेशकामावाच्च । फल्गुतीर्थस्नानत्वरूपसमानधर्मेणातिदेशे यावज्जीवं गयावासिनां प्रात्यहिकतत्रत्यस्नानेऽपि प्रसङ्गात् । तस्मात्पदश्राद्धाद्यधिकारसिध्यपेक्षितशुचितासंपादकमिदं स्नानं प्रात्यहिकनित्यस्नानविधिनैव कार्यं तत्तु पञ्चतीर्थ्यन्तर्गतफल्गुतीर्थस्नानविधिनेति सिद्धम् । गयाशिरसीति । अथ स्नानानन्तरं गयाशिरसि यानि पदानि तत्र श्राद्धं कुर्यात् । पद इत्येकवचनं पदत्वाभिप्रायेण । साक्षादिति । फल्गुतीर्थाश्रयं तत्समीपस्थं गयाशिरस्तत्साक्षादतिप्रशस्तं कृतं ब्रह्मादिभिरित्यर्थः । क्रोशमितत्वेऽप्यस्यायं प्रदेशोऽतिप्रशस्त इति भावः । तस्य प्रमाणमाह—क्रौञ्चपादादिति । क्रौञ्चपादो मुण्डपृष्ठाद्रिः । क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत् । 'तस्य पादाङ्कितो यस्मात्क्रौञ्चपादस्ततः स्मृतः' इति वायवीयोक्तेः । ततश्च पश्चिमदिश्यवधिभूतं क्रौञ्चपादमारभ्य प्राग्दिशि फल्गुतीर्थं यावत्तत्पर्यन्तं प्रशस्तं गयाशिर इत्यर्थः । गयाशिरेति । अनन्तरोक्तगयाशिरस्थप्रेतशिलास्थनगाद्रेश्च मध्ये साक्षात्फल्गुतीर्थं प्रशस्तम् । फल्गुतीर्थमिति मध्यशब्दाध्याहारेण योज्यम् । प्रशस्तत्वे हेतुः—मुख-

मिति । प्रशस्तत्वोक्तेः फलमाह—तस्मादिति । व्यक्ताव्यक्तेति । प्रतिमास्वरूपी व्यक्तः पदरूपेण चाव्यक्त इत्यर्थः । श्राद्धमिति । विष्णुपदे श्राद्धं कृत्वा कुलसहस्रं समुद्धृत्य विष्णुलोकं नयेदिति संबन्धः । सहस्रमेव साहस्रम् । तथा ब्रह्मपद इति । श्राद्धं कृत्वेत्यनुपङ्गः । पञ्चपापिन इति । पञ्चमहापातकिनः । अन्येषामिति क्रौञ्चगणेश्वरादीनाम् । अत एवोक्तं वायवीय एव—

विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमम् ।
कश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ॥
पञ्चाग्नीनां पदान्यत्र इन्द्रागस्त्यपदे परे ।
रवेश्व(श्च) कार्तिकेयस्य क्रौञ्चमातङ्गकस्य च ।
मुखलिङ्गानि सर्वाणि पदानीति निबोधत ॥ इति ।

अग्निपुराणे—

आवसथ्यस्य चन्द्रस्य सूर्यस्य च गणस्य च ।
अगस्तेः कार्तिकेयस्य श्राद्धी तारयते कुलम् । इति ॥

अत्र पद इत्यनुवर्तते । अन्यत्र तु सभ्यावसथ्यपदे न गण्येते गण्यन्ते च सोमक्रौञ्चगणेशपदानीत्येवं चतुर्दशोक्तानि । तदुक्तम्—

ईशानविष्णुकमलासनकार्तिकेय—
वह्नित्रयार्करजनीशगणेश्वराणाम् ॥
क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां
पादान्नमामि सततं पितृमुक्तिहेतून् । इति ॥

सर्वेषामिति । श्रेष्ठं ततश्चैतदन्यतमदादौ भवतीत्यर्थः । प्रारम्भे चेति । अत्र वायवीयपर्यालोचनया चतुर्णामाद्यन्तश्राद्धे विकल्प एव । गारुडे तु रुद्रपदमुपक्रम्य श्राद्धमुक्तम्—

फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम् ।
कृत्वा श्राद्धं गयाशीर्षे कुर्याद्रुद्रपदादिह ॥ इति ।

अग्निपुराणेऽप्ययमेव क्रमः । अन्येषां तु पदानां यथापाठमेव क्रमः । अतअथ वाऽग्निवायुगरुडपुराणेषु भिन्नभिन्नक्रमोक्तेरनियम एव । अतएवाग्निपुराण उक्तम्—

क्रमतोऽक्रमतो वाऽपि गयायात्रा महाफला इति ।

श्रेयस्करमिति । श्रेयो मुक्तिः 'श्रेयो निःश्रेयसामृतम्' इति कोशात् । ततश्च तत्र पदेषु श्राद्धं कर्तुश्चकारात्पित्रादेः कर्मीभूतस्य च मोक्षदमि-

त्यर्थः । अत्र पदेषु प्रथमेऽह्नि सक्तुपिण्डाः । द्वितीये तिलगुडपिण्डाः । तृतीये पायसपिण्डाः । चतुर्थे दुग्धेन तर्पणम् । पञ्चमे दीपदानमिति पञ्च दिनानि कृत्यम् । अनवकाशे तु द्वित्रिष्वेकस्मिन्वाऽहनि कृत्यपञ्चकं कार्यमिति दाक्षिणात्याचारः । गयाशिरसीति । अत्र कश्चिदेताभ्यां वचनाभ्यां गयाशिरःश्राद्धमोक्षस्वर्गफलार्थत्वबोधनाद्यत्र क्वापि गयाशिरे गदाधरावासप्रदेशो फलद्वयोद्देशेन पदपिण्डदानातिरिक्तं पिण्डदानद्वयं कार्यमित्याह तन्न । गयाशिरःश्राद्धस्य पदश्राद्धेनैव समानदेशकालकर्तृकेण प्रसङ्गान्निर्वाहात, व्याप्यतीर्थश्राद्धेन व्यापकतीर्थश्राद्धसिद्धेः प्रघट्टक उक्तत्वाच्च । न च पदगयाशिरःश्राद्धयोः पृथक्फलश्रवणादेकप्रयोगेण चानेकफलजनने योगसिद्धिन्यायविरोधात्पृथगनुष्ठानमिति वाच्यम् । गयाशिरःक्रोडीकृत एव पदादौ सफलश्राद्धविधानात्तन्न्यायविरोधाभावात् । माघक्रोडकृतरथसप्तमीस्नानवदपरपक्षक्रोडीकृतत्रयोदश्यादिश्राद्धवच्च । प्रपञ्चितं चैतत्प्रयागमुण्डनप्रकरण एवेति नेह तन्यते । किंच गयाशिरसि यः पिण्डं पदे कुर्यादित्युपक्रम्य मध्ये पदश्राद्धान्यभिधाय गयाशिरसि यः पिण्डमित्याद्युपसंहृतम् । अत उपक्रमोपसंहाराभ्यामपि न पदश्राद्धातिरिक्तं गयाशिरःश्राद्धमनुष्ठेयम् । अन्ये तु पदश्राद्धातिरिक्तं गयाशिरःश्राद्धं नास्त्येव तेन न मन्त्रं न वा प्रसङ्गः फलान्तरश्रवणं तु पदश्राद्ध एव फलविकल्पार्थमित्याहुः ।

अथैतदुत्तरदिनकृत्यं वायवीये—

पञ्चमेऽह्नि गदालोले कृत्वा स्नानादि पूर्ववत् ।
श्राद्धं सपिण्डकं कुर्यात्ततोऽक्षयवटे नरः ॥
तत्र श्राद्धादिकं कृत्वा पितॄन्ब्रह्मपुरं नयेत् ।
ब्रह्मप्रकल्पितान्विप्रान्भोजयेत्पूजयेदथ ॥
कृतश्राद्धोऽक्षयवटे ह्यन्नेनैव प्रयत्नतः ।
दृष्ट्वा नत्वा च संपूज्य वटेशं च समाहितः ॥
पितॄन्नयेद्ब्रह्मपुरमक्षयं च सनातनम् ।
गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम् ।

तथा—नयेत्पितॄन्ब्रह्मपदं नत्वा तं प्रपितामहम् ॥ इति ।

पञ्चमेऽह्नीति । पञ्चतीर्थादिनात्पञ्चमे । फल्गुप्रवाह एव गदालोलतीर्थं वर्तते । तत्स्वरूपं च तत्रैव—

हेत्यासुरस्य शीर्षं तु गदया यद्द्विधा कृतम् ।
यतः प्रक्षालिता तीर्थं गदालोलं ततः स्मृतम् ॥ इति ।

हेतिनामकस्यासुरस्य शिरो भित्त्वा यत्र गदा प्रक्षालिता गदाधरेण तद्गदालोलं तीर्थमित्यर्थः । तत्र स्नाने मन्त्रः—

गदालोले महातीर्थे गदाप्रक्षालने वरे ।
स्नानं करोमि शुद्ध्यर्थमक्षयाय स्वराप्तये ॥ इति ।

अयं च प्राकृतसकलमन्त्रान्ते पठनीय आगन्तूनामन्ते निवेश इति न्यायात् । आदिशब्दात्तर्पणसंग्रहः । पूर्ववदिति । सकलगयाश्राद्धप्रकृतिभूतप्रेतपर्वतवच्छ्राद्धं कुर्यादित्युत्तरत्रान्वयः । ततोऽक्षयवटे नरः श्राद्धं कुर्यादित्यनुपद्यते । तत्र श्राद्धादिकमिति पूर्वविहितश्राद्धस्यैवानुवादः फलकीर्तनार्थः । ब्रह्मप्रकल्पितब्राह्मणभोजनं चेदं तानाहवनीयस्थाने कृत्वा श्राद्धमध्य एव न तु भिन्नम् । अत एवाग्निपुराणे—

ये युष्मान्पूजयिष्यन्ति गयायामागता नराः ।
हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ॥
नरकात्स्वर्गलोकाय स्वर्गलोकात्परां गतिम् ।

इति ब्रह्मणा वरप्रदाने श्राद्धपूजनीयत्वस्योक्तिरेषा । ततश्च श्राद्धे यावन्तोऽपेक्षिताः शक्याश्च तावत्स्वेव बहुवचनं नेयं न तु कपिञ्जलन्यायेन त्रित्वपरम् । उत्तरास्विव वाक्यशेपस्य श्राद्धीयब्राह्मणसंख्याविधायकवचनस्यात्र तदपवादकत्वात् । यदप्यक्षयवटप्रकरणे 'एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता' इति वचनं तदप्यस्यैवाक्षयवटश्राद्धीयब्रह्मप्रकल्पितविप्रसंतानजविप्रभोजनस्य स्तुत्यर्थमनुवादकम् , एकं वृणीते द्वौ वृणीत इतिवत् । न तु स्वतन्त्रैकविप्रभोजनफलबोधकं विधिविभक्त्यभावात् । यं यं क्रतुमधीते तेन तेन ह्यस्येष्टं भवतीतिवद्वटश्राद्धप्रकरणाच्च पारार्थ्यनिश्चयाद्रात्रिसत्रन्यायानवतारात् । तेन यत्केनचिदुक्तं वटश्राद्धानन्तरं ब्रह्मप्रकल्पितब्राह्मणत्रयं पितृब्रह्मलोकनयनफलार्थं तदनन्तरं चैकब्राह्मणभोजनमप्यार्थवादिकफलार्थं कार्यमिति तत्परिभावनीयमेव । अत्र च वटश्राद्धे गयास्थब्राह्मणनियमस्तल्लाभे, तदलाभे ब्राह्मणान्तरमपि भोज्यम् । वटश्राद्धातिरिक्तश्राद्धे त्वनियम इति पूर्वमेवोक्तम् । कृतश्राद्ध इति । एतस्य पितॄन्नयेदित्यग्रेऽन्वयः । अत्र च श्राद्धमुद्दिश्यान्नस्याऽऽवश्यकता विधीयते तेन गयाश्राद्धान्तराणि यथालाभमामादिनाऽपि

कार्याणि वटश्राद्धं तु पाकेनैव कार्यमित्यर्थः। दृष्ट्वेति। ततो वटेशं दृष्ट्वा—

एकार्णवे वटस्याग्रे यः शेते योगनिद्रया।
बालरूपधरस्तस्मै नमस्ते योगशायिने॥

इतिमन्त्रेण नत्वा चोपचारैः पूजयेदित्यर्थः। वटेशं चेति। चकारा-दक्षयवटपितामहयोर्ग्रहणं तन्नतावग्रे मन्त्रोक्तेः। ततश्च

संसारवृक्षशस्त्रायाशेषपापक्षयाय च।
अक्षयब्रह्मदात्रे च नमोऽक्षयवटाय वै।

इतिमन्त्रेण वटं नत्वा पूजयेत्। ततः—

कलौ माहेश्वरा लोका येन तस्माद्गदाधरः।
लिङ्गरूपोऽभवत्तं च वन्दे श्रीप्रपितामहम्॥

इतिमन्त्रेण प्रपितामहं नत्वा पूजयेदित्यर्थः। गयायामिति। अत्र वटप्रकरणे सत्यपि प्रसङ्गाद्गयादिश्राद्धेऽपि फलोक्तिर्दृष्टान्ततया। एवं सप्त दिनानि गयाकार्थं नियतम्। वक्ष्यमाणतीर्थानि तु सार्धमासवासे मासवासे वा तदन्तरा यथायोगं कार्याणि। तत्रापि वटश्राद्धं गयातीर्थानि कृत्वाऽन्ते कार्यम्। तत्र च तदग्रिमकर्माप्युत्कृष्यते तदाद्युत्कर्षन्यायात्। अनूयाजोत्कर्ष इवेति शिष्टाः। यद्यपि वाय्वग्निपुराणाद्यालोचनया दिनकृत्ये तीर्थान्तरकृत्ये च क्रमविसंवादो दृश्यते तथाऽपि वायुपुराण एव भूयस्त्वेनोभयश्रुतीतिन्यायेन गयाकृत्योत्पत्त्यवगमात्तदनुसारेणैव क्रमः। यद्वा [ वा ] युपुराणान्तरस्थक्रमप्रतिपादकाथततःशब्दाद्यानर्थक्यपरिहाराय क्रमविकल्प एव। वस्तुतस्तु क्रमतो वाऽपि गयायात्रा महाफलेत्यग्निपुराणात्क्रमान्यत्वेऽपि न दोषः। अज्ञातक्रमपुरुषाधिकारिकं चेदं वचनं ज्ञेयम्। सर्वथाऽपि तु प्रेतशिलाकार्थं प्रथममेव तत्र तथानियमस्य पूर्वमुक्तत्वात्।

इति नारायणभट्टविरचिते त्रिस्थलीसेतौ गयाप्रकरणे
नियतसप्तदिनकृत्यम्।

अथानियतदिनकर्तव्यानि गयास्थनानातीर्थान्यनेकपुराणालोचनयोच्यन्ते। तत्र वायुपुराणे तावत्—

उपोषितोऽथ गायत्रीतीर्थे महानदीस्थिते।
गायत्र्याः पुरतः स्नात्वा प्रातः संध्यां समाचरेत्॥

श्राद्धं सपिण्डकं कृत्वा नयेद्ब्राह्मणतां कुलम् ।
तीर्थे समुद्यते स्नात्वा सावित्र्याः पुरतो नरः ॥
संध्यामुपास्य मध्याह्ने नयेत्कुलशतं दिवम् ।
प्राचीसरस्वतीस्नातः सरस्वत्यास्ततोऽग्रतः ॥
संध्यामुपास्य सायाह्ने नयेत्सर्वज्ञतां कुलम् ।
बहुजन्मकृतात्संध्यालोपान्मुक्तस्त्रिसंध्यकृत् ॥
विशालायां लेलिहाने तीर्थे च भरताश्रमे ।
पादाङ्किते मुण्डपृष्ठे गदाधरसमीपतः ॥
तीर्थ आकाशगङ्गायां गिरिकर्णमुखेषु च ।
श्राद्धदः पिण्डदो ब्रह्मलोकं कुलशतं नयेत् ॥
स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत् ।
देवनद्यां गोप्रचारे श्राद्धदः स्वर्नयेत्पितॄन् ॥
पुष्करिण्यां घृतकुल्यां मधुकुल्यां तथैव च ।
पुष्करिण्यां गदालोले तीर्थे चामरके तथा ॥
कोटितीर्थे रुक्मकुण्डे पिण्डदः स्वर्नयेत्पितॄन् ।
मार्कण्डेयेशकोटीशौ नत्वा स्यात्पितृतारकः ॥

उपोषित इति । प्राग्दिने कृतोपवासोऽथ प्रातर्गयाग्राममध्यस्थगायत्रीसंमुखप्राग्देशे महानदीस्थे गायत्रीतीर्थे स्नानसंध्यावन्दनश्राद्धानि कुर्यादित्यर्थः । स्नानादित्रयसमुदायस्यात्र कुलब्राह्मणतासंपादनं फलम् । फलाकाङ्क्षायां स्नानसंध्ययोरपिशब्दोपस्थितत्वेन लाघवात्तस्यैवान्वयान्नतु स्वर्गः कल्पनागौरवात् । एवमुत्तरयोरपि । प्राचीसरस्वतीस्नात इत्येकं पदम् । बहुजन्मेति । तीर्थत्रये संध्यात्रयमात्रे फलान्तरमिदम् । विशालायामिति । विशालादितीर्थसप्तकमध्येऽन्यतरस्मिञ्श्राद्धपिण्डदानाभ्यां पितृब्रह्मलोकनयनं भवतीत्यर्थः । स्नात इति । स्नात्वा गोदो गोदाता । त्रिःसप्तकुलमेकविंशतिकुलम् । गोदे वैतरण्यामिति पाठे गोदे तीर्थे । अत्र

या सा वैतरणी नाम नदी त्रैलोक्यविश्रुता ।
साऽवतीर्णा महाभागा पितॄणां तारणाय वै ॥

इतिमन्त्रेण वैतरण्यास्तरणमपि कार्यमाचारात् । देवनद्यामिति । नव तीर्थानि । शेषं स्पष्टम् । अथ पाण्डुशिलादि तत्र वायवीये—सुवर्णपारिजातकवने सपार्वतीकः शंकरोऽयुतं वर्षाणि रेमे । ततः कदाचिन्म-

रीचिस्तद्वनं फलपुष्पाद्यर्थं प्रविष्टः स च महेशेन शप्तो यस्मात्त्वं मम सुखविघातं कृतवांस्तस्माद्वने दुःखी भवेति । ततो मरीचिना स्तुतस्तुष्टः शंकरो मम शापमुक्तिं कुर्विति तेन प्रार्थितो गयायां ते शापान्तो भवितत्युक्तो गयां गत्वा शिलायां दुश्चरं तपस्तेपे । तेन तपसा स पाण्डुरवर्णोऽभूत् । ततो ब्रह्मविष्ण्वादिभिरागत्योक्तं वरं वृणीष्वेति। ततो मरीचिराह—

हरशापाद्विमुक्तोऽहं शिला भवतु पावनी ।
पितृमुक्तिकरी च स्यात्तथेत्युक्त्वा दिवं ययुः ॥
पाण्डुशिलेति सा प्रोक्ता श्राद्धं तत्राक्षयं भवेत् ।
तथा—युधिष्ठिरस्तथा कर्तुं पितृकार्यं तु तां ययौ ॥
श्राद्धकाले पाण्डुनोक्तं मद्धस्ते देहि पिण्डकम् ।
हस्तं त्यक्त्वा शिलायां वै पिण्डदानं चकार सः ॥
शिलायां पिण्डदानेन प्रहृष्टो व्यासनन्दनः ।
वरं ददौ स पुत्राय राज्यं कुरु महीतले ॥
अकण्टकं तु संपूर्णमेकच्छत्रं तु पुत्रक ।
स्वर्गं व्रज शरीरेण नरकस्थान्दिवं [न] य ॥
इत्युक्त्वा प्रययौ पाण्डुः शाश्वतं पदमव्ययम् । इति ।

तथा चान्यस्यापि तत्र श्राद्धादिदमेव फलमिति तात्पर्यम् । इयं च पाण्डुशिला पितामहसमीपस्थे चम्पकवनेऽस्ति ।

तथा—घृतकुल्या मधुकुल्या देविका च महानदी ।
शिलायां संगतास्तत्र मधुस्रवाः प्रकीर्तिताः ॥
अयुतं ह्यश्वमेधानां स्नानकृल्लभते नरः ।
तर्पयित्वा पितॄणां च श्राद्धं कृत्वा सपिण्डकम् ॥
सहस्रकुलमुद्धृत्य नयेद्विष्णुपदं नरः ।
उद्भिज्जाः स्वेदजा वा ये ह्यण्डजा ये जरायुजाः ॥
मधुस्रवां समासाद्य मृता विष्णुपुरं ययुः ।

घृतकुल्येति । एताश्चतस्रोऽपि मुण्डपृष्ठाद्दक्षिणतः शिलासंगता मधुस्रवापदवाच्या भवन्तीत्यर्थः । ययुर्यान्तीत्यर्थः ।

तथा—दशाश्वमेधिके हंसतीर्थे श्राद्धी दिवं व्रजेत् ।
दशाश्वमेधहंसौ च नत्वा शिवपुरं व्रजेत् ॥

पितामहाद्दक्षिणतो महानद्यां दशाश्वमेधः ।

मातङ्गस्य पदे श्राद्धी नयेद्ब्रह्मालयं पितॄन् ॥
निर्मथ्याग्निं शमीगर्भे विधिर्विष्ण्वादिभिः सह ।
मथोकुण्डं हि तत्तीर्थं पितॄणां मुक्तिदायकम् ॥
तर्पणात्पिण्डदानाच्च स्नानकृन्मुक्तिमाप्नुयात् ।

मथोकुण्डमुद्यन्तपर्वतनिकटे ॥

पितॄन्स्वर्गे नयेन्नत्वा रामेशाङ्गारकेश्वरौ ।
गयाकूपे पिण्डदानादश्वमेधफलं लभेत् ॥

गयाकूपे पतितादीनामपि पित्रादीनां मरणवर्षोत्तरवत्सरादौ श्राद्धं कार्यम् । तदुक्तं ब्रह्मपुराणे—

क्रियते पतितानां तु गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिः ॥
मार्तण्डपादकूपे वा श्राद्धं हरिहरं स्मरन् । इति ।

स्मरन्निति तृतीयाबहुवचनार्थे प्रथमैकवचनम् । अत्र पतितशब्देन सर्वे दुर्मरणमृताः पातकिनश्च गृह्यन्ते । तदुक्तं तत्रैव—

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः ।
सुदूरात्परिहर्तव्यः कुर्वन्क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन्हतश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् ॥
परदारान्रमन्तश्च द्वेषात्तत्पतिभिर्हताः ।
असमानैस्तु संकीर्णैश्चाण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहताः शश्वच्चाण्डालादीन्समाश्रिताः ।
शराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः ॥
क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
कुशिल्पजीविनो ये च सूनालंकारकारिणः ।
मुखेभगास्तु ये केचित्क्लीबप्राया नपुंसकाः ॥
ब्रह्मदण्डहता ये तु ये चापि ब्राह्मणैर्हताः ।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥ इति ।

शरो नालिकेरजलकर्पूरकृतः पानकविशेषोऽवान्तरविषरूपस्तद्दाता।

शरदः। सूना वधस्थानं शूलादि तत्रालंकरकारिणस्तदधिकृतास्त्रैवर्णिकाः सन्त इत्यर्थः। ब्रह्मदण्डहता ब्राह्मणशापहताः। अन्यत्स्पष्टम्।

तथा—भस्मकूपे भस्मनाऽथ स्नात्वा तारयते पितॄन्।
धौतपादथ निःक्षीरासंगमे स्नानकृन्नरः॥
श्राद्धी रामपुष्करिण्यां ब्रह्मलोकं नयेत्पितॄन्।
सुषुम्नायां महाकाल्यां त्रिःसप्तकुलमुद्धरेत्॥

सुषुम्ना गयाग्राममध्ये।

स्नातो नत्वा वसिष्ठेशं तस्य तीर्थेऽश्वमेधभाक्।

गृध्रवटोत्तरे वसिष्ठेश्वरस्तत्तीर्थे।

इष्टिं चक्रेऽश्वमेधाख्यां वसिष्ठो मुनिसत्तमः॥
इष्टितो निर्गतः शंभुर्वरं वृणु वसिष्ठक।
प्राहेति तं वसिष्ठोऽपि शिव तुष्टोऽसि मे यदि॥
वस्तव्यं सर्वदैवात्र तथेत्युक्त्वा शिवः स्थितः।
पिण्डदो धेनुकारण्ये कामधेनुपदेषु च॥
स्नातो नत्वा कामधेनुं ब्रह्मलोकं नयेत्पितॄन्।
कर्दमाले गयानाम्नी मुण्डपृष्ठसमीपतः॥
स्नात्वा श्राद्धी नयेत्स्वर्गं पितॄन्नत्वा च चण्डिकाम्।
फल्गूचण्डीश्मशानाख्यसंगमेशान्समर्च्य च॥

पितॄन्स्वर्गं नयेदित्यनुषङ्गः।

गयागजो गयादित्यो गाय [त्री] च गदाधरः॥
गया गयाशिरश्चैव षड्गया मुक्तिदायिकाः।
एते षट् पूजापिण्डदानाभ्यां गयायां मुक्तिदायका इत्यर्थः॥
गयायां तु वृषोत्सर्गात्त्रिःसप्तकुलमुद्धरेत्।
यत्र तत्र स्थिता देवा ऋषयो विजितेन्द्रियाः॥
आद्यं गदाधरं ध्यायञ्श्राद्धपिण्डादिना ततः।
कुलानां शतमुद्धृत्य ब्रह्मलोकं नयेत्पितॄन्॥

यतो यत्र तत्र देवादयः स्थितास्तत इति संबन्धः।

ततो दध्योदनेनैव दत्त्वा नैवेद्यमुत्तमम्॥
जनार्दनाय देवाय संपूज्य च यथाविधि।
दद्याद्दक्षिण्यपिण्डांस्तु तच्छेषेणैव जीवताम्॥

तच्छेषेण दध्योदनशेषेण ।

तथा—जनार्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः ॥
मन्त्रेण चाऽऽत्मनोऽन्येषां सव्येनापि तिलैर्विना ।
जीवतां दधिसंमिश्रः सर्वे ते विष्णुलोकगाः ॥
आत्मानं पितृभिः सार्धं विष्णुलोकं नयेन्नरः ।

मन्त्रश्च—

एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
गयाश्राद्धं त्वया देयं मह्यं देव मृते मयि ॥
यस्तु पिण्डो मया दत्तस्त्वामुद्दिश्य जनार्दन ।
देहि देव गयाशीर्षे तस्मै तस्मै मृते तु तम् ॥
जनार्दन नमस्तुभ्यं नमस्ते पितृरूपिणे ।
पितृपात्र नमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥
नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचन ।
लक्ष्मीकान्त नमस्तुभ्यं नमस्ते पितृमोक्षद ॥ इति ।
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥
वामजानु च संपात्य नत्वा भीमो जनार्दनम् ।
श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्विष्णुलोकभाक् ।

भ्रातृभिर्युधिष्ठिरादिभिः सहेति सहार्थे तृतीया । अत्र वक्तव्यं प्रागेवोक्तम्—

तथा—रामे वनगते शैलमालभ्य भरतः स्थितः ।
पित्रे पिण्डादिकं दत्त्वा रामेशं स्थाप्य तत्र च ॥
तत्र स्नात्वाऽथ रामेशं रामं सीतासमन्वितम् ।
तत्र श्राद्धं सपिण्डं च कृत्वा विष्णुपुरं व्रजेत् ॥
पितृभिः सह धर्मात्मा कुलानां च शतैः सह ।

महानदीपरपारस्थभरताश्रमसंनिधाने महानद्यां स्नात्वा रामेशरामसीता दृष्ट्वा रामपदे सपिण्डं श्राद्धं कार्यमित्यर्थः ।

शिलादक्षिणहस्ते च स्थापितः कुण्डपर्वतः ॥
तत्र श्राद्धादिना सर्वान्पितॄन्ब्रह्मपुरं नयेत् ।
कुण्डेनाथ तपस्तप्तं सीताद्रेर्दक्षिणे गिरौ ।

तथा—मतङ्गस्य पदे पुण्ये पिण्डदः स्वर्नयेत्पितॄन् ॥
वामहस्ते शिलायाश्च ह्युद्यन्तो निहितो गिरिः ।
आनीतो ह्युदयाद्रेः स अगस्त्येन महात्मना ॥
स्थापितः पिण्डदस्तत्र पितॄन्ब्रह्मपुरं नयेत् ।
कुण्डमुद्यन्तकं तत्र स्वात्मना तपसे कृतम् ॥
ब्रह्मा तत्र च सावित्रीकुमाराभ्यां स्थितस्त्विह ।
हाहाहूहूप्रभृतयो गीतनादं प्रचक्रिरे ॥
अगस्त्यो भगवान्यत्र तपश्चोग्रं चचार ह ।
ब्रह्मणस्तु वराल्लेभे माहात्म्यं भुवि दुर्लभम् ॥
लोपामुद्रां तथा भार्यां पितॄणां परमां गतिम् ।

माहात्म्यादिकं वरत्रयं लेभ इत्यर्थः ॥

स्नातस्तत्र च मध्याह्ने सावित्रीं समुपास्य च ।
कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥

तत्रोद्यन्तककुण्डे मध्याह्ने स्नात्वा सावित्रीनामिकां मध्याह्नसंध्यां कुर्यादित्यर्थः ।

अत्रागस्त्यपदे स्नात्वा पिण्डदो ब्रह्मलोकगः ।
पितृभिः सह धर्मात्मा पूज्यमानो दिवौकसैः ॥

तथा—ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः ।
परं ब्रह्म स यातीह विमुक्तो योनिसंकटात् ।
नत्वा गयाकुमारं च ब्राह्मण्यं लभते नरः ॥
सोमकुण्डाभिषेकाद्यैः सोमलोकं नयेत्पितॄन् ।

अभिषेकः स्नानम् । आदिपदात्तर्पणश्राद्धपिण्डदानानि ।

बलिः काकशिलायां च काकेभ्यः क्षणमोक्षदः ॥

क्षणमोक्षदः सद्योमोक्षदः ।

स्वर्गद्वारेश्वरं नत्वा स्वर्गाद्ब्रह्मपुरं व्रजेत् ।

प्रथमं स्वर्गं प्राप्य ततो ब्रह्मपुरं व्रजेदित्यर्थः ॥

पिण्डदो व्योमगङ्गायां निर्मलत्वं नयेत्पितॄन् ।
शिलाया दक्षिणे हस्ते भस्मकूटमधारयत् ॥
धर्मोऽजस्तत्र च हरस्तत्र स[त्र]मकारयत् ।
यतोऽसौ भस्मकूटाद्रिर्भस्मस्नानात्तु नाकदः ॥

तत्रत्यभस्मस्नानादित्यर्थः ।

वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः ।
तदग्रे रुक्मिणीकुण्डं तस्याग्रे कपिला नदी ॥
कपिलेशो नदीतीरे अमासोमसमागमे ।
कपिलायां नरः स्नात्वा कपिलेशं नमेद्यजेत् ॥

यजेत्पूजयेत् ।

श्राद्धदः स्वर्गभागी स्यान्महेशीकुण्ड एव च ।
गौरी च मङ्गला तत्र सर्वसौभाग्यदायिनी ॥

तथा—शिलाया वामपादे तु प्रेतकूटो गिरिर्धृतः ।
धर्मराजेन पादाद्यो गिरिः प्रेतशीलाश्रयः ॥
पादेन दूरे निक्षिप्तः शिलायाः पापभावतः ।
प्रेतभावस्वरूपेण करग्रहणकानने ॥
पृथक्स्थिताश्च बहवो विघ्नकारिण एव च ।
श्राद्धा[दि]करणं नृणां तीर्थे पितृविमुक्तिदम् ॥
गतः शीलादिसंपर्कात्प्रेतकूटः पवित्रताम् ।
प्रेतकुण्डं च तत्राऽऽस्ते देवास्तत्र पदैः स्थिताः ॥
श्राद्धपिण्डादिकात्तत्र पितॄन्ब्रह्मपुरं नयेत् ।
शिला दक्षिणपादे तु गृध्रकूटो गिरिर्धृतः ॥
धर्मराजेन तत्स्थैर्यकरणाय तु पावनः ।
गृध्ररूपेण संसिद्धास्तपः कृत्वा महर्षयः ॥
अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः शिवः ।
दृष्ट्वा गृध्रेश्वरं स्नात्वा याति शंभोः पुरं नरः ॥
तत्र गृध्रवटं नत्वा प्राप्तकालो दिवं व्रजेत् ।
तत्र गृध्रगुहायां च श्राद्धदः पितृलोकभाक् ॥
ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत् ।
आदिपादेन गिरिणा समाक्रान्तशिलोदरम् ॥
तत्राऽऽस्ते गजरूपेण विघ्नेशो विघ्ननायकः ।
तं दृष्ट्वा मुच्यते विघ्नैः पितॄञ्शिवपुरं नयेत् ॥
गायत्रीं च गयादित्यं स्नातो दृष्ट्वा दिवं व्रजेत् ।
ब्रह्माणं चाऽऽदिपादस्थं दृष्ट्वा स्यात्पितृतारकः ॥
नाभौ च पिण्डदो यस्तु पितॄन्ब्रह्मपुरं नयेत् ।

नितम्बे मुण्डपृष्ठस्य अरविन्दवनं त्वभूत् ॥
मुण्डपृष्ठारविन्दाद्री दृष्ट्वा पापं विनाशयेत् ।
क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत् ॥
तस्य पादाङ्कितो यस्मात्क्रौञ्चपादस्ततः स्मृतः ।
स्नातो जलाशये तत्र नयेत्स्वर्गं कुलत्रयम् ॥

अथाग्निपुराणे गयातीर्थानि—

गायत्र्यां च महानद्यां स्नानं संध्यां समाचरेत् ।
गायत्र्या अग्रतः प्रातः श्राद्धपिण्डमथाक्षयम् ॥
मध्याह्ने चोद्यते स्नात्वा गीतवाद्यादिनाऽप्यथ ।
सावित्रीपुरतः संध्यां पिण्डदानं च तत्पदे ॥
अगस्त्यस्य पदे कुर्याद्योनिद्वारं प्रविश्य च ।
निर्गतो न पुनर्योनिं प्रविशेन्मुच्यते भयात् ॥
बलिः काकशिलायां च कुमारं तु नमेत्ततः ।
स्वर्गद्वारे सोमकुण्डे वायुतीर्थे च पिण्डदः ॥
भवेदाकाशगङ्गायां कपिलायां च पिण्डदः ।
कपिलेशं शिवं नत्वा रुक्मकुण्डे च पिण्डदः ॥
कोटितीर्थं च कोटां च गत्वा सोमपदेऽन्नदः ।
गदालोले वामनके गोप्रतारेऽथ पिण्डदः ॥
स्नात्वा नरो वैतरण्यामेकविंशकुलोद्धृतिः ।
गोदः पिण्डप्रदाता स्यात्क्रौञ्चपादे च पिण्डदः ॥
तृतीयायां विशालायां निर्वापाक्षय्यपिण्डदः ।
ऋणमोक्षे पापमोक्षे भस्मकुण्डे च भस्मना ॥
स्नानकृन्मुच्यते पापान्नमेद्देवं जनार्दनम् ।
त्रयः पिण्डा मया दत्तास्तव हस्ते जनार्दन ॥
परलोकगते मह्यमक्षय्यमुपतिष्ठताम् ।
गयायां पितृरूपेण स्वयमेव जनार्दनः ॥
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।
मार्कण्डेयेश्वरं नत्वा नाम्ना सर्वेश्वरं नरः ।
गृध्रकूटे धौतपादे कादम्बिन्यां च पिण्डदः ॥
पुष्करिण्यां कर्दमाले रामतीर्थे च पिण्डदः ।

प्रभासेशं नमेत्प्रेतशिलायां पिण्डदो भवेत् ॥
दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः ।
प्रेतादिरूपमुक्ताः स्युः पिण्डैर्दत्तैर्मयाऽखिलाः ॥
स्थानत्रये शिलायां च गयाशिरसि यावता ।
प्रभासे प्रेतकुण्डे च पिण्डेता(ण्डस्ता)रयते कुलम् ॥
वसिष्ठेशं नमस्कृत्य तत्कुण्डे पिण्डदो भवेत् ।
गयानाभौ प्रसन्नायां गयाकोट्यां च पिण्डदः ॥
गदाधराग्रतो मुण्डपृष्ठचा देव्याश्च संनिधौ ।
मुण्डपृष्ठां नमेदादिक्षेत्रपालादिसंयुताम् ॥
पूजयित्वा भयं न स्याद्विषरोगादिनाशनम् ।
ब्रह्माणं च नमस्कृत्य ब्रह्मलोकं नयेत्कुलम् ॥
सुभद्रां बलभद्रं च संपूज्य पुरुषोत्तमम् ।
सर्वकामसमायुक्तः कुलमुद्धृत्य नाकभाक् ॥
माधवं पूजयित्वा तु देवो वैमानिको भवेत् ।
महालक्ष्मीं प्राप्य गौरीं मङ्गलां च सरस्वतीम् ॥
पितॄनुद्धृत्य स्वर्गस्थो मुक्तिभागोजसा सुधीः ।
द्वादशादित्यमभ्यर्च्य वह्निं रेवन्तसिन्दुकम् ॥
रोगादिमुक्तः स्वर्गीस्याच्छ्रीकपर्दिविनायकम् ।
प्रपूज्य कार्तिकेयं च निर्विघ्नः सिद्धिमाप्नुयात् ॥
सोमनाथं च कालेशं रामेशं ब्रह्मकेश्वरम् ।
अष्ट लिङ्गानि गुह्यानि पूजयित्वाऽथ सर्वभाक् ॥
नारायणं वराहं च नरसिंहं नमेच्छ्रिये ।
ब्रह्मविष्णुमहेशाख्यं त्रिपुराय महेश्वरम् ॥
सीतां रामं च गरुडं वामनं संप्रपूज्य च ।
सर्वकामानवाप्नोति ब्रह्मलोके नयेत्पितॄन् ॥
देवैः सार्धं च संपूज्य देवमादिगदाधरम् ।
ऋणत्रयविनिर्मुक्तस्तारयेत्सकलं कुलम् ॥
देवरूपा शिला पुण्या तस्माद्देवमयी शिला ।
गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ॥
फल्वीशं चैव चण्डीं च प्रणम्याङ्गारकेश्वरम् ।

मतङ्गस्य पदे श्राद्धी भरताश्रमके भवेत् ॥
हंसतीर्थे कोटितीर्थे यत्र पिण्डाशिलान्नदः ।
तत्र स्यादग्निधारायां मधुश्रवसि पिण्डदः ॥
इन्द्रेशं कपिलेशं च नमेद्वृद्धिविनायकम् ।
पिण्डदो धेनुकारण्ये पदे वै गोर्नमेच्च गाम् ॥
सर्वान्पितॄंस्तारयेच्च सरस्वत्यां च पिण्डदः ।
संध्यामुपास्य सायाह्ने नमेल्लक्ष्मीं सरस्वतीम् ॥
त्रिसंध्याकृद्भवेद्विप्रो वेदवेदाङ्गपारगः ।
गयां प्रदक्षिणीकृत्य विप्रान्संपूज्य तर्प्य च ॥
अन्नदानादिकं सर्वं कृतं तत्राक्षयं भवेत् ।

स्मृतिरत्नावल्याम्—

महानदी ब्रह्मसदो वटश्च प्रभासमुद्यन्तमथो गयाशिरः ।
सरस्वती धेनुका धर्मपृष्ठमेते कुरुक्षेत्रसमा गयायाम् ॥
तथा—दिवौकसां पुष्करिणीं समासाद्य जितेन्द्रियः ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥

वाजपेयं तत्फलं लक्षणया ।

अथ माघपदं गच्छेद्ब्रह्मचारी दृढव्रतः ।
तत्र माघपदे स्नात्वा वाजपेयफलं लभेत् ॥
तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ ।
तत्राभिषेकं कुर्वीत तीर्थकोट्यां बुधो नरः ॥
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ।

अभिषेकः स्नानं पुण्डरीकं यागविशेषफलम् ॥

तथा—ब्रह्मणः सरसि राजेन्द्र ब्रह्मणा यूप उच्छ्रितः ।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥
तथा—तत्र पुष्करिणी रम्या सुषुम्ना नाम नामतः ।
श्राद्धं भवति चानन्तं तत्र दत्तं महोदये ॥
तथा—कनकेशं च केदारं नारसिंहं च वामनम् ।
रथमार्गं समभ्यर्च्य पितॄन्सर्वान्स तारयेत् ॥

तथोद्यन्तं प्रकृत्य—

योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ ।

तत्र गत्वा विमुच्येत पुरुषो योनिसंकटात् ।

तथा तत्रैव पञ्चदिनान्येव गयाकृत्यमुक्तम्—

वाप्यां स्नानं मतङ्गस्य धर्मपृष्ठे परेऽहनि ।
श्राद्धपिण्डौ ततः कार्यौ मध्याह्ने कूपयूपयोः ॥
ब्रह्मणः सरसि स्नात्वा कृत्वा यूपं प्रदक्षिणम् ।
तृतीयदिवसे कुर्याच्छ्राद्धं पिण्डावसेचनम् ॥
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः ।
अक्षयाल्लँभते लोकान्कुलं चैव समुद्धरेत् ॥
गयाशिरसि तत्कुर्याच्छ्राद्धपिण्डौ चतुर्थके ।
पञ्चमे दिवसे गच्छेद्वटमक्षयसंज्ञकम् । इति ॥

अत्र पुराणान्तरे क्रमान्यत्वेऽपि भूयस्त्वन्यायेन वायवीय एवोत्पत्तेस्तदनुसार एव कार्य इति प्रागेवोक्तम् । विशकलिततीर्थान्यपि यथावकाशं वायवीयोक्तक्रमेण कार्याणि । यद्वा यथेच्छं येन केनचित्क्रमेण 'क्रमतोऽक्रमतो वाऽपि गयायात्रा महाफला' इत्याग्नेयोक्तेरित्यप्युक्तमेव । एवं गयाकृत्ये निर्व्यूढे ततो निर्गमनकाले गदाधरपूजास्तुतिप्रार्थनाः कार्याः 'स्तुत्वा संप्रार्थयेद्देवमादिदेवं गदाधरम्' इत्यग्निपुराणवचनात् । स्तुतिप्रार्थने प्रयोगे वक्ष्येते ।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचिते त्रिस्थलीसेतौ गयाप्रकरणे गयाकृत्यम् ।

इति गयाप्रकरणं समाप्तम् ।

समाप्तोऽयं त्रिस्थली सेतुः ।